चरणपङ्कजप्रवणमानसः **शार्ङ्गदेवः संगीतरत्नाकराख्यं** संगीतसारं लोकोपकाराय चिकीर्षुः निष्प्रत्यूहपरिसमाप्तये शिष्यप्रशिष्यद्वारा प्रचयगमनाय च सदाचारानुमितस्मृत्यनुमितश्रुतिविहितं विशिष्टेष्टदेवतानमस्काररूपं मङ्गलमाचरन् प्रसङ्गादभिधेयप्रयोजनसंबन्धांश्चैकेनैव श्लोकेन कथयति––**ब्रह्मग्रन्थिजेति**। ब्रह्मपदं सकलविघ्नविनाशनिघ्नहृदयं परमात्मानं स्मारयत्प्रथमनिवेशान्मङ्गलाचरणमपि भविष्यतीति [1]मन्वानो नादस्वरूपं मोक्षनिदानं प्रथमं ब्रह्मपदं प्रायुङ्क्त। **वन्दे** अभिवादये स्तौमि च, "वदि अभिवादनस्तुत्योः" **इत्यभिधानात्**। नमतिस्तौत्यादिप्रयोगे तु अन्यतरार्थ एव लभ्येत नोभयमिति वन्दतिप्रयोगः अत्र नमस्काराणां मानसिकवाचिककायिकत्वेन त्रैविध्यं विशेषणानुपादानात् लभ्यते।

अथवा, [2]प्रथमचरणगतेन **चित्तेनेति** पदेन संबन्धः कार्यः, मानसिकस्यैव नमस्कारस्य श्रद्धाविहितत्वेन मुख्यत्वात्, 'यदेव विद्यया करोति श्रद्धया––' इति **श्रुतेः**। [3]ग्रन्थादिनिवेशनेनैव वाचिकनमस्कारस्यार्थतः सिद्धत्वादास्तिकानां[4] श्रद्दधानानां वाचिकनमस्कारस्य कायिकनमस्कारनान्तरीयकत्वात् त्रिविधस्यापि नमस्कारस्य निवेशनसिद्धिः। कं वन्दे? **शंकरम्,** ईश्वरमित्यर्थः। अथवा, शं करोतीति शंकरः, [5]निरपेक्षतया सुखदायक ईश्वर एव। अत एव सापेक्षतया सुखदायकानां[6] राजादीनां व्युदासः।

ननु––परमकारुणिका निरपेक्षा अप्यन्यानानन्दयितुं यतन्ते; तन्निरासार्थमाह[7]––**उद्धुरेति**। उद्धुरेण[8] जगता गीतं स्तुतम्। 'गै शब्दे' इत्यस्य शब्दार्थत्वेऽपि ईश्वरविषयत्वात् स्तुत्यर्थो लभ्यते।

[1] मनसि कृत्वा प्रथमं C. E. [2] पादगतेन (B). [3] श्रुते; अत एव तस्य ग्रन्थाभिनिवेशेनैव C. E. [4] °नां नानास्था, ते न नानावाचिकनमस्कारस्य कायिकनमस्काराणां समर्पकत्वात् त्रि° C. E. [5] निरपेक्षसुखदायक ईश्वरः C.E. [6] दायकादीनां (A). [7] तन्निरासार्थयाह C. E. [8] उद्धरे वेदोद्धरणसमये जगता C. E.



[1]किंविशिष्टं तमीश्वरम्? **नादतनुम्,** नादः तनुः स्वरूपं यस्य तम्, शब्दब्रह्मेत्युक्तत्वात्।

यद्वा––नादेन कार्येण कारणमाकाशमुपलक्षयेत्; तेनाकाशस्वरूपमित्यर्थः; आकाशो ऽप्येका मूर्तिः परमेश्वरस्य; एतदुपादानं च परमेश्वरस्यापि शब्दकारणत्वात् तदनुग्रहस्य ग्रन्थरूपशब्दविस्तरसमाप्तिसाधनत्वाभिव्यक्त्यर्थम्। तमिति यच्छब्दसंबन्धार्थम्, "यत्तदोर्नित्यः संबन्धः" इति बचनात्। तं कम्? **यस्माद् ग्रामेति**। ग्रामशब्देन भूरादिलोकाः, अथवा नगरशाखानगरग्रामघोषादयो ग्राह्याः। विभज्यत इति विभागः। द्रव्यधनादि[2]।

अथवा ग्रामाणां विभागः पृथक्त्वेनावस्थापनम्, "एष सेतुरेष विधरण एषां लोकानामसंभेदाय" इति **श्रुतेः। वर्णा** ब्राह्मणादयः, **रचना** द्विपदचतुष्पदषट्पदत्वादिः, **अलंकाराः** कटकमकुटादयः, **जातयो** गोत्वाश्वत्वादयः, क्रमो बाल्यादिः सृष्टिसंहारौ वा, ऋतुक्रमो वा यस्मात् समुत्पन्नः। "जनिकर्तुः प्रकृतिः" इत्युक्तत्वात् पञ्चम्येव समुत्पन्न इति लभ्यते। अत्र च ग्रामाश्च विभागश्च वर्णाश्च रचना चालंकाराश्च जातयश्चेति द्वंद्वं कृत्वा ताभिः[3] सहितः क्रम इति क्रमपदेन सह तत्पुरुषः।

अथवा, ग्रामादिजात्यन्तानां क्रमः परिपाटी, सा यस्मादिति संबन्धः। पुनश्च विशिनष्टि––**यो ऽयं स्वयं राजते** स्वप्रकाशः। ननु किमिदं स्वप्रकाशत्वम्? ज्ञानाविषयत्वे सत्यपरोक्षव्यवहारयोग्यत्वम्। तदुक्तं **तत्त्वप्रदीपिकायाम्––**

'अपरोक्षव्यवहृतेर्योग्यस्याधीपदस्य नः।
संभवे स्वप्रकाशस्य लक्षणासंभवः कुतः ॥'

(१ परिच्छेदः १०) इति।

[1] पुनः किंभूतम्? नादतनुः स्वरूपं यस्य तं शब्दो ब्रह्मेत्युक्तम् C. E.
[2] द्रव्यं धनादि C. E.
[3] तैः सहितः क्रमः C. E.

क्व राजते? **सूरीणां हृत्पङ्कजे,** "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" इत्युक्तत्वात्। ननु व्यापकस्य परमात्मनः कथं [1]मूर्तधर्मेण हृद्यवस्थानम्?[2] अत आह—**अनुरञ्जक** इति। व्यापकस्यापि परमेश्वरस्य प्राणिनां हृत्पङ्कजे ऽभिव्यक्तिः। तदुक्तं **व्यासेन**—"अभिव्यक्तेरित्याश्मरथ्यः" इति। केन हृद्यभिव्यज्यते? **चित्तेन**। कीदृशेन? **ब्रह्मग्रन्थिजमारुतानुगतिना।** सुषुम्नया सह इडापिङ्गलयोः संबन्धस्थानं ब्रह्मग्रन्थिः; तस्माज्जातो यो मारुतः तत्र अनुगतिः सहगमनं यस्य तादृशेन। अनुः सहार्थे। यद्वा, अनुगतं विद्यते अस्मिन्निति [3]मत्वर्थे[4] इन्प्रत्ययः। मारुतेऽनुगतिना मारुतानुगतिनेति विग्रहः, मनःपवनौ [5]सहचारिणौ इति योगिप्रसिद्धेः[6]। **श्रीहर्षेणाप्युक्तं नैषधचरिते—**

"त्वं हृद्गता भैमि बहिर्गतापि
प्राणायिता नासिकयास्य गत्या।
न चित्तमाक्रामति तत्र चित्र-
मेतन्मनो यद्भवदेकवृत्ति॥" इति। (३-१०५)

योऽयमेवंविशिष्टः परमेश्वरः, तं मुदे हर्षाय वन्दे इति संबन्धः।

पक्षे—गीतं वन्दे। गीतमिति रञ्जकः स्वरसंदर्भ उच्यते, 'रञ्जकः स्वरसंदर्भो गीतमित्यभिधीयते' (प्रबन्धाध्याये श्लो. १) इति वक्ष्यमाणत्वात्। गीतस्य च मुख्यत्वेन गीतपदेनैव वाद्यनृत्ते अप्युपलक्ष्य अस्मिन् ग्रन्थे[7] संगीतमभिधेयमित्यपि सूच्यते। अनभिधेयत्वे तस्य ग्रन्थादौ स्तुत्यत्वेन नमस्कार्यत्वेन च अभिधानस्य असंगतत्वापातः[8]। अथवा **नादतनुं, वन्दे।** नाद एव तनुः स्वरूपं यस्य स्वरसंदर्भस्य तं स्वरसंदर्भं वन्दे।

[1] मूर्तधर्मो C. E. [2] स्थापनम्? (A), (B). [3] यस्मिन्निति (A), (B). [4] मतुबर्थे C. E. [5] सहकारिणौ C. E. [6] योगप्रसिद्धेः C. E; सहचारिणां विनियोगप्रसिद्धेः (B). [7] उपलक्ष्येते इत्यस्मिन्ग्रन्थे (B). [8] तत्वापत्तेः (B).



कथंभूतम्? **उद्धुरजगद्गीतम्,** उद्धुरे जगति गीतं जात्येलादि यस्मात्। [1]कस्मै? **मुदे,** आनन्दाय। पुनः कथंभूतम्? **शंकरम्,** शं सुखं करोतीति। अनेन सुखं प्रयोजनम्, अभिधेयेन सह सुखस्य जन्यजनकभावः संबन्धो ऽपि दर्शितः। **तं** कम्? यस्माद् ग्रामादीनामुत्पत्तिः। ग्रामाः स्वरसमूहाः षड्जग्रामो मध्यमग्रामो गांधारग्राम इति त्रयः; तेषां विभागः पृथक्त्वम्, वर्णो गानक्रिया, स्थाय्यारोह्यवरोहिसंचारिभेदेन चतुर्विधः[2] 'गानक्रियोच्यते वर्णः' (सं. र. वर्णालंकारप्रकरणम् श्लो-१) इति वक्ष्यमाणः, तस्य रचना, निष्पादनं, सौन्दर्यं वा, अलंकारा, विशिष्टा वर्णसंदर्भा मन्द्राद्यादयः, जातयः, अष्टादश षाड्ज्यादयः, सप्त शुद्धा एकादश विकृताः षड्जकैशिक्यादयः, तासां क्रमः परिपाटी यस्माज्जायत इति संबन्धः।

**योऽयं स्वयं राजते,** अन्यानपेक्षतया आनन्दयितृत्वात्। स्वरपदस्य निरुक्तिरप्यनेन कथ्यते। कथंभूतः? **सूरीणां;** संगीततत्त्वं जानताम् **अनुरञ्जकः,** अनुरागोत्पादकः। क्व राजते? **हृत्पङ्कजे।** हृत्पङ्कज इत्युपलक्षणम्। तेन स्वरोत्पत्तिस्थानानि हृत्कण्ठमूर्धानो ग्राह्याः। केन? **चित्तेन,** चित्तस्यापि नादोत्पत्तौ कारणत्वस्य 'आत्मा विवक्षमाणो ऽयं मनः प्रेरयते' (सं. र. ३ नादस्थाने रसप्रकरणम् श्लो-३-) इत्यादिना **वक्ष्यमाणत्वात्। ब्रह्मग्रन्थिजेति** विशेषणं पूर्ववत्॥ १॥

**अस्ति स्वस्तिगृहं वंशः [3]श्रीमत्काश्मीरसंभवः।**
**[4]ऋषेर्वृषगणाज्जातः कीर्तिक्षालितदिङ्मुखः[5]॥ २॥**

**यज्वभिर्धर्मधीधुर्यैर्वेदसागरपारगैः।**
**यो द्विजेन्द्रैरलंचक्रे [6]ब्रह्मभिर्भूगतैरिव॥ ३॥**

[1] कस्मै वन्दे (B). [2] विधा (A), (B). [3] श्रीमान्का 1 ed. [4] ऋषेर्वर्षे 1 ed. [5] क. ख. ग. दिक्तटः. [6] क. ब्रह्माभिः स्वर्गतै 1 ed.

**तत्राभूद् भास्करप्रख्यो भास्करस्तेजसां निधिः ।**
**[1]अलंकर्तुं दक्षिणाशां यश्चक्रे दक्षिणायनम् ।। ४ ।।**

**तस्याभूत् तनयः प्रभूतविनयः श्रीसोढलः प्रौढधी-**
**र्येन श्रीकरणप्रवृद्धविभवं[2] भूवल्लभं भिल्लमम्[3] ।**
**आराध्याखिललोकशोकशमनी कीर्त्तिः समासादिता**
**जैत्रे जैत्रपदं [4]न्यधायि महती श्रीसिङ्घणे श्रीरपि[5] ।।**

**एकः क्ष्मावलये क्षितीश्वरमिलन्मौलीन्द्रनीलावलि-**
**[6]प्रोदञ्चद्द्युतिचित्रिताङ्घ्रिनखरश्रेणिर्नृपालाग्रणीः ।**
**श्रीमत्सिङ्घणदेव एव विजयी यस्य प्रतापानलो**
**विश्वव्याप्यपि दन्दहीति हृदयान्येव द्विषामुद्धुरः[7] ।।**

**तं प्रसाद्य सुधीधुर्यो गुणिनं गुणरागिणम् ।**
**गुणग्रामेण यो [8]विप्रानुपकारैरतीतृपत् ।। ७ ।।**

**ददौ न किं न किं जज्ञौ न [9]दधौ कां च संपदम् ।**
**कं धर्मं [10]विदधौ [11]नैष न बभौ कैर्गुणैरयम् ।। ८ ।।**

**तस्माद् दुग्धाम्बुधेर्जातः [12]शार्ङ्गदेवः सुधाकरः[13] ।**
**उपर्युपरि [14]सर्वां यः [15]सदौदार्यस्फुरत्करः ।। ९ ।।**

**कृतगुरुपदसेवः प्रीणिताशेषदेवः**
**कलितसकलशास्त्रः पूजिताशेषपात्रः ।**

[1] ङ. अलंकुर्वन्. [2] प्रबुद्धविभवं 1 ed. [3] घ. भिल्लिमम् 1 ed.
[4] क. ख. ग. व्यधायि. [5] श्रीजुषि (D). [6] प्रोदञ्चद्रुचि. [7] क. ङ. मुद्धरः. [8] घ. ङ. विश्वमुप 1 ed. [9] ददौ (D). [10] न दधौ (D)
[11] वैष (D). [12] ग. घ- ङ. साक्षादेव 1 ed. [13] सुधानिधिः (D).
[14] घ. लोकान्यः 1 ed. [15] सदोदारः 1 ed.



**जगति विततकीर्त्तिर्मन्मथोदारमूर्तिः**
**[1]प्रचुरतरविवेकः शार्ङ्गदेवो ऽयमेकः ।। १० ।।**

**नानास्थानेषु संभ्रान्ता परिश्रान्ता सरस्वती ।**
**सहवासप्रिया[2] शश्वद् विश्राम्यति [3]तदालये ।। ११ ।।**

**स विनोदैकरसिको भाग्यवैदग्ध्यभाजनम् ।**
**धनदानेन विप्राणामार्तिं संहृत्य शाश्वतीम्[4] ।। १२ ।।**

**जिज्ञासूनां च विद्याभिर्गदार्तानां[5] रसायनैः ।**
**अधुनाखिललोकानां तापत्रयजिहीर्षया ।। १३ ।।**

**शाश्वताय च धर्माय कीर्त्त्यै निःश्रेयसाप्तये[6] ।**
**[7]आविष्करोति संगीतरत्नाकरमुदारधीः ।। १४ ।।**

(क०) अथ ग्रन्थकारः शार्ङ्गदेवः स्वदेशवंशवृत्तप्रशंसापूर्वकं ग्रन्थस्य प्रयोजनविषयौ निर्दिशति---**अस्ति [8]स्वस्तिगृहमित्यारभ्य संगीतरत्नाकरमुदारधी**रित्यन्तेन ग्रन्थसंदर्भेण ।। २-१४ ।।

(सु०) एवं मङ्गलाचरणं विधाय अभिधेयं च सप्रयोजनमुक्त्वा ग्रन्थस्य कर्ता स्वयं ग्रन्थवैशिष्ट्यप्रतिपादनाय स्ववंशं कथयति--- **अस्तीति** । अस्तीति वर्तमानप्रयोगेण वंशस्य आकल्पावस्थायित्वं सूचयति; **स्वस्ती**त्यव्ययं कल्याणवाचकम्, कल्याणस्य **गृह**माश्रयः । श्रीमान् यः **काश्मीर**देशः तस्मात् **संभवो** यस्य । **वृषगण**नाम्न ऋषेर्जातः, वृषगणगोत्र-

[1] क. ख. ग. प्रचुरमति. [2] ङ. वासधिया. [3] यदालये (D).
[4] मार्तीः संहृत्य शाश्वतीः (D). [5] गदिनां च 1 ed. [6] निश्रेयसाय च 1 ed.
[7] क. ख. च. तस्मात्करोति. [8] स्वस्त्ययनं (D).

जात इत्यर्थः ।। वंशस्य धार्मिकत्वं कथयति—**यज्वभिरिति** । यज्वभिः याज्ञिकैरलंकृतः । यस्मिन् वंशे एवंविधाः समुत्पन्ना इत्यर्थः ।।

तस्मिन् वंशे समुत्पन्नं विशिष्टं मूलपुरुषं कथयति—**तत्रेति** । सूर्यसदृशो **भास्कर**नामा, तेजसां निधिर्ब्रह्मवर्चसाश्रयः, पक्षे कान्त्याश्रयः, दक्षिणायनं काश्मीरदेशाद् [1]दक्षिणां दिशं प्रत्यागमनम् **दक्षिणां** दिश**मलंकर्तुम्;** अथवा दक्षिणाया देयद्रव्यस्यायनं पात्रप्रापणं **चक्रे**, दक्षिणानां प्रवीणानामाशां वाञ्छामलंकर्तुम् । सूर्यपक्षे दक्षिणायनं प्रसिद्धमेव ।।

ग्रन्थस्य कर्ता स्वपितरं कथयति—**तस्येति** । **भिल्लमं** भिल्लमनामानं राजानम् । **जैत्रे** जैत्रनामनि नगरे । स्वस्वामिनं [2]सिङ्घणभूपं वर्णयति—**एक इति** । यस्य **प्रतापानलो विश्वव्याप्यपि**[3] द्विषां विद्विषां **हृदयान्येव** उद्धुरत् अन्यतो भित्तिं कुर्वत्, परं शत्रुहृदयं दहतीति कारणे सत्यपि कार्यानुदयाद् विशेषोक्तिरलंकारः ।।

[4]सिङ्घणदेवप्रसादप्रभावं कथयति—**तं प्रसाद्येति** । तं सिङ्घणं **गुणग्रामेण** गुणसमूहेन **प्रसाद्य** प्रसन्नं कृत्वा । **गुणिनं गुणरागिणमिति** साभिप्रायविशेषणत्वात् परिकरालंकारः । **उपकारैः,** उपकारसाधनैः द्रव्यवस्त्रान्नादिभिः ।। **किं न ददौ?** सर्वमेव ददावित्यर्थः । एवं **न किं जज्ञावित्यादिषु** ।। य एवंविधः **सोढल**नामा **तस्मात्** क्षीरसमुद्रात् **शार्ङ्गदेवः** चन्द्र उत्पन्न इति संबन्धः । **उपर्युपरीति** । उपरिशब्दस्य आम्रेडितत्वात् सर्वानिति द्वितीया ।।

[5]ग्रन्थवैशिष्ट्यप्रतिपादनार्थमात्मानं वर्णयति—**कृतेति** ।। स्ववैदुष्यं प्रकटयति—**नानेति** । सहवासः काश्मीरदेशे सरस्वत्यवस्थानात् शार्ङ्गदेवस्यापि काश्मीरदेशे उत्पन्नत्वात् ।। **स इति** । स शार्ङ्गदेवः **संगीतरत्नाकरमाविष्करोति** रचयतीति संबन्धः । **निःश्रेयसाप्तये,** मोक्षप्राप्तये,

[1] दक्षिणदेशं (B). [2] सिंहण (B). [3] विश्वं व्याप्यापि C. E.
[4] सिंहणदेवस्य विषयकं प्रसादं स्तौति (B). [5] ग्रन्थेवै°.



मद्रकादीनां प्रकरणाख्यानां गीतानाम् 'शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधे विधिः' (तालाध्यायः श्लो- ५६-) इति मोक्षहेतुत्वस्य **वक्ष्यमाणत्वात्** ।। २-१४ ।।

**सदाशिवः शिवा ब्रह्मा भरतः कश्यपो मुनिः ।**
**मतङ्गो याष्टिको दुर्गा शक्तिः शार्दूलकोहलौ ।। १५ ।।**
**विशाखिलो दत्तिलश्च [1]कम्बलो ऽश्वतरस्तथा ।**
**वायुर्विश्वावसू [2]रम्भार्जुनौ नारदतुम्बुरू[3] ।। १६ ।।**
**आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः ।**
**स्वातिर्गणो [4]विन्दुराजः [5]क्षेत्रराजश्च राहलः ।। १७ ।।**
**रुद्रटो नान्यभूपालो भोजभूवल्लभस्तथा ।**
**परमर्दी च सोमेशो जगदेकमहीपतिः ।। १८ ।।**
**व्याख्यातारो भारतीये लोल्लटोद्भटशङ्कुकाः ।**
**[6]भट्टोऽभिनवगुप्तश्च श्रीमत्कीर्तिधरः परः[7] ।। १९ ।।**
**अन्ये च बहवः [8]पूर्वे ये संगीतविशारदाः ।**
**अगाधबोधमन्थेन तेषां मतपयोनिधिम् ।। २० ।।**
**निर्मथ्य श्रीशार्ङ्गदेवः सारोद्धारमिमं[9] व्यधात् ।**

(क०) इह शास्त्रे प्रेक्षावत्प्रवृत्तये सदाशिवाद्यनेकप्रामाणिकपरिग्रहं दर्शयित्वा तन्मतसारसंग्रहत्वेन स्वकीयस्य ग्रन्थस्यातिशयितत्वं द्योतयति[10]—**सदाशिवः शिवे**त्यादिना **सारो-**

[1] ङ. कम्बलाश्वतरौ 1 ed. [2] रम्भार्जुनौ (B). [3] ग. नारदतुम्बरौ; रम्भार्जुननारदतुम्बराः 1 ed. [4] क. ङ. देवरा. [5] क. राजस्तथैव च 1 ed. [6] भट्टाभि (D). [7] धरोऽपरः 1 ed. [8] ङ. पूर्वं. [9] ममुं (D).
[10] प्रस्तौति (E).

**द्धारमिमं व्यधा**दित्यन्तेन । सारोद्धारः नवनीतं तमिममिति [1]व्यस्तरूपणम्, सारस्य उद्धारो यस्मिन् कर्मणीति क्रियाविशेषणं वा ।। १५-२१- ।।

(सु०) ननु **सदाशिवभरता**दिप्रणीतेषु संगीतग्रन्थेषु[2] सत्सु [3]किमनेनाफलनिर्माणक्लेशेनेत्यत आह—**सदाशिव** इति । **एतेषां मतपयोनिधिं निर्मथ्य सारोद्धारमिमं व्यधात्** अकार्षीत् । अतश्च ते वितता [4]दुर्ग्रहाः, बहवश्च ग्रन्था अचिरजीविभिः मनुष्यैः आलोडयितुमशक्या इत्यल्पप्रयासेनैव [5]सकलसंगीतरहस्यावबोधसिद्धेर्नास्य प्रयासस्य वैफल्यमिति, एतानि च शास्त्राण्यालोच्य कृतत्वेनास्य[6] [7]समूलत्वात् प्रेक्षावद्भिः प्रमाणत्वेनोपादेयोऽयमित्यप्यनेन[8] कथयति ।। १५-२१- ।।

**गीतं वाद्यं तथा [9]नृत्तं त्रयं संगीतमुच्यते ।। २१ ।।**

(क०) ननु, '**आविष्करोति** संगीतरत्नाकरमुदारधीः' (श्लो. १४ अत्रैव) इति प्रतिज्ञायां संगीतशब्देन लोकप्रसिद्धया गीतस्यैव ग्रन्थप्रतिपाद्यत्वं प्रतीयते; न तु वाद्यनृत्तयोरित्याशङ्कां परिजिहीर्षुः संगीतशब्दार्थमाह—**गीतं वाद्यमिति** । यदि गीतमेव प्रतिपाद्येत तदा केवलं गीतशब्दं प्रयुञ्जीत; न तु समुपसर्गयुक्तम् । ननु गीतस्यैव सम्यक्त्वद्योतनाय समुपसर्ग इति चेन्न, 'रञ्जकस्वरसंदर्भो गीतमित्यभिधीयते' (प्रबन्धाध्यायः श्लो. १-) इति विशिष्टवचनादनुपसृष्टस्यैव तस्य गीतस्य सम्यक्त्वसिद्धेः ।

[1] व्यक्तरू 1 ed. [2] शास्त्रेषु (A), (B). [3] किमनेनाधुनिकनिर्मा (B).
[4] दुर्ग्राह्या (A), (B). [5] रहस्यावधानसि (B). [6] कृतत्वेन (A), (B).
[7] समूलत्वात् प्रामाण्यत्वेन च प्रेक्षावद्भिः C. E. [8] देयमित्यप्यनेन (B).
[9] नृत्यं 1 ed.



समित्युपसर्गस्तु गीतशब्देन सह प्रयुज्यमानो गीते स्वेनाधेयातिशयाभावाद् गीतस्यान्ययोगं द्योतयन् शब्दत्वसामान्येन वाद्यस्य तदुभयाभिव्यञ्जकत्वेन[1] नृत्तस्य च गीतेन संबन्धं विशिनष्टि। तस्माद्यत्र संगीतशब्दस्य प्रयोगस्तत्र तौर्यत्रिकं विवक्षितमिति मन्तव्यम् । क्वचिद् गीतमात्रे संगीतशब्दप्रयोगस्त्ववयवेऽवयव्युपचारात् खण्डपटे पटव्यवहारवत् ।। २१ ।।

(सु०) संगीतग्रन्थो विरच्यत इत्युक्तम् । तत्र किमिदं संगीतमित्यपेक्षायामाह—**गीतमिति** । नन्वेवं समुदितानां संगीतत्वे एकैकस्या-संगीतत्वापत्तिः; नैवम्, गीतवाद्यनृत्तान्यतमत्वस्य **संगीत**शब्दप्रवृत्तिनिमित्तत्वात् ।। २१ ।।

**मार्गो देशीति[2] तद् द्वेधा तत्र मार्गः स उच्यते ।**
**यो मार्गितो विरिञ्च्याद्यैः[3] प्रयुक्तो भरतादिभिः ।। २२ ।।**
**देवस्य पुरतः [4]शंभोर्नियताभ्युदयप्रदः ।**
**देशे देशे जनानां यद्रुच्या हृदयरञ्जकम्[5] ।। २३ ।।**
**[6]गीतं च वादनं [7]नृत्तं तद्देशीत्यभिधीयते ।**
**[8]नृत्तं वाद्यानुगं प्रोक्तं वाद्यं गीतानुवर्ति[9] च ।। २४ ।।**
**अतो [10]गीतं [11]प्रधानत्वादत्रादावभिधीयते ।**

(क०) तस्य संगीतस्य मार्गदेशीभेदेन द्वैविध्यं प्रतिज्ञाय तयोर्निरुक्तिपूर्वकं लक्षणमाह—**मार्गो देशीत्यादिना** । मार्गितत्वान्मार्गः । मार्गितत्वं च विरिञ्चचाद्यैर्ब्रह्मादिभिः 'नाट्य-

[1] व्यङ्ग्यत्वेन. [2] च (D). [3] विरिञ्चाद्यैः (D). [4] घ. नियतोऽभ्यु fn. 1 ed. [5] नम् (D). [6] गानं (D). [7] नृत्यं 1 ed. [8] नृत्यं 1 ed. [9] नुवृत्ति च 1 ed: क. ख. ग. नुवृत्तितः. [10] क. ख. गीतप्रधा 1 ed. [11] ग. त्वाद्गीत एवाभि 1 ed.

संज्ञमिदं वेदं सेतिहासं करोम्यहम्' (नाट्यशास्त्रम् अ. १. श्लो. १५) इति प्रतिज्ञाय चतुर्षु वेदेष्वन्विष्य कृतत्वात् । मार्गित इति 'मार्ग अन्वेषणे' इत्यस्माद्धातोः कर्मणि निष्ठायां रूपम् । मार्ग इति तु तस्मादेव धातोः कर्मणि घञन्तम् । **देशीति,** देशशब्देन तत्रत्या जना लक्ष्यन्ते, तैर्यथेच्छं क्रियमाणायां गीतादिक्रियाया-माचार्यकृता संज्ञा । संगीतपदाभिधेयत्वेन [1]नाट्यं प्रत्यङ्गत्वेन[2] च त्रयाणामप्यविशेषेण प्रतिपादने प्राथम्यप्रसक्तौ, तत्र—'गीत-वाद्यप्रमाणेन कुर्याच्चाङ्गवि[3]चेष्टितम्' इति 'गीतं चतुर्विधाद् वाद्याज्जायते चोपरज्यते, [4]मीयते च' (६ वाद्याध्यायः श्लो. ३) इति गीतस्य स्वेतरद्वयापेक्षितत्वेन प्राधान्यं प्रसाध्य प्राथम्यं प्रति-जानीते—**नृत्तं वाद्यानुगमिति** ।। २२-२४- ।।

(सु०) [5]तस्य संगीतस्य मार्गतादेशीत्वाभ्यां द्वैविध्यमुक्त्वा मार्गस्य लक्षणं कथयति—**यो मार्गित** इति । **मार्गितो**ऽन्वेषितो दृष्टः । अनेन मार्गशब्दव्युत्पत्तिरपि सूचिता । देशीलक्षणं कथयति—**देश** इति । गीतस्य पूर्वनिरूपणे कारणमाह—**नृत्तमिति** ।। २२-२४-।।

**[6]सामवेदादिदं गीतं [7]संजग्राह पितामहः ।। २५ ।।**

(क०) गीतस्य सामवेदसंग्रहरूपत्वेन वैदिकत्वादुपादेय-त्वं दर्शयति—**सामवेदादिदमिति** । तत्संग्रहरूपत्वं च गीतस्यापि सप्तस्वरात्मकत्वात् । सामानि[8] हि क्रुष्टप्रथमद्वितीयतृतीयचतुर्थ-मन्द्रातिस्वार्याख्याः सप्त स्वराः; इह तु त एव यथायोगं षड्जादि-

[1] वाद्यप्रत्यङ्गभावना च 1 ed. [2] ङ्गभावत्वेन च (D). [3] विशेषितम् (C). [4] नीयते चेति 1 ed. [5] अस्य (B). [6] घ. वेदादि तद्गीतम्. [7] घ. सजग्राह. [8] सामभिः (D).



व्यपदेशभाज इति । ब्रह्मणापि वेदादुद्धृत्य [1]संग्रहणे सार्ववर्णि-कत्वं प्रयोजनमिति भावः ।। -२५ ।।

(सु०) गीतस्य [2]समूलत्वमाह—**सामवेदादिति** । [3]**संजग्राह** संग्रहे-णोक्तवान् ।। -२५ ।।

**गीतेन प्रीयते देवः सर्वज्ञः पार्वतीपतिः ।**
**गोपीपतिरनन्तोऽपि वंशध्वनिवशंगतः[4] ।। २६ ।।**
**[5]सामगीतिरतो ब्रह्मा वीणासक्ता सरस्वती ।**
**किमन्ये यक्षगन्धर्वदेवदानवमानवाः[6] ।। २७ ।।**
**अज्ञातविषयास्वादो बालः पर्यङ्किकागतः[7] ।**
**रुदन् गीतामृतं पीत्वा हर्षोत्कर्षं प्रपद्यते ।। २८ ।।**
**वनेचरस्तृणाहारश्चित्रं मृगशिशुः पशुः ।**
**लुब्धो लुब्धकसंगीते गीते [8]यच्छति जीवितम् ।। २९ ।।**

(क०) एतच्च न केवलं वैदिकमित्युपादेयम्, किं त्वा-सर्वज्ञपार्वती[9]पत्याधीविकलपशु विगलितवेद्यान्तरतयानन्दाविर्भाव-कत्वेन हृद्यत्वाच्चेत्याह—**गीतेनेत्या**दिना ।। २६-२९ ।।

(सु०) [10]गीतप्रयोजनमाह—**गीतेनेति** ।। गीतं स्तौति—**अज्ञातेति** । **लुब्धो**ऽनुरक्तः । **लुब्धको** व्याधः ।। २६-२९ ।।

**तस्य गीतस्य माहात्म्यं के प्रशंसितुमीशते ।**
**धर्मार्थकाममोक्षाणामिदमेवैकसाधनम्[11] ।। ३० ।।**

[1] संग्रहे 1 ed. [2] मूलत्व (A). [3] स जग्राह (B). [4] वशंवदः (D). [5] क. ख. गीतरतो fn. 1 ed. [6] किन्नराः (D). [7] घ. ङ. तले 1 ed. [8] त्यजति 1 ed. [9] पत्यादेः (C); पत्यामूढपशु 1 ed. [10] गीते प्र (B). [11] मेकैक (D).

(क०) प्रतिनियतसाधनानामपि धर्मार्थकाममोक्षाणामिदमेकमेव रमणीयं साधनं, यतः तस्मादस्य माहात्म्यं वर्णयितुं न केचन शक्ता इत्याह––**तस्येति**। गीतस्य धर्मसाधनत्वं ताव**दश्वमेधप्रकरणे** 'ब्राह्मणौ वीणगाथिनौ गायतः . . . ब्राह्मणोऽन्यो गायेत्' इति **श्रुते**र्देवार्चनादिषु गीतादेस्तदङ्गत्वेन परिग्रहाच्च सिद्धम्। अर्थसाधनत्वं लोकतो दृष्टम्। कामसाधनत्वं तु "तस्माद् गायन्तं स्त्रियः कामयन्ते" इति वेदतो लोकतश्च सिद्धम्। मोक्षसाधनत्वं च––

"वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।
तालज्ञश्चाप्रयासेन मोक्षमार्गं स[1] गच्छति ॥"
(३ प्रायश्चित्ताध्याये ४ यतिधर्मप्रकरणे श्लो. ११५)

इति **याज्ञवल्क्यस्मृतेः**, प्रकरणा[2]ख्यमद्रकादिगीतेषु 'शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधे विधिः' (५ तालाध्यायः श्लो.५६) इत्युक्तत्वाच्च ॥ ३० ॥

(सु०) **धर्मार्थेति**। परमेश्वराराधनाय गीयमानं गीतं धर्महेतुः, यथोक्तलक्षणानां जात्यादीनां सम्यक् प्रयोगस्य 'अपि ब्रह्महणं पापाज्जातयः प्रपुनन्त्यमूः' (जातिप्रकरणम् श्लो. ११४) इत्यादिना धर्महेतुत्वस्य वक्ष्यमाणत्वात्[3]। गीतोपजीविनामर्थसाधनत्वम्[4] शृङ्गारस्योद्दीपनविभावरूपत्वात् कामसाधनत्वम्[5] मद्रकादीनां मोक्षसाधनत्वं च वक्ष्यते ॥ ३० ॥

**[6]तत्र स्वरगताध्याये प्रथमे प्रतिपाद्यते।**
**[7]शरीरं नादसंभूतिः स्थानानि श्रुतयस्तथा ॥ ३१ ॥**

[1] च 1 ed. [2] च्च मन्द्रकादि 1 ed. [3] त्वाच्च (B). [4] नम् (A), (B). [5] नम् (A), (B). [6] ग. तस्य; अथ (D). [7] ङ. शारीरं.



**ततः शुद्धाः[1] स्वराः सप्त विकृता द्वादशाप्यमी[2]।**
**कुलानि जातयो वर्णा द्वीपान्यार्षं च दैवतम् ॥ ३२ ॥**
**छन्दांसि विनियोगाश्च स्वराणां श्रुतिजातयः।**
**ग्रामाश्च[3] मूर्च्छनास्तानाः शुद्धाः [4]कूटाश्च संख्यया ॥ ३३ ॥**
**प्रस्तारः[5] खण्डमेरुश्च नष्टोद्दिष्टप्रबोधकः[6]।**
**स्वरसाधारणं जातिसाधारणमतः परम् ॥ ३४ ॥**
**काकल्यन्तरयोः सम्यक् प्रयोगो वर्णलक्षणम्।**
**त्रिषष्टिरप्यलंकारास्त्रयोदशविधं ततः ॥ ३५ ॥**
**जातिलक्ष्म ग्रहांशादि कपालानि च कम्बलम्।**
**नानाविधा गीतयश्चेत्येतावान् वस्तुसंग्रहः ॥ ३६ ॥**

(क०) सप्ताध्याय्यां रत्नाकरे प्रत्यध्यायं वस्तूनि संजिघृक्षन् आदौ स्वरगताध्याये शरीरादीन् पदार्थान् संगृह्य प्रतिपादयितुं प्रतिजानीते––**तत्र स्वरगताध्याय इत्या**दिना। एतावान् वस्तुसंग्रहः **प्रतिपाद्यत** इति योजना। **स्वरगताध्याय** इति। स्वरान् अनुगताः स्वरगताः श्रुतिग्राममूर्च्छनातानवर्णालंकारजाति-[7]गीत्यादयो विधेयाः, तेषामध्याये। अधीतिरेवाध्याय इति भावे घञन्तः। अधीयते ऽनेनाभिप्रेतो ऽर्थो ऽस्मिन् वेत्यध्याय इति "अकर्तरि च" इति करणाधिकरणयोर्वा। यद्वा––अधीत्यधिकारे; अयनमायः; आयो ऽर्थावगतिः; अर्थावगतिमधिकृत्य प्रवृत्तो

[1] तत्र शुद्ध (D). [2] 'वाद्यादि भेदाश्चत्वारो रागोत्पादनहेतवः' इत्येतच्छ्लोकार्धं ङ. पुस्तकेऽत्राधिकं विद्यते। [3] ग्रामौ (D). [4] कूटाः स्वसंख्यया (D); ङ. कूटास्तु. [5] प्रस्ताराः 1 ed; ग. घ. ङ. प्रस्तारः. [6] ष्टप्रसाधकः C. E. [7] गीतादयो (C); विधयस्तेषामध्याय इति भावे घञन्तः 1 ed.

ग्रन्थोऽध्यायः । अथवा, ईयते गम्यत इत्यायो ऽर्थः, तमधिकृत्य प्रवृत्तो ग्रन्थोऽध्यायः ।

ननु—पूर्वत्र गीतस्य प्रतिपादने प्राथम्यं प्रतिज्ञातम्, इदानीं प्रथमे स्वरगताध्याय इत्यधिकृत्य शरीरादिप्रतिपादनस्य प्राथम्यमुच्यते; अतः प्रतिज्ञाप्रतिपादनयोर्भिन्नविषयत्वाद् वैयधिकरण्यमिति चेत्; नैष दोषः; स्वरगते शरीरादेः परंपरया गीतं प्रत्युपकारकत्वात् स्वरगतप्रतिपादनं प्रकारान्तरेण गीतप्रतिपादनमेवेत्यविरोधात्[1] । तत्र शरीरादित्रिंशत्पदार्थानां मध्ये केषांचित् कार्यकारणभावादिसंगतिवशाद् उद्देशक्रमो विवक्षितः, केषांचित् तदभावेनाविवक्षितः । उत्तरत्रायमर्थः प्रकाश्यते ।। ३१-३६ ।।

(सु०) स्वरगताध्यायवस्तुसंग्रहं[2] कथयति—तत्रेति । **शरीरं** नादोत्पत्त्याश्रयः । **नादसंभूतिः** नादोत्पत्तिप्रकारः । **स्थानानि** हृदयादीनि । **त्रयोदशविधं जातिलक्ष्म—ग्रहः, अंशः, तारः, मन्द्रः, न्यासः, अपन्यासः, संन्यासः, विन्यासः, बहुत्वम्, अल्पता, अन्तरमार्गः, षाडवम्, औडुवितं** चेति । अन्यत् सुगमम् ।। ३१-३६ ।।

**अथ रागविवेकाख्ये ऽध्याये वक्ष्यामहे क्रमात् ।**
**ग्रामरागांश्चोपरागान् रागान् भाषा विभाषिकाः[3] ।। ३७।।**
**ततो ऽप्यन्तरभाषाश्च[4] रागाङ्गाण्यखिलान्यपि ।**
**भाषाङ्गा[5]ण्यप्युपाङ्गानि क्रियाङ्गाणि च तत्त्वतः ।। ३८ ।।**

(क०) ततो द्वितीये ऽध्याये ग्रामरागादयो दशविधरागाः प्रतिपाद्यन्त इत्याह—**अथेति** । **रागविवेकाख्य** इति । रागाणां

[1] त्यविरोधः (D). [2] ध्याये (A). [3] ङ. षिकान् fn. 1 ed.
[4] षाख्या 1 ed; षाख्यान् (D). [5] न्यप्यु 1 ed.



शुद्धकैशिकमध्यमादीनां विवेको विवेचनम् असंकीर्णतया स्वरूपनिरूपणम् अस्मिन्निति स तथोक्तः ।। ३७-३८ ।।

(सु०) [1]द्वितीयाध्यायवस्तुसंग्रहं कथयति—**अथ रागेति । अखिलान्यपीति** । प्राक् प्रसिद्धानि अधुना प्रसिद्धानि चेत्यर्थः ।।३७-३८।।

**ततः प्रकीर्णकाध्याये तृतीये कथयिष्यते ।**
**वाग्गेयकारो गान्धर्वः स्वरादिर्गायनस्तथा[2] ।। ३९ ।।**
**[3]गायनी गुणदोषाश्च तयोः शब्द[4]भिदास्तथा ।**
**गुणदोषाश्च शब्दस्य [5]शारीरं तद्गुणास्तथा ।। ४० ।।**
**तद्दोषा गमकः स्थाया[6] आलप्तिर्बृन्दलक्षणम् ।**

(क०) तृतीये वाग्गेयकारादयो द्वादश पदार्था लक्ष्यन्त इत्याह—**ततः प्रकीर्णकेति** । प्रकीर्णाः शास्त्रेषु तत्र तत्र विक्षिप्ताः पदार्था अत्रैकत्र समुच्चित्याधिक्रियन्त इति प्रकीर्णकः ।।३९-४०- ।।

(सु०) [7]तृतीयाध्यायवस्तुसंग्रहं कथयति—**तत** इति । तयोर्गायनीगायनयोः[8] । **शब्दभिदाः** शब्दभेदाः खाहुलादयः । **तद्गुणाः** शारीरगुणाः । **तद्दोषाः** शरीरदोषाः । **गमकः** स्वरस्य कम्पः । [9]**स्थायाः** गीतस्यावयवाः ।। ३९-४०- ।।

**ततः प्रबन्धाध्याये तु धातवोऽङ्गानि जातयः ।। ४१ ।।**
**प्रबन्धानां द्विधा सूडः [10]शुद्धश्छायालगस्तथा ।**
**आलिक्र[11]मप्रबन्धाश्च सूडस्था आलिसंश्रयाः ।। ४२ ।।**

[1] ध्याये (A). [2] गायिकस्तथा (D). [3] ङ. गायने fn. 1 ed.
[4] भिदस्तथा 1 ed; भिदास्तदा (D). [5] ख. शरीरं. [6] गमकाच्छाया 1 ed.
[7] ध्याये (A). [8] गायकयोः (A), (B). [9] छाया (A). [10] च्छाया (D).
[11] क्रमः 1 ed.

**विप्रकीर्णास्ततश्छायालगसूडसमाश्रिताः ।**
**गीतस्था[1] गुणदोषाश्च वक्ष्यन्ते शार्ङ्गसूरिणा ।। ४३ ।।**

(क०) चतुर्थे धातुप्रभृतीनि द्वादश वस्तूनि विस्तार्यन्त इत्याह---**ततः प्रबन्धाध्याय** इति । प्रबन्धानाम् एलादीनामध्याये ।। -४१-४३ ।।

(सु०) चतुर्थाध्याय[2]वस्तुसंग्रहं कथयति---**ततः प्रबन्धेति** । **धातवः** प्रबन्धावयवा उद्ग्रहादयश्चत्वारः । **अङ्गानि** स्वरादीनी षट् । **जातयो** मेदिन्यादयः पञ्च । **शुद्धः** सूड एलादिः । **छायालगः** सूडो ध्रुवमण्ठादिः ।। -४१-४३ ।।

**तालाध्याये पञ्चमे तु मार्गतालाः [3]कलास्तथा ।**
**पाता[4] मार्गाश्च चत्वारस्तथा मार्गकलाष्टकम् ।। ४४ ।।**
**गुरुलघ्वादिमानं चैककलत्वादयो भिदाः ।**
**पादभागास्तथा[5] मात्रास्ताले पातकलाविधिः ।। ४५ ।।**
**अङ्गुलीनां च नियमो भेदा युग्मादयस्तथा ।**
**[6]परिवर्तो लयस्तेषां यतयो गीतकानि च ।। ४६ ।।**
**छन्दकादीनि गीतानि तालाङ्गनिचयस्तथा ।**
**[7]गीताङ्गानि च वक्ष्यन्ते देशीतालाश्च तत्त्वतः ।। ४७ ।।**
**[8]निःशङ्कशार्ङ्गदेवेन तालानां प्रत्ययास्तथा ।**

(क०) पञ्चमे मार्गतालादय एकविंशतिरर्थाः प्रपञ्च्यन्त इत्याह---**तालाध्याय** इति ।। ४४-४७- ।।

[1] घ. ङ. गीतस्य. [2] ध्याये वस्तु संगृह्णाति. (A). [3] क्रमास्तथा 1 ed. [4] घ. पातो. [5] घ. स्ततो. [6] परिवर्ता लयास्तेषां 1 ed. [7] ख. पुस्तकेऽयं श्लोको न विद्यते. [8] निःशङ्क (D); क. ग. भट्टाभिनवगुप्तेन.



(सु०) पञ्चमाध्यायपदार्थसंग्रहमाचष्टे---**तालाध्याय** इति । **मार्गतालाः** चच्चत्पुटादयः । **कलाः** निःशब्दक्रियाः । **पाताः** सशब्दक्रियाः । **मार्गाः चत्वारो** ध्रुवादयः । **कलाष्टकं** ध्रुवकादि । **परिवर्तः** पादभागादेरावृत्तिः । **लयः** तालक्रियान्तरालवर्ती कालः । **यतिः** लयप्रवृत्तिनियमः । **गीतानि** मद्रकादीनि सप्त । **देशीतालाः** विंशत्युत्तरं शतमादितालादयः । **प्रत्ययाः** प्रतीयन्ते यैः तालसंख्यास्वरूपादय इति प्रत्ययाः प्रस्तारनष्टोद्दिष्टादयः ।। ४४-४७- ।।

**षष्ठे नानाविधं वाद्यमध्याये कथयिष्यते ।। ४८ ।।**
**सप्तमे नर्तनं नानारसभावाः क्रमेण च ।**

(क०) षष्ठे ततादिचतुर्विधवाद्यानामवान्तरभेदेन अनेकप्रकारं वाद्यं निगद्यत इत्याह---**षष्ठे नानाविधमिति** ।। सप्तमे प्रतिपाद्यानाह---**सप्तम** इति । **नर्तनमिति** नाट्यनृत्यनृत्तानां गात्रविक्षेपरूपाणां सामान्यवचनम् । **नानारसभावा** इति । शृङ्गारादयो नव रसाः । विभावादयः पञ्चविधा भावाः । **क्रमेणेति** । उद्देशक्रमेणेत्यर्थः ।। -४८-४९- ।।

(सु०) षष्ठसप्तमाध्याययोः वस्तुसंग्रहं कथयति---**षष्ठ इति**[1] ।। -४८-४९- ।।

**इति प्रथमे स्वरगताध्याये पदार्थसंग्रहाख्यमादिमं प्रकरणम् ।। १ ।।**

------

[1] सुगमम् C. E.

## २. पिण्डोत्पत्तिप्रकरणम्

**गीतं नादात्मकं वाद्यं नादव्यक्त्या प्रशस्यते ।**
**तद् द्वयानुगतं [1]नृत्तं नादाधीनमतस्त्रयम्[2] ॥ १ ॥**
**नादेन व्यज्यते वर्णः पदं वर्णात् पदाद् वचः ।**
**[3]वचसो व्यवहारो ऽयं नादाधीनमतो[4] जगत् ॥ २ ॥**
**आहतो ऽनाहतश्चेति द्विधा[5] नादो निगद्यते ।**
**सो ऽयं प्रकाशते पिण्डे तस्मात् पिण्डो [6]ऽभिधीयते ॥ ३ ॥**

(क०) ननु गीतनिदानत्वेन स्वरगते[7] नादस्य प्रथमं प्रतिपाद्यत्वमस्तु, किं शरीरनिरूपणेनेत्याशङ्क्य, नादमात्रस्य[8] शरीरमन्तरेण प्रकाशाभावादिति परिहरन् शरीरं निरूपयितुमाह —**गीतं नादात्मकमिति ।** अयमर्थः—न केवलं गीतादित्रयस्य नादाधीनत्वम्, वाङ्मूलस्य सर्वलोकव्यवहारस्यापि नादाधीनत्वात् तदाधारः[9] शरीरमादौ सुतरां निरूपणीयमेवेति ॥ १-३ ॥

(सु०) एवं पदार्थसंग्रहमुक्त्वा नादाभिव्यक्तेः स्थानं शरीरं कथयितुं नादं स्तौति—**गीतमिति । नादात्मकं** नाद आत्मा स्वरूपं यस्य । **वाद्यं** वीणादि नादाभिव्यक्त्यैव[10] **प्रशस्यते** रमणीयतामुपैति । **नृत्तं तद्-द्वयानुगतम्,** 'अङ्गेनालम्बयेद् गीतम्' इत्युक्तत्वात् । अतः, त्रयं [11]गीतनृत्त-वाद्यरूपं नादाधीनं नादापेक्षमित्यर्थः ॥ न केवलं गीतनृत्तवाद्यमेव

[1] क. घ. नृत्यं. [2] मिदं त्रयम् (D). [3] वचसा (D). [4] मिदं (D). [5] द्वेधा (D). [6] निगद्यते (D). [7] स्वरगीते (D). [8] नादस्य (C). [9] दाधारं (D). [10] व्यक्तौ च (A). [11] नृत्यगीतवाद्य (B).



नादापेक्षम्, अपि तु सर्वं जगदित्याह—**नादेनेति । नादेन** ध्वनिना वर्णः ककारादिः **व्यज्यते**[1] । को ऽयं ध्वनिः? यो ऽयं वर्णविशेषमप्रतिपद्यमानस्य दूरात् कर्णपथमवतरति मन्दत्वतीव्रत्वादिभेदं[2] च वर्णेष्वासञ्जयति स ध्वनिरित्युच्यते । वर्णात्पदं घट इत्यादि । पदाद्वाचो वाक्यं पदसमु-दायः । **वचसो** वाक्यात् शाब्दोऽयं **व्यवहारः** । अतः सर्वं **जगदपि नादाधीन**मित्यर्थः । **मतङ्गेनापि बृहद्देश्या**मुक्तम्—

"न नादेन विना गीतं न नादेन विना स्वराः ।
न नादेन विना [3]नृत्तं तस्मान्नादात्मकं जगत् ॥
नादरूपः स्मृतो ब्रह्मा नादरूपो जनार्दनः ।
नादरूपा परा शक्तिर्नादरूपो महेश्वरः ॥
यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यः स्मृतः ।
तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः ॥
वह्निमारुतसंयोगान्नादः समुपजायते ।
नादादुत्पद्यते बिन्दुस्ततः सर्वं च वाङ्मयम् ॥" इति ।

नादद्वैविध्यं कथयति—**आहत** इति । द्विविधो ऽपि नादः **पिण्डे प्रकाशते** प्रकटीभवति इति ॥ १-३ ॥

**अस्ति ब्रह्म चिदानन्दं[4] स्वयंज्योतिर्निरञ्जनम् ।**
**ईश्वरं लिङ्गमित्युक्तमद्वितीयमजं विभु[5] ॥ ४ ॥**
**निर्विकारं निराकारं सर्वेश्वरमनश्वरम्[6] ।**
**सर्वशक्ति च सर्वज्ञं तदंशा जीवसंज्ञकाः ॥ ५ ॥**

(क०) तच्च शरीरं जीवकर्मायत्तम् । स च जीवो जिज्ञास्यमानः स्वांशि ब्रह्मापेक्षत इति तस्मिन् जिज्ञासिते तत्स्व-

[1] ककारादयो व्यज्यन्ते (A), (B). [2] मन्द्रतीव्रादि (A), (B). [3] नृत्यं (B). [4] नन्द (D). [5] विभुम् (D), (A). [6] क. ख. ग. घ. मतीश्वरम्.

रूपं, निरूपयति——**अस्ति ब्रह्मेति । चिदानन्दं** ज्ञानसुखस्वरूपम् । **स्वयंज्योतिः** स्वयं प्रकाशमानम् । **निरञ्जनं** निर्लेपम् । **ईश्वरं** स्वतन्त्रम् । प्रपञ्चलयनात् **लिङ्गम् । अद्वितीयं** स्वसदृशवस्त्वन्तर-रहितम् । **अजं** जन्मरहितम् । **विभु** व्यापकम् । **निर्विकारम्,** जायते ऽस्ति वर्धते विपरिणमते ऽपक्षीयते विनश्यतीति षड् भाव-विकाराः, तैः रहितम् । **निराकारम्** आकारशून्यम् । **सर्वेश्वरं** सकलजगत्कर्तृ । **अनश्वरं** [1]नाशरहितम् । **सर्वशक्ति** इच्छाज्ञान-क्रियाभोगशक्तियुक्तम् । **सर्वज्ञम्** अतीतानागतवर्तमानसकलपदार्थ-वेदितृ इत्युपनिषदुक्तं ब्रह्मास्ति । ब्रह्मस्वरूपमुक्त्वा तत्तादात्म्येन जीवांस्तेषां देहसंबन्धं च निरूपयति——**तदंशा** इति । तस्य ब्रह्मणों ऽशा मात्राः ।। ४-५ ।।

(सु०) देहाभिधानं प्रतिज्ञाय तन्मूलकारणं कथयति——**अस्तीति ।** सर्वदा सर्वत्रापि सत्, नित्यं व्यापकं चेत्यर्थः । **ब्रह्म** बृहत्त्वाद् बृंहणत्वाद्वा । **चिद्** विज्ञानरूपम्, **आनन्दं** सुखस्वरूपम्, "विज्ञानमानन्दम्" इति **श्रुतेः । स्वयंज्योतिः** स्वप्रकाशम्, "तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति" इति **श्रुतेः । [2]निरञ्जनम्** अविद्यालेपशून्यम्, अविद्याया जीवाश्रयत्वात् । ब्रह्माश्रयाविद्यापक्षेऽपि [3]स्वाश्रयाव्यामोहकत्वं निरञ्जनपदेनोच्यते । **ईश्वरं** कर्तुमकर्तुमन्यथा कर्तुं वा शक्तम् । **लिङ्गं** कारणम् । **अद्वितीयं** सजातीयविजातीयस्वगतभेदशून्यम् । **अजमका-**रणकम् । **विभु** व्यापकं समर्थं वा । **निर्विकारं** जायते ऽस्ति वर्धते विप-रिणमतेऽपक्षीयते विनश्यतीति **यास्कोदित**[4]सर्वविकारशून्यम् । **निराकारं** मूर्त्यनवच्छिन्नम् । **सर्वेश्वरं** सर्वेषां ब्रह्मादीनामपि शासकम् । **अनश्वरम्**

[1] विनाश 1 ed. [2] द्यापक्षे शून्यम् (A). [3] श्रयव्यामोह (A).
[4] षड्भावविकार (A), (B).



अविनाशि । **सर्वशक्ति**[1] सर्वा सर्वस्य प्रपञ्चस्य कारणं[2] या सा शक्ति-र्मायाख्या विद्यतेऽस्मिन्निति । **सर्वज्ञं** सर्वविषयसाक्षात्कारवत् । **तदंशः** तदभिन्नः, यथाग्नेर्विस्फुलिङ्गा अग्नित्वेनाग्नेरभिन्नाः; अथवा "अंशो नानाव्यपदेशात्" इति **सूत्रो**क्तत्वात् जीवपरमात्मनोः अंशांशित्वपक्षमेव स्वीकृत्योक्तम् ।। ४-५ ।।

**अनाद्यविद्योपहिता[3] यथाग्नेर्विस्फुलिङ्गकाः ।**
**दार्वाद्युपाधिसंभिन्नास्ते कर्मभिरनादिभिः ।। ६ ।।**
**सुखदुःखप्रदैः [4]पुण्यपापरूपैर्नियन्त्रिताः ।**
**तत्तज्जातियुतं देहमायुर्भोगं च कर्मजम् ।। ७ ।।**
**प्रतिजन्म प्रपद्यन्ते तेषामस्त्यपरं [5]पुनः ।**
**सूक्ष्मं लिङ्गशरीरं तदा मोक्षादक्षयं मतम् ।। ८ ।।**
**सूक्ष्मभूतेन्द्रियप्राणावस्थात्मकमिदं विदुः ।**
**जीवानामुपभोगाय जगदेतत् सृजत्यजः ।। ९ ।।**
**स आत्मा परमात्मा च विश्रान्त्यै संहरत्यथ ।**
**तदेतत् सृष्टिसंहारं प्रवाहानादि संमतम् ।। १० ।।**

(क०) **अनाद्यविद्योपहिताः** अनाद्यविद्या मूलाविद्या अधिष्ठानस्य याथात्म्याज्ञानमिति यावत् । तयाविद्ययोपहिता [6]अवच्छिन्ना जीवसंज्ञका भवन्ति । सच्चिदानन्दविभुस्वभावस्य वस्तुनो ऽविद्योपाधिवशादसत्त्वासर्वज्ञत्वदुःखित्वपरिच्छिन्नत्वादि-धर्मारोपे जीवव्यपदेश आविद्यिक इत्यर्थः । तत्र दृष्टान्तमाह—— **यथाग्नेरिति ।** अंशा इति शेषः । तेजोरूपस्याग्नेरंशा दारुतृण-

[1] सदा (B). [2] मायाशक्तिर्विद्यते यस्मिन्निति (A), (B). [3] क. ख. ग. घ. ङ. पहृता. [4] पापपुण्य 1 ed. [5] ख. वपुः. [6] अविच्छिन्ना 1 ed.
[7] तृणपर्णाद्यवच्छिन्ना 1 ed.

मण्याद्युपाध्यवच्छिन्ना यथा स्फुलिङ्गा इति व्यपदिश्यन्ते तद्वदिति। **ते कर्मभिरिति।** ते जीवाः क्रमेण सुखदुःखप्रदैः पुण्यपापरूपैः कर्मभिः। पुण्यकर्मणां [1]सुखप्रदत्वं तावत् "एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते" इति **श्रुतेः।** पापकर्मणां दुःखप्रदत्वं च "एष उ एवासाधु कर्म कारयति तं यमधो निनीषते" इति **श्रुतेः। अनादिभिरिति।** कर्तृत्वाद्यभिमानिन आत्मनो जीवत्वोपाधेः अविद्याया अनादित्वात् जीवकर्तृकाणां कर्मणामपि "तदाकृत्युपरक्तानां व्यक्तीनामेकयोनिना" इत्यादि**न्यायेन** प्रवाहरूपविवक्षयानादित्वम्। **नियन्त्रिताः** बद्धाः सन्तः। **तत्तज्जातियुतं;** मनुष्यत्वादिजातियुक्तं **देहमायुः** कर्मजं **भोगं** च **प्रतिजन्म** जन्मनि जन्मनि **प्रपद्यन्ते** प्राप्नुवन्ति। कर्मभिः नियन्त्रिता इत्यनेनैव जीवानां देहादिप्राप्तौ देहादीनामप्यविशेषेण कर्मजत्वे सिद्धे, भोगस्य पुनः कर्मजमिति विशेषणम् इह जन्मनि क्रियमाणानि दृष्टफलकानि कृष्यादिकर्माणि प्रति जीवानां कर्तृत्वमपि नियतमेवेति वक्तुम्। **तेषामस्तीति। तेषां** स्थूलशरीरावच्छिन्नानां जीवानाम्,**अपरं** स्थूलशरीरादन्यत् सूक्ष्ममव्यक्तं **लिङ्गशरीरमस्ति,** "अङ्गुष्ठमात्रः पुरुषः" इत्यादि**श्रुतेः** सिद्धमित्यर्थः। **तच्च आ मोक्षात्** चरमस्वरूपसाक्षात्कारपर्यन्तम् **अक्षयं** स्वाविद्यावासनानुच्छेदादविनाशि **मतं** शास्त्रसिद्धम्। **इदं** च लिङ्गशरीरं **सूक्ष्मभूतेन्द्रियप्राणावस्थात्मकम्,** भूतानि पृथिव्यादीनि, इन्द्रियाणि चक्षुरादीनि, प्राणाः प्राणादयः पञ्च वायवः, सूक्ष्माणाम् अव्यक्तरूपाणामेतेषाम् अन्तरिन्द्रियेण मनसा संघातत्वेनावस्था,

[1] ग. दत्वं यावत्—एष.



अवस्थानमात्मा स्वरूपं यस्य तत्तथोक्तम्। **केचित्** "न कदाचिदनीदृशं जगत्" इति जगत एव प्रवाहरूपेण नित्यत्वमङ्गीकुर्वन्ति; तन्मतनिरासार्थं जगत्सृष्टिसंहारयोः सप्रयोजनमा[1]त्मकर्तृकत्वमाह—**जीवानामिति।** जीवानाम् उक्तदेहद्वयाभिमानिनाम् **उपभोगाय** सुखदुःखानुभवाय **जगद्** भूतभौतिकात्मकम्। **अजः** परमात्मा। स आत्मेत्यन्वयः। [2]परत्वमपि आत्मनो निकृष्टजीवापेक्षया ईश्वरत्वमापन्नमित्यर्थः। **स आत्मेति** पूर्वोक्तं ब्रह्म परामृश्यते। **चकारः** भिन्नक्रमः। **संहरति** चेत्यन्वयः। **अथ** सृष्टस्य जगतः स्थित्यनन्तरम्। **विश्रान्त्यै;** जीवानामिति अनुषञ्जनीयम्, सृष्टिसंहारयोरुक्तरीत्या जीवार्थत्वात्। जीवानादित्वद्योतनाय[3] तयोः प्रवाहानादित्वमाह—**तदेतदिति।** सृष्टिश्च संहारश्च **सृष्टिसंहारमिति** द्वंद्वैकवद्भावे नपुंसकत्वम्। **प्रवाहानादीति।** व्यक्तिविवक्षया सादित्वम्, संतानरूपेणानादित्वमित्यर्थः॥ ६-१०॥

(सु०) ननु विषमो दृष्टान्तः, स्फुलिङ्गानां स्थूलत्वसूक्ष्मत्वादिविरुद्धधर्मसंसर्गेण भिन्नत्वात्; अत आह—**दार्वादीति।** आदिशब्देन अबिन्धनस्य वैद्युतस्याग्नेरुदकोपाधिग्रहणम्। अतश्चौपाधिकः स्फुलिङ्गादौ भेदो न तात्त्विक इत्यर्थः। तेषां जीवानां कर्मनिबद्धत्वं कथयति—**ते कर्मभिरिति।** ननु ब्रह्माभिन्नानां जीवानां कथं कर्मबन्धः? इत्यत आह—**अनादिभिरिति।** ते जीवाः प्रतिजन्म, **तत्तज्जातियुतम्** मनुष्यत्वगोत्वा[4]दिजातियुक्तम् **देहमायुरुपभोगं च कर्म**व्यापारजं तत्तज्जात्यनुरूपं प्रपद्यन्ते। ननु जीवानां स्थूलदेह[5]निबद्धत्वे कथमनेकजन्मप्राप्तिः? स्थूलदेहस्य विनाशोपलब्धेरित्यत्राह[6]—**तेषामस्त्यपरमिति।** आ मोक्षात्,

[1] कर्तृत्वमाह (C). [2] परमत्वं (D); परत्व मात्मनो (C). [3] द्योतनीयप्रवाहानादि 1 ed. [4] त्वजाति (A), (B). [5] देहात्मकत्वे (A); देहात्मत्वे (B). [6] त्यत आह (B).

मोक्षं मर्यादीकृत्य । किंविधं लिङ्गशरीरमित्यपेक्षायामाह—**सूक्ष्मेति ।** पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, एवं षोडशकलमित्यर्थः । ननु—परमेश्वरस्य जगतः सृष्टिसंहारयोः किं प्रयोजनम्? अत आह—**जीवानामिति** । अनादित्वाच्च तयोर्नायं पर्यनुयोग[1] इत्याह—**तदेतदिति** । सृष्टिसंहारयोः समाहारः **सृष्टिसंहारं प्रवाहानादित्वेन संमतम्** ।। ६-१० ।।

**ते जीवा नात्मनो भिन्ना भिन्नं वा नात्मनो जगत् ।**
**शक्त्या सृजन्नभिन्नो ऽसौ सुवर्णं कुण्डलादिव[2] ।। ११ ।।**
**सूतत्यविद्ययेत्यन्ये यथा [3]रज्जुर्भुजंगमम् ।**

(क०) अंशांशिभावेनात्मनो जीवानां च अभेदमभिदधत् कार्यकारणभावेन आत्मनो जगतश्चाभेदं[4] भेदाभेदमतानुसारेण सदृष्टान्तमाह—**ते जीवा** इति । **असौ: आत्मा** शक्त्या स्वगतक्रियाशक्त्या जगत्सृजन् तस्मादभिन्नः । विभक्तिविपरिणामेन जगत्पदस्यानुषङ्गः कर्तव्यः । यथा सुवर्णकुण्डलयोः तादात्म्यं तद्वदित्यर्थः । यथाहुः—

"कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाभेदः कुण्डलाद्यात्मना भिदा ।।" इति ।

मुख्यवेदान्तिमतमवलम्ब्याह—**सूजतीति ।** अन्ये वेदान्तिनः । अविद्यया अधिष्ठानाज्ञानेन । तत्र दृष्टान्तः—**यथा रज्जुर्भुजंगममिति** । एतेन प्रपञ्चस्यातत्त्वतोऽन्यथाभावाद् (भावाभावाद्) ब्रह्मविवर्तत्वं दर्शितम्[5] ।। ११- ।।

(सु०) स परमेश्वरो जगतो भिन्नोऽभिन्नो वेत्यपेक्षायामाह—**तेजोवदिति । आत्मनः शक्त्या जगत्सृजन्भिन्नो न** भवति । **असौ**

[1] योग्य (B). [2] वत् 1 ed. [3] रज्वा भु (D). [4] श्च भेदमतानुसारेण 1 ed. [5] मततत्वं दर्शितम् 1 ed.



परमेश्वरः । कथंभूतया शक्त्या? **तेजोवत् आत्मनो भिन्नाभिन्नया ।** यथा तेजः सूर्याद्भिन्नमित्युच्यते 'सूर्यस्य तेजः' इति, अभिन्नमपि व्यपदिश्यते 'सूर्यस्तेजः' इति । दृष्टान्तान्तरमाह—**सुवर्णमिति । कुण्डलात्** सुवर्णत्वेनाभिन्नं सुवर्णं कुण्डलत्वेन च भिन्नम् । वेदान्तिनां मतेन प्रपञ्चस्याविद्यिकत्वं कथयति—**सृजतीति । यथा रज्जुः** स्वाज्ञानात् 'भुजंगोऽयम्' इति कल्पितं **भुजंगं** सृजति, तथा परमेश्वरो ऽप्यधिष्ठानभूतस्य स्वस्याज्ञानाद् वियदादिप्रपञ्चमित्यर्थः ।। ११- ।।

**आत्मनः पूर्वमाकाशस्ततो वायुस्ततो ऽनलः ।। १२ ।।**
**[1]अनलाज्जलमेतस्मात् पृथिवी समजायत ।**
**महाभूतान्यमून्येषा विराजो ब्रह्मणस्तनुः ।। १३ ।।**

(क०) भूतादिसृष्टिक्रमेण भौतिकं पिण्डं सप्रभेदं निरूपयति—**आत्मनः पूर्वमित्यादिना । आत्मनः** कारणभूतात्, पूर्वं वाय्वादिभ्यः प्रथमम्, आकाश उत्पन्न इत्यर्थः । **तत** इति तच्छब्देनाकाशः परामृश्यते । तस्मात् आकाशात् कारणभूताद् वायुरुत्पन्न[2] इत्यर्थः । **ततो ऽनल** इत्यत्रापि वायोरनलः समजायतेत्यर्थः । तथा च **श्रुतिः** 'आत्मन आकाशः संभूतः, आकाशाद्वायुः' इत्यादिः । **अमून्याकाशादीनि महाभूतानि । विराजो** ब्रह्मणो महाभूतोपहितस्य[3] **ब्रह्मण एषा तनुरिति** संबन्धः । **एषेति** पुरोवर्तितया निर्देशो भूतसंघातस्य सकललोकप्रत्यक्षत्वेन । **विराज इति,** आत्मा महाभूतानि सृष्ट्वा तान्यनुप्रविश्य तदभिमानित्वेन विराडित्युच्यते, तस्य । अमून्येषा तनुरिति "उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यं प्रतिपादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गभाञ्जि भवन्ति" इति भिन्नलिङ्गतोपपत्तिः ।। -१२-१३ ।।

[1] ततश्च जल (D). [2] रुत्पद्यत 1 ed. [3] भूतस्योपहितस्य 1 ed.

(सु०) सृष्टिक्रमं कथयति—**आत्मन** इति। पञ्चमहाभूतात्मिका विराड्**ब्रह्मणस्तनु**रित्याह—**महाभूतानीति** ॥ -१२-१३ ॥

**ब्रह्म ब्रह्माणमसृजत् तस्मै वेदान् प्रदाय च ।**
**भौतिकं वेदशब्देभ्यः सर्जयामास तेन तत् ॥ १४ ॥**

(क०) **ब्रह्म ब्रह्माणमिति**। **ब्रह्म** विराड्रूपं, **ब्रह्माणं** चतुर्मुखम् **असृजत्**। पुनः तद् ब्रह्म **तस्मै** चतुर्मुखाय **वेदान्** ऋग्वेदादीन् **प्रदाय तेन** प्रयोज्येन कर्त्रा स्वयं प्रयोजकम्, **वेदशब्देभ्यः**, वेद्यते अनेन धर्माधर्माविति वेदः, तस्मिन् शब्दा आकृत्यादिवाचकाः, तेभ्यः कल्पान्तरातीतपदार्थस्मारकत्वेन[1] निमित्तभूतेभ्यः **भौतिकं** पञ्चीकृतपञ्चमहाभूतात्मकं देहेन्द्रियादि **सर्जयामास**, भौतिकस्य सृष्टिं कारितवदित्यर्थः ॥ १४ ॥

(सु०) ननु हिरण्यगर्भ एव जगतः कर्तेति लोकप्रसिद्धिः, कथमीश्वरः कर्तेत्युच्यते? अत आह—**ब्रह्मेति**। **ब्रह्म** ईश्वरः, **ब्रह्माणं** हिरण्यगर्भम् **असृजत्, तस्मै** च **वेदान् प्रदाय भौतिकं** प्रपञ्चं **सर्जयामास; सृजन्तं** ब्रह्माणं प्रेरयामास। **वेदशब्देभ्य** इति ल्यब्लोपे पञ्चमी। ततश्च वेदशब्दान् स्मारयित्वा असर्जयत्, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति **श्रुतेः**। ततश्च कर्तृत्वं हिरण्यगर्भस्य, प्रयोजककर्तृत्वं परमेश्वरस्येत्यर्थः ॥ १४ ॥

**तदाज्ञयासृजद् ब्रह्मा मनसैव प्रजापतीन् ।**
**तेभ्यस्तु रैतसी सृष्टिः शरीराणां निरूप्यते ॥ १५ ॥**
**स्वेदोद्भेदजराय्वण्डहेतुभेदाच्चतुर्विधम् ।**
**देहं यूकादिनः स्वेदादुद्भेदात्तु [2]लतादिनः ॥ १६ ॥**

[1] स्मारकत्वात् 1 ed. [2] लताद्यः C. E.



(क०) साक्षात्कर्तुः चतुर्मुखाद् भौतिकसृष्टेः क्रममाह—**तदाज्ञयेति** तस्य विराज आज्ञया। तेभ्यः प्रजापतिभ्यो **रैतसी** रेतोविकाररूपा। रेतःशब्देन शोणितमप्युपलक्ष्यते। **स्वेदोद्भेदेति।** स्पष्टोऽर्थः। **यूकादिन** इत्यादौ यूका आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः ॥ १५-१६ ॥

(सु०) ब्रह्मा किमसृजदित्यपेक्षायामाह—**तदाज्ञयेति**। **प्रजापतीन्** दक्षादीन्। तेभ्यः किमुत्पन्नमित्यपेक्षायामाह—**तेभ्यस्त्विति**। रेतसः समुत्पन्ना **रैतसी**। शरीराणां चातुर्विध्यं कथयति—**स्वेदोद्भेदेति**। किं कस्मादुत्पन्नमित्यपेक्षायामाह—**यूकादिन**[1] इति ॥ १५-१६ ॥

**जरायोर्मानुषादीनामण्डात्तु विहगादिनः ।[2]**
**तत्र नादोपयोगित्वान्मानुषं देहमुच्यते ॥ १७ ॥**

(क०) उक्तचतुर्विधदेहमध्ये त्रिविधेषु यूकादिदेहेषु लतादेरचेतनत्वात्, यूकादेः अतिसूक्ष्मत्वात्, विहगादेः संपूर्णधातुनाड्याद्यभावात्, जरायुजेष्वपि पश्वादिदेहस्य धातुनाड्यादिसंपूर्णतासद्भावेऽपि तिर्यक्त्वेनोच्चारणाशक्तेश्च, पारिशेष्यात् **मानुषं देहमेव नादोपयोगि;** ततः तस्यैवोत्पत्तिर्निरूप्यत इत्याह—**तत्रेति** ॥ १७ ॥

(सु०) तेषु देहेषु मानुषदेहस्यैव विशेषतो निरूपणे कारणमाह—**तत्रेति** ॥ १७ ॥

**क्षेत्रज्ञः स्थित आकाश[3] आकाशाद्वायुमागतः ।**
**वायोर्धूमं ततश्चाभ्रमभ्रान्मेघे[4] ऽवतिष्ठते ॥ १८ ॥**

[1] यूकादय (A), (B). [2] विहगादयः C. E. [3] स्थित आकाशं (D).
[4] मेघो (D).

**आहुत्याप्यायितो[1] ग्रस्तरसो ग्रीष्मे च भानुभिः ।**
**भानुर्मेघे घनरसं निधत्ते तं बलाहकः ।। १९ ।।**
**यदा वर्षति वर्षेण सह जीवस्तदा भुवः ।**
**वनस्पत्योषधीर्जाताः [2]संक्रामत्यविलक्षितः ।। २० ।।**
**[3]ताभ्यो ऽन्नं जातमन्नं [4]तत्पुरुषैः शुक्लतां गतम् ।**
**शुद्धार्तवाया योषाया[5] निषिक्तं स्मरमन्दिरे ।। २१ ।।**
**सहार्तवेन शुद्धं चेद् गर्भाशयगतं भवेत् ।**
**जीवकर्मप्रेरितं तद्[6] गर्भमारभते तदा ।। २२ ।।**

(क०) तस्य मानुषशरीरस्य रेतस्यां सृष्टौ जीवस्य आकाशादिपरंपरया गर्भसंक्रमणमाह---**क्षेत्रज्ञ** इत्यादिना **गर्भाशयगतं भवेद् इत्यन्तेन ।** क्षेत्रं शरीरम्, [7]तज्जानाति अहमिति वा, ममेदमिति वा वेत्तीति क्षेत्रज्ञो जीवः, यदुक्तं **भगवता---**

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।।'

इति । धूमज्योतिर्मरुतां संघातोऽभ्रम्, जलवत्तदेव मेघः । **आहुत्येति ।** यजमानैर्मन्त्रपूर्वकं देवतोद्देशेनाग्नौ प्रक्षिप्यमाणं समिदन्नाज्यादि द्रव्यमाहुतिः, तया**प्यायितः** संतर्पितः, **ग्रीष्मे भानुभिः** किरणैः **ग्रस्तरसो** भूमेरात्तसारो **भानुः** सूर्यः । **घनरसं** जलम् । भुवो जाता वनस्पत्योषधीरित्यन्वयः । अचाक्षुषत्वाद-विलक्षितः । **ताभ्य** ओषधीभ्यः । **अन्नम्,** अद्यत इत्यन्नमोदनादि ।

[1] ऽऽप्याहितो (D). [2] क. संक्रम fn. 1 ed. [3] तेभ्यो (D). [4] तु पुरुषैः शुक्रतां (D). [5] शुद्धार्थवायां योषायां (D). [6] क. ख. ग. तं सद्. [7] तज्जानातीति अह 1 ed.



**पुरुषैरन्नं** भुक्तं तदोदनादि । **शुद्धार्तवायाः**[1] आर्तवं शोणितम्[2] 'लाक्षारसशशास्राभं धौतं यच्च विरज्यते' इत्युक्त**लक्षणम्,** शुद्धमार्तवं यस्याः तस्याः[3] । **शुद्धं चेदिति ।** शुक्लमपि---

'शक्तं[4] शुक्लं गुरु स्निग्धं मधुरं बहुलं बहु ।
घृतमाक्षिकतैलाभं सद् गर्भाय' इत्युपक्रम्य, 'शुद्धं शुद्धार्तवम्'

इत्युक्तत्वाच्छुद्धम् । **जीवकर्मेति ।** तच्च शुक्लमाशयगतत्वमात्रेण गर्भं नारभते, किं तु **जीवकर्मप्रेरितं** सज्जीवस्योत्पत्स्यमानदेहाभिमानिनः कर्मभिः प्रारब्धकर्मभिः प्रेरितं देहभावानुकूलक्रियया योजितं सदेव **गर्भमारभते ।** अत्र गर्भशब्देन देहोपादानमाशयं गतः शुक्लशोणितसंघात उच्यते ।। १८-२२ ।।

(सु०) उत्पत्तिप्रकारं कथयति---**क्षेत्रज्ञ** इति । **क्षेत्रज्ञ** आत्मा । **अभ्र**मित्यवर्षुकं मेघशकलमुच्यते, **मेघ** इति वर्षुको **मेघः ।** ननु मेघे कथमुदकप्राप्तिरित्यत आह---**आहुत्येति ।** आहुत्या यागादौ विहितया**प्यायितः** तर्पितः[5] संतुष्ट इति यावत्, **भानुभिः** किरणै**ग्रस्तरसः** स्वीकृतोदको **भानुः** सूर्यो मेघे **घनरसम्** उदकं **निधत्ते ।** मेघवृष्टेनोदकेन सह जीवस्यौषध्यादिप्रवेशमाह---**तं बलाहक** इति । जीवस्यौषधीभ्यो ऽन्नशुक्रादिद्वारा गर्भप्रवेशमाह---**ताभ्य** इति ।। १८-२२ ।।

**द्रवत्वं प्रथमे मासि कललाख्यं प्रजायते ।**
**द्वितीये तु घनः पिण्डः [6]पेशीषद्घनमर्बुदम् ।। २३ ।।**
**[7]पुंस्त्रीनपुंसकानां स्युः प्रागवस्थाः क्रमादिमाः ।**
**तृतीये त्वङ्कुराः पञ्च करार्ङ्घ्रिशिरसो मताः ।। २४ ।।**

[1] वायां (D). [2] शुद्धमिति (D). [3] स्तस्याम् (D). [4] शुक्लं 1 ed. [5] तृप्तः (A), (B). [6] पेशीसंज्ञकबुद् (D); ख. घ. ङ. पेशीबन्धन; पेशी च घन. [7] स्त्रीपुंनपुंस 1 ed.

**अङ्गप्रत्यङ्गभागाश्च सूक्ष्माः स्युर्युगपत् तदा ।**
**विहाय श्मश्रुदन्तादीन् जन्मानन्तरसंभवान् ।। २५ ।।**
[1]**एषा प्रकृतिरन्या तु विकृतिः संमता सताम् ।**
**चतुर्थे व्यक्तता तेषां** [2]**भावानामपि जायते ।। ।। २६ ।।**
**पुसां शौर्यादयो भावा भीरुत्वाद्यास्तु योषिताम् ।**
**नपुंसकानां संकीर्णा भवन्तीति प्रचक्षते ।। २७ ।।**

(क०) एवमुक्तप्रकारेणाशयगतस्य गर्भस्य प्रथममासत आरभ्य नवममासपर्यन्तं प्रतिमासमवस्थाभेदान् दर्शयति—**द्रवत्व**-मित्यादिना । **कललाख्यं** [3]कललमित्याख्या यस्य तत्तथोक्तम् । कललमिति अगृहीतकाठिन्यस्य शुक्लशोणितसंघातस्य द्रवीभाव उच्यते । **द्वितीये त्विति । घनः पिण्डः** जनिष्यमाणस्य पुंसः प्रागवस्था, **पेशी** जनिष्यमाणायाः स्त्रियाः प्रागवस्था, **ईषद्घनमर्बुदं** जनिष्यमाणस्य [4]नपुंसकस्य **प्रागवस्था,** इति क्रमः । घनः काठिन्ययुक्तः, पेशी चतुरश्रा मांसप्राया, ईषद्घनं घनपेश्युभय-साधारणत्वात्तथोक्तम्, अर्बुदं शाल्मलीमुकुलाकारम्; यथाहुः—

"चतुरश्रा स्मृता पेशी वृत्तः पिण्डो घनः स्मृतः ।
शाल्मलीमुकुलाकारमर्बुदं भिषजो विदुः ।।" इति ।।

**तृतीये त्विति ।** पूर्वोक्तघनपिण्डादेः, **कराङ्घ्रिशिरसः,** करौ चाङ्घ्री च शिरश्च कराङ्घ्रिशिरः, [5]प्राण्यङ्गत्वाद् द्वंद्वैकवद्भावः, तस्य कराङ्घ्रिशिरसः । **अङ्कुरा** इति ।[6] अङ्कुरा जायमाना एव कराङ्घ्रिशिरो[7] भवन्तीति भाव्यवयवविवक्षया अयं

[1] योषा (D). [2] भावानामुपजायते C. E. [3] कलाल (D).
[4] अर्बुदस्य (D). [5] तस्य प्रा (C). [6] येऽङ्कु 1 ed. [7] शिरांसि 1 ed.



व्यपदेशः **सूत्रशाटकन्यायेन । युगपदङ्कुरावस्थायामेव**[1] **। अङ्ग-प्रत्यङ्गभागा** इति । शिरोऽङ्कुरे ग्रीवानयननासिकाकर्णादिभागाः, कराङ्कुरयोरंसकूर्परमणिबन्धाङ्गुल्यादिभागाः, अङ्घ्रयङ्कुरयोरूरुजानुजङ्घागुल्फाङ्गुल्यादिभागाः । **सूक्ष्मा** अव्यक्तरूपाः ।।

**एषा प्रकृतिरिति ।** जन्मानन्तरसंभवान् श्मश्रुदन्तादीन् विहायाङ्कुराद्यवस्थायामेव सूक्ष्मरूपाङ्गप्रत्यङ्गभागोत्पत्तिः **प्रकृतिः,** जरायुजानां साधारणः स्वभाव इति यावत् । **अन्या तु विकृतिरिति ।** अन्या जन्मानन्तरभाविनां श्मश्रुदन्तादीनामङ्गादिसमानकालमेवोत्पत्तिः, अङ्गादिषु केषांचिद्ः अनुत्पत्तिः स्थान-व्यत्यासेनोत्पत्तिः, अङ्गुल्यादिसंख्याया न्यूनाधिकभावश्च । **चतुर्थ** इति । **तेषाम्;** अङ्गप्रत्यङ्गभागानां **व्यक्तता,** अभिव्यक्तता पृथगात्मता । **भावानामपि** शौर्यादीनाम् आत्मधर्माणां लीनानां व्यक्तता ।। २३-२७ ।।

(सु०) प्रतिमासं[2] गर्भस्यावस्थाविशेषमाह—**द्रवत्वमिति ।** **पुंस्त्रीनपुंसकानां** क्रमात् प्रागवस्था आह—**द्वितीय** इति । पिण्डस्य पेशीसाम्यं पुरुषावस्था, कठिनत्वं स्त्र्यवस्था, अर्बुदत्वमकठिनत्वं नपुंसकावस्था ।। **श्मश्रुदन्तादीनि**त्यादिशब्देन स्त्रीणां स्तनादि ज्ञातव्यम्, **जन्मानन्तरसंभवादिति** हेतूक्तेः ।। चतुर्थे भावाः प्रकटीभवन्तीत्युक्तम्; **तानेव** भावान् विभज्य कथयति—**पुंसामिति** ।। २३-२७ ।।

**मातृजं** [3]**चास्य हृदयं विषयानभिकाङ्क्षति ।**
**अतो मातुर्मनोऽभीष्टं कुर्याद् गर्भसमृद्धये ।। २८ ।।**
**तां च द्विहृदयां नारीमाहुर्दौहृदिनीं**[4] **बुधाः ।**

[1] मेषः 1 ed. [2] मासस्य (B). [3] क. ख. ग. मातृकं. [4] ख. ग. हृद्रोहदि; दौहृदिकां (D).

**अदानाद् दोहदानां[1] स्युर्गर्भस्य व्यङ्गतादयः ।। २९ ।।**
**मातुर्यद् [2]विषयालाभस्तदार्तो जायते सुतः[3] ।**
**गर्भः स्यादर्थवान् भोगी दोहदाद्राजदर्शने ।। ३० ।।**
**अलंकारेषु ललितो धर्मिष्ठस्तापसाश्रमे ।**
**देवतादर्शने भक्तो हिंस्रो भुजगदर्शने ।। ३१ ।।**
**गोधाशने तु निद्रालुर्बली गोमांसभक्षणे ।**
**माहिषे [4]शुकरक्ताक्षं लोमशं सूयते सूतम् ।। ३२ ।।**

(क०) **मातृजं चेति । अस्य** गर्भस्य **मातृजं** मातुर्जातं **हृदयम्,** चकारात् मातुर्हृदयं[5] च; तदुभयं यतो **विषयानभिकाङ्क्षति, अत** इति संबन्धः । अयमर्थः—मातृहृदयसंबद्धस्य गर्भहृदयस्यैव विषयाभिलाषित्वात् तदा **मातुरभीष्टम**वश्यं कर्तव्यं गर्भसमृद्धिकामेनेति ।। **दौहृदिनीमिति** । द्वयोर्हृदययोः समाहारो द्विहृदयम्, तस्य भावो दौहृदमिति पृषोदरादित्वात्साधुः; तत्संबन्धाद् गर्भोऽपि दौहृदमित्युच्यते; तद् दौहृदमस्या अस्तीति दौहृदिनी, ताम् । तदभीष्टाकरणे दोषमाह—**अदानादिति** । दोहदानाम्, दोहदं गर्भिणीमनोरथः, तद्विषया अपि दोहदानि, तेषाम् ।। तत्तद्दोहदवशादुत्पत्स्यमानस्योत्कर्षापकर्षावाह—**गर्भः स्यादित्या**दिना । गर्भिण्या राजदर्शने दोहदादभिलाषाद् गर्भ उत्पत्स्यमानो ऽर्थवान् भोगी च भवति । एवमुत्तरत्रापि द्रष्टव्यम् ।। २८-३२ ।।

(सु०) **मातृजमिति । मातृजं** मातृसंबन्धि **हृदयम् स्वाभीष्टान् विषयानभिकाङ्क्षति ।** अथवा, अस्य गर्भस्य मात्रवयवेषु[6] निष्पन्नं

[1] दौहृदानां (D). [2] द्विषये लोभ 1 ed. [3] ततः (D). [4] क्रूररक्ताक्षः (D). [5] ग. मातृहृदयं. [6] मात्रवयवे (A).



मातृजं हृदयमिति संबन्धः कर्तव्यः ।। दौहृदिनीपदं निर्वक्ति—**तां चेति** । दोहदादाने दोषमाह—**अदानादिति** । व्यङ्गता काणत्वान्धत्वपङ्गुत्वादिः । आदिशब्देन दुर्बलत्वं निरुत्साहत्वमित्यादि ज्ञातव्यम् ।। दोहदविशेषेण गर्भे फलविशेषमाह—**गर्भः स्यादिति** ।। **माहिष** इति । [1]माहिषमांसे दोहदिनी नारी **शुकवद् रक्ताक्ष**मालोहितलोचनं, **रोमशं** च **सुतम्** अपत्यं सूते ।। २८-३२ ।।

**प्रबुद्धं पञ्चमे चित्तं मांसशोणितपुष्टता ।**
**षष्ठे ऽस्थिस्नायुनखरकेश[2]रोमविविक्तता ।। ३३ ।।**
**बलवर्णौ चोपचितौ सप्तमे त्वङ्गपूर्णता ।**
**पाल्यन्तरितहस्ताभ्यां श्रोत्ररन्ध्रे पिधाय सः ।। ३४ ।।**
**उद्विग्नो गर्भसंवासादास्ते गर्भाशयान्वितः ।**
**स्मरन् पूर्वानुभूताः[3] स नानाजातीश्च यातनाः ।। ३५ ।।**
**मोक्षोपायमभिध्यायन् वर्तते [4]ऽभ्यासतत्परः ।**
**अष्टमे त्वक्स्मृती[5] स्यातामोजश्चैतच्च[6] हृद्भवम्[7] ।। ३६ ।।**
**शुद्धमापीतरक्तं च निमित्तं जीविते[8] मतम्[9] ।**
**पुनरम्बां[10] पुनर्गर्भं चञ्चलं तत्प्रधावति ।। ३७ ।।**
**अतो जातो ऽष्टमे मासि[11] न जीवत्योजसोज्झितः ।**
**[12]किंचित् कालमवस्थानं संस्कारात् खण्डिताङ्गवत् ।। ३८ ।।**
**समयः प्रसवस्य स्यान्मासेषु नवमादिषु ।**
**मातू रसवहां नाडीमनुबद्धा पराभिधा ।। ३९ ।।**

[1] माहिष्य (B). [2] क. घ. लोम. [3] ख. भूतिः. [4] ध्यानतत्परः (D). [5] त्वक्श्रुती (D). [6] स्तेजश्च (D). [7] क. ख. ग. ङ. हृद्भयम्. [8] जीवितं (D). [9] क. ग. गतम् fn. 1 ed. [10] पुनर्नारीं (D). [11] मासे 1 ed. [12] कंचि 1 ed.

**नाभिस्थनाडी[1] गर्भस्य मात्राहाररसावहा ।**
**कृताञ्जलिर्ललाटेऽसौ मातृपृष्ठमभि स्थितः ।। ४० ।।**
**अध्यास्ते संकुचद्गात्रो [2]गर्भे दक्षिणपार्श्वगः ।**
**वाम[3]पार्श्वस्थिता नारी क्लीबं [4]मध्यस्थितं मतम् ।। ४१ ।।**

(क०) **पञ्चम** इति । **प्रबुद्धम्,** पूर्वं लीनमन्तःकरणं तदा स्पन्दोन्मुखं भवति । **षष्ठ** इति । स्नायवः सूक्ष्मसिराः, केशाः शिरोजाः, रोमाणि अङ्गरुहाणि; बलवर्णौ, बलं सत्त्वम्, वर्णो गौरतादिः । **सप्तमे त्विति । पाल्यन्तरितहस्ताभ्याम् ।** पालिरूरुः, 'पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु' **इत्यभिधानात्;** पालिभ्यामूरुभ्यामन्तरितौ आच्छादितौ हस्तौ, ताभ्याम् । **श्रोत्ररन्ध्रे पिधायेति** अनेनाधोमुखतया संकुचद्गात्रत्वमुक्तम् । **उद्विग्नः** भीतः। **गर्भाशयान्वितो** जरायुग्रस्तदेहः । **अभ्यासतत्पर** इति; अभ्यासो नामात्र संसारजिहासया पौनःपुन्येनात्मचिन्तनम् ।। **अष्टम** इति । **त्वक्स्मृती स्यातामिति ।** यद्यपि त्वक्स्मृती सप्तमे ऽपि स्तः, तथाप्यत्र त्वचः सान्द्रत्वं स्मृतेश्च विकल्पविषयत्वं भवतीत्यर्थः । **ओजश्च** स्यादित्यूहः । **ओजः** शुक्लसारः । एतदोजश्च **हृद्भवं** हृन्निवासं शुद्धं दुष्टवाताद्यनुपहतम् **आपीतरक्तम्** ईषत्पीतरक्तवर्णं **जीविते** प्राणधारणे **निमित्तं** कारणं **मतमित्यन्वयार्थः** । तदोजश्च**ञ्चलमे**कत्रानवस्थितं **सद् अम्बां गर्भं** च **मुहुर्धावति ।** तदुक्तं **वाग्भटाचार्येण**––"ओजो ऽष्टमे संचरति मातापुत्रौ मुहुः[5] क्रमात्"

[1] नाभिस्था नाडी 1 ed; नादि (D). [2] गर्भो 1 ed; नरो (D).
[3] घ. ङ. पार्श्वाश्रिता fn. 1 ed. [4] मध्ये स्थितं (D); घ. ङ. मध्याश्रितं.
[5] पितुः 1 ed.



इति । यतो ऽष्टमे ऽनवस्थितम् ओजो ऽत इत्यर्थः । **अतो ऽष्टमे मासि जातो न जीवतीति** न माससाकल्यार्थः; अपि तु यदा ओजो गर्भं विहाय अम्बां संक्रामेत्, तदा जात ओजसोज्झितत्वान्न जीवतीत्यर्थः । यदा पुनः ओजो ऽम्बां विहाय गर्भं संक्रामेत्, तदा तु प्रसवे ऽम्बा न जीवति; यदा पुनरोजसः प्रधावनसमय एव प्रसवस्तदा तस्यैकत्राप्यनवस्थानादुभावपि न जीवत इति भावः । ननु लोके क्वचिदोजसोज्झितस्यापि गर्भस्य जन्मानन्तरं किंचित्कालं [1]जीवतो ऽवस्थानं दृश्यते, तत्कथमजीवनमित्याशङ्क्य सदृष्टान्तमुपपत्तिमाह––[2]**किंचित्कालमिति । संस्काराद्** ओजःसंचारसंस्कारात् । **खण्डिताङ्गवत्,** खण्डितं च तदङ्गमिति कर्मधारयः । खण्डितमङ्गं यथोत्तरक्षणे प्राणसंचारसंस्काराच्चेष्टमानं दृश्यते तद्वदित्यर्थः ।। **नवमादिष्विति ।** क्वचिन्नवमे मासे प्रसवः स्यात्, क्वचिद् दशमे, क्वचिदेकादशे ऽपीति दर्शयितुमादिशब्दग्रहणम् ।। ३३-४१ ।।

(सु०) **पञ्चमे** मासि[3] **चित्तं प्रबुद्धम्,** ज्ञानवान् भवतीत्यर्थः । **विविक्तता** पृथक्त्वे सति प्रकटत्वम् ।। **उपचितौ** वृद्धिं प्राप्तौ । **पाल्यन्तरितेति ।** पाली कर्णपाली, तयान्तरिताभ्यां व्यवहिताभ्यां पाणिभ्यां **श्रोत्ररन्ध्रे पिधाय । उद्विग्नो** वैराग्यमापन्नः । [4]**गर्भाशयः** गर्भे ध्यानातिशय आत्मानुसंधानम्, तेन **अन्वितः । यातनाः** पीडाः । **मोक्षोपायं** मोक्षसाधनम् **अभिध्यायन्** चिन्तयन् । **अभ्यासतत्पर** आत्मानुसंधाननिष्ठः । अष्टममासावस्थां कथयति––**अष्टम इति । श्रुतिः** बहिःस्थस्य शब्दस्याकर्णनं, न तु श्रवणेन्द्रियम्, तस्याकाशस्वरूपत्वान्नित्यत्वेनानुत्पत्तेः । ओजो

[1] किंचित्कालं 1 ed. [2] किंचि 1 ed. [3] मासे (A), (B).
[4] गर्भशयः (B).

धातुविशेषः । **शुद्धम्** अकलुषम् । **ओजो** जीविते निमित्तमित्युक्तम्; तदेव विशदयति—**पुनरम्बामिति** ।। गर्भस्य कथं पुष्टिरित्यत आह—**मातुरिति । नाडीमनुबद्धा** तद्विमिश्रा । **मातृपृष्ठमभि** लक्षीकृत्य । **दक्षिण-पार्श्वग** इति पुंलिङ्गनिर्देशात्पुमानिति गम्यते ।। ३३-४१ ।।

**क्रियते ऽधःशिराः सूतिमारुतैः प्रबलैस्ततः ।**
**निःसार्यते रुजद्गात्रो यन्त्रच्छिद्रेण बालकः ।। ४२ ।।**

**जातमात्रस्य तस्याथ[1] प्रवृत्तिः स्तन्यगोचरा ।**
**प्राग्जन्मबोधसंस्कारादिति जीवस्य नित्यता ।। ४३ ।।**

**भावाः स्युः षड्विधास्तस्य[2] मातृजाः पितृजास्तथा ।**
**रसजा आत्मजाः सत्त्वसंभवाः सात्म्यजास्तथा[3] ।। ४४ ।।**

**मृदवः शोणितं मेदो मज्जा प्लीहा यकृद् गुदम् ।**
**हृन्नाभीत्येवमाद्यास्तु[4] भावा मातृभवा मताः ।। ४५ ।।**

**श्मश्रुलोमकचाः स्नायुसिराधमनयो नखाः ।**
**दशनाः [5]शुक्लमित्याद्याः [6]स्थिराः पितृसमुद्भवाः ।। ४६ ।।**

(क०) **सूतिमारुतैः** अपानाख्यमारुतैः । यन्त्रच्छिद्रेण योनिरन्ध्रेण । तस्य जातस्य । **मृदव** इति । **मृदवः**, मृदुत्व-युक्ताः[7] । **प्लीहेति;** जीवाधिष्ठानभूतवामपार्श्वस्थितमांसविशे-षवाचकः प्लीहन् शब्दः । **यकृदिति** दक्षिणपार्श्वस्थितस्तादृशो मांसविशेषः । **स्नायुसिराधमनयः**, स्नायवः सूक्ष्मनाड्यः, सिराः

[1] ख. ग. स्यापि. [2] स्तत्र (D). [3] सातमजास्तथा (D), सात्म्यगोचराः 1 ed; घ. ङ. सात्म्यजास्तदाः. [4] ङ. द्यास्ते. [5] शुक्र 1 ed; शुद्ध (D). [6] भावाः (D). [7] युक्ताः नाड्यः (D).



ततोऽपि स्थूलाः, **धमनय** एरण्डकाण्डवत् स्थूलाः । **स्थिराः** कठिनाः ।। ४२-४६ ।।

(सु०) प्रसूतिप्रकारं कथयति—**क्रियत** इति । **सूतिमारुतैः** प्रसूतिसाधनैर्वायुभिः । **रुजद्गात्रः** पीडितदेहः । **यन्त्रच्छिद्रेण,** यन्त्राकारेण सूक्ष्मेण योनिरन्ध्रेणेत्यर्थः ।। जातमात्रस्य स्तन्यपानादिप्रवृत्त्या जीवस्य नित्यत्वं कथयति—**जातमात्रस्येति ।।** भावभेदान् कथयति—**भावाः स्युरिति ।** रसोऽन्नरसः । सत्त्वमन्तःकरणविशेषः । सात्म्यं चिरपरिचय-संस्कारविशेषः ।। **मातृजान्** भावान् कथयति—**मृदव** इति । **मृदवः**, मार्दवयुक्ताः प्रदेशाः । **प्लीहा** [1]**यकृत्** च हृदयस्थितौ मांसखण्डविशेषौ । **हृच्च** नाभिश्च **हृन्नाभीति** समाहारद्वंद्वः । 'द्वंद्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावः ।। ४२-४६ ।।

**शरीरोपचयो वर्णो वृद्धिः सुप्तिर्बलं स्थितिः ।**
**अलोलुपत्वमुत्साहा इत्यादीन् [2]रसजान् विदुः ।। ४७ ।।**

**इच्छा द्वेषः सुखं दुःखं धर्माधर्मौ च भावना ।**
**प्रयत्नो ज्ञानमायुश्चेन्द्रियाणीत्यात्मजा मताः ।। ४८ ।।**

**ज्ञानेन्द्रियाणि श्रवणं स्पर्शनं दर्शनं तथा ।**
**रसनं घ्राणमित्याहुः पञ्च तेषां तु गोचराः ।। ४९ ।।**

**शब्दः स्पर्शस्तथा रूपं रसो गन्ध इति क्रमात् ।**
**वाक्कराङ्घ्रिगुदोपस्थानाहुः कर्मेन्द्रियाणि तु ।। ५० ।।**

**वचनादानगमनविसर्गरतयः क्रमात् ।**
**क्रियास्तेषां मनो बुद्धिरित्यन्तःकरणद्वयम् ।। ५१ ।।**

[1] यकृत् हृदयस्थितो मांसखण्डविशेषः (A), (B). [2] अन्नरसजान् (A), (B).

(क०) **शीरीरोपचय** इत्यादिर्**ग्रन्थविस्तरकातरा** इत्यन्तो ग्रन्थो निगदव्याख्यातः ।। ४७-७४ ।।

(सु०) रसजानात्मजांश्च कथयति—**शरीरेति । उपचयः** पीनत्वम् । **वृद्धिः** प्रमाणाधिक्यम् ।। ४७-४८ ।। ज्ञानेन्द्रियाणि तद्विषयांश्च विभजते—**ज्ञानेन्द्रियाणीति । स्पर्शनं** त्वगिन्द्रियम् । **दर्शनं** चक्षुः । **रसनं** जिह्वा ।। ४९-५० ।। **कर्मेन्द्रियाणि** तद्व्यापारांश्च कथयति—**वाक्करेति** ।। ५०-५१ ।। **वेदान्तिनां** मतमाश्रित्यान्**तःकरणद्वयं** कथयति—**मनो बुद्धिरिति । वाचस्पत्ये**[1] 'बुद्धिमनसोश्च करणयोरहमिति प्रख्यानप्रतिभासालम्बनत्वं योगः' इत्युक्तम् ।। ५१ ।।

**सुखं दुःखं च विषयौ विज्ञेयौ मनसः क्रिया ।**
**[2]स्मृतिभ्रान्तिविकल्पाद्या धियो व्यवसितिर्मता ।। ५२ ।।**
**ब्रह्मयोनीनीन्द्रियाणि भौतिकान्यपरे जगुः ।**
**सत्त्वाख्यमन्तःकरणं गुणभेदात् त्रिधा मतम् ।। ५३ ।।**

(सु०) बुद्धिमनसोर्विवेकार्थं व्यापारविशेषं कथयति—**सुखमिति ।** ततश्च सुखदुःखोपलब्धिसाधनं मनः, **स्मृतिभ्रान्तिविकल्पादिसाधनं** बुद्धिरिति विवेकः । व्यवसितिर्व्यापारः ।।५२।। मतभेदेनेन्द्रियकारणं निरूपयति—**ब्रह्मेति । वेदान्तिनस्तु**—ब्रह्मकारणकानीन्द्रियाणीत्याहुः, सर्वस्यापि प्रपञ्चस्य ब्रह्मविवर्तत्वात्[3] । अथवा **ब्रह्मयोनीनि** अभौतिकानीति **सांख्या** मन्यन्ते । अपरे वैशेषिका **भौतिकानि** 'पृथिव्यादिभूतोत्पन्नानीत्याहुः । तृतीय**मन्तःकरणं** कथयति—**सत्त्वाख्यमिति ।** सत्त्वाख्यं स्वभावाख्यमित्यर्थः । **गुणभेदात्**, सत्त्वरजस्तमोभेदात् ।। ५३ ।।

**सत्त्वं रजस्तम इति गुणाः सत्त्वात्तु सात्त्विकात्[4] ।**
**आस्तिक्यशु[5]द्धधर्मैकरुचिप्रभृतयो मताः ।। ५४ ।।**

[1] वाचस्पतौ (A), (B). [2] स्मृतिः प्रीतिर्वि (D). [3] परिवर्तत्वात् (B).
[4] सात्विकाः 1 ed. [5] शुक्लधर्मैक्य 1 ed; बुद्धिधर्मैक्य (D).



**[1]सत्त्वात्तु राजसाद् भावाः कामक्रोधमदादयः ।**
**निद्रालस्य[2]प्रमादार्तिवञ्चनाद्यास्तु तामसात्[3] ।। ५५ ।।**

(सु०) गुणान्विभज्य तज्जातान् कथयति—**सत्त्वमिति ।** सात्त्विकान्तःकरणकार्यं कथयति—**सत्त्वादिति ।** आस्तिक्यम् अस्ति परलोक इति श्रद्धा शुद्धो[4] निर्मलो यो धर्मस्तत्रैका रुचिः प्रीतिः । प्रभृतिशब्देनाधर्मान्निवृत्तिरुच्यते ।। ५४ ।। राजसान्तःकरणकार्यं कथयति—**सत्त्वादिति । राजसाद्**रजोगुणप्रधानात् सत्त्वात् सत्त्वाख्यादन्तःकरणात् । तामसान्तःकरणकार्यं कथयति—निद्रेति । **निद्रा,** इन्द्रियाणां बाह्यविषयव्यापारोपरमः सुप्तिः सुषुप्तिर्वा । **आलस्य**मिष्टसाधनेष्वपि व्यापारेष्वप्रवृत्तिः । **प्रमादो** निरवधानत्वम् । **वञ्चनं** प्रतारणम् ।। ५५ ।।

**प्रसन्नेन्द्रियतारोग्यानालस्याद्यास्तु सात्म्यजाः ।**
**देहो भूतात्मकस्तस्मादादत्ते तद्गुणानिमान् ।। ५६ ।।**
**शब्दं श्रोत्रं सुषिरतां वैविक्त्यं सूक्ष्मबोद्धृताम्[5] ।**
**[6]बिलं च गगनाद्वायोः स्पर्शं च स्पर्शनेन्द्रियम् ।। ५७ ।।**

(सु०) सात्म्यजान्भावान्कथयति—**प्रसन्नेति । आरोग्यं** [7]नीरोगत्वम् । देहे भूतगुणान् विभजते—देह इति । **भूतात्मकः** पञ्चमहाभूतारब्धः । यद्यपि देहस्यैकैकभूतारब्धत्वमेव, तथाप्युपष्टम्भकत्वमन्येषां भूतानां विद्यत एव ।। ५६ ।। **सुषिरता** सच्छिद्रत्वम् ।। **वैविक्त्यं** विविक्तस्य भावो देहस्वभावप्रापकत्वेन[8] पृथगवस्थानम् । सूक्ष्मबोद्धृता दुर्बोधस्याप्यर्थस्यानायासेन परिज्ञानम् । **बिलं** स्थूलं छिद्रं सुषिरं त्वल्पमिति विवेकः । शरीरे वायुगुणान् कथयति—**वायोरिति ।** स्पर्शो गुणः । **स्पर्शनेन्द्रिय** त्वगिन्द्रियम् ।। ५७ ।।

[1] रजसो राजसा भावाः 1 ed. [2] प्रमादादि (D). [3] तामसाः 1 ed.
[4] तत्र दानशुद्धो (A); स्थाने शुद्धो (B). [5] बोद्धृता (D). [6] बलं 1 ed.
[7] अरोगत्वं (A). [8] प्रकटत्वेन (A), (B).

**उत्क्षेपणमवक्षेपाकुञ्चने गमनं तथा ।**
**प्रसारणमितीमानि पञ्च कर्माणि रूक्षताम्[1] ।। ५८ ।।**

**प्राणापानौ तथा व्यानसमानोदानसंज्ञकान् ।**
**नागं कूर्मं च कृकरं देवदत्तं धनंजयम् ।। ५९ ।।**
**दशेति वायुविकृतीस्तथा गृह्णाति लाघवम् ।**

(सु०) **उत्क्षेपणम्** ऊर्ध्वाकाशदेशेन सह संयोगजनटकं कर्म । **अवक्षेपः** अधराकाशदेशेन सह संयोगजनकं कर्म । **आकुञ्चनं** स्वाभिमुखानयनम् । **गमनं** दिग्विशेषानवच्छिन्नाकाशदेशसंयोगजनकं कर्म । **प्रसारणं** परतो **रूक्षता** स्निग्धत्वाभावः ।। ५८ ।। **प्राणापानादयो दश** वायुविकाराः । नयनम् । **लाघवं** गुरुत्वाभावः । एतान् गुणान् वायोर्**गृह्णाति** शरीरमिति संबन्धः ।। ५९-६०- ।।

**तेषां मुख्यतमः प्राणो नाभिकन्दादधः स्थितः ।। ६० ।।**
**चरत्यास्ये नासिकयोर्नाभौ हृदयपङ्कजे ।**
**शब्दोच्चारणनिःश्वासोच्छ्वासकासादिकारणम् ।। ६१ ।।**
**अपानस्तु गुदे मेढ्रे कटीजङ्घोदरेषु च[2] ।**
**[3]नाभिकन्दे वङक्षणयो[4]रूरुजानुनि तिष्ठति ।। ६२ ।।**
**[5]अस्य मूत्रपुरीषादिविसर्गः[6] कर्म कीर्तितः[7] ।**
**व्यानो ऽक्षिश्रोत्रगुल्फेषु कटयां घ्राणे च[8] तिष्ठति[9] ।। ६३।।**
**प्राणापानधृतित्यागग्रहणाद्यस्य कर्म च ।**
**समानो व्याप्य निखिलं शरीरं वह्निना सह ।। ६४ ।।**

[1] जज्ञिरे (D). [2] तु (D). [3] नाभौ स्कन्धत्र° C. E. [4] रुजानुषु 1 ed; C. E. घ. रूर्वोजानुनि. [5] तस्य C. E. [6] विसर्गकर्मकीर्तितम् C. E. [7] कीर्तितम् 1 ed. [8] घ्राणेषु 1 ed. [9] ऽवतिष्ठति C. E.



**द्विसप्ततिसहस्रेषु नाडीरन्ध्रेषु संचरन् ।**
**भुक्तपीतरसान् सम्यगानयन् देहपुष्टिकृत् ।। ६५ ।।**

(सु०) मुख्यस्य प्राणस्य स्थानं व्यापारं च कथयति—**तेषामिति** । **मुख्यतमः** प्रधानभूतः, अन्येषामपानादीनां तदनुयायित्वात् । **नाभिकन्दादध** आधारप्रदेशे **चरति** विचरति ।। ६०-६१ ।।

अपानस्य स्थानं कर्म च कथयति—अपानस्त्विति । **कटीजङ्घोदरेषु** इत्यत्र पञ्चस्वित्यध्याहार्यम्, अन्यथा 'द्वंद्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावप्राप्तेः । संख्योपादाने तु नैकवद्भावः प्राप्नोति, 'कथं चेद्दश दन्तोष्ठाः संख्यावाचीह भेदकः' इति **विचारचिन्तामणा**वुक्तत्वात् ।। ६२ ।। **मूत्रपुरीषादीति** । अत्रादिशब्देन वीर्यदूषिकादिग्रहणम् । व्यानस्य स्थानं कर्म च कथयति—**व्यान** इति ।। ६३ ।। **प्राणापानयोः** पवनयोः धृतिः धारणम्, कुम्भनमिति यावत् । **त्यागो** वहिर्निःसारणम् । **ग्रहणम्** अन्तः प्रवेशनम् । आदिशब्देन **योगशास्त्र**प्रसिद्धं नकुलकर्मादि । समानस्य स्थानं कर्म च कथयति—**समान** इति । [1]वह्निनोदर्येण भुक्तपीतपाकहेतुना सह[2] संचरन् भुक्तपीतरसान् नाडीरन्ध्रेष्वानयन् देहपुष्टिं करोतिति संबन्धः ।। ६४-६५ ।।

**उदानः पादयोरास्ते हस्तयोरङ्गसंधिषु ।**
**[3]कर्मास्य देहोन्नयनोत्क्रमणादि प्रकीर्तितम् ।। ६६ ।।**
**त्वगादिधातूनाश्रित्य पञ्च नागादयः स्थिताः ।**
**उद्गारादि निमेषादि क्षुतप्रभृति च क्रमात् ।। ६७ ।।**

[1] वह्निना औदयण (B). [2] स (A), (B). [3] देहस्य कर्मनयनोत्क्र (D); कर्मास्य देहोन्नमनोत्क्र 1 ed.

**[1]तन्द्राप्रभृति शोफादि तेषां कर्म प्रकीर्तितम् ।**
**अग्नेस्तु लोचनं रूपं पित्तं पाकं[2] प्रकाशताम् ।। ६८ ।।**

(सु०) उदानस्य स्थानं कर्म च कथयति---**उदान** इति । [3]देहस्योन्नयनम् ऊर्ध्वनयनम् । उत्क्रमणं मरणम् । आदिशब्देन हिक्कादि ।।६६।। नागादीनां पञ्चानां वायूनां स्थानं कर्म च कथयति---**त्वगादीति** । त्वचि नागस्यावस्थानम्, शोणिते कूर्मस्य, मांसे कृकरस्य,[4] **मेदसि** देवदत्तस्य, अस्थ्नि धनंजयस्य ।। ६७ ।। **तन्द्रा** आलस्यम् । **प्रभृति**शब्देन जृम्भणादि । शरीरे तेजोगुणान् कथयति—**अग्नेस्त्विति** । **लोचनं** चक्षुरिन्द्रियम् । [5]**पित्तं** दोषविशेषः । **पाको** ऽन्नरसपचनम् । **प्रकाशता** तेजस्विता ।। ६६-६८ ।।

**अमर्षं तैक्ष्ण्यमूष्माणमोजस्तेजश्च शूरताम् ।**
**मेधावितां [6]तथादत्ते जलात्तु रसनं रसम्[7] ।। ६९ ।।**

**शैत्यं स्नेहं द्रवं स्वेदं[8] मूत्रादि [9]मृदुतामपि ।**
**भूमेर्घ्राणेन्द्रियं गन्धं स्थैर्यं धैर्यं[10] च गौरवम् ।। ७० ।।**

**श्मश्रुकेशनखं दन्तानस्थ्याद्यन्यच्च कर्कशम् ।**
**वातादिधातुप्रकृतिर्व्योमादिप्रकृतिस्तथा ।। ७१ ।।**

**सप्तधा सात्त्विको यश्च ब्रह्मेन्द्रियमविग्रहः ।**
**वारुणश्चाथ कौबेर आर्षो गान्धर्वविग्रहः[11] ।। ७२ ।।**

**राजसः षड्विधो [12]देहः पैशाचो राक्षसस्तथा ।**
**आसुरः शाकुनः सार्पः प्रेतदेहस्तथा परः ।। ७३ ।।**

[1] तन्द्री (D). [2] पक्व (D). [3] देहे (A). [4] कृकलस्य (B).
[5] दीप्तं (B). [6] समा (D); क. ख. ग. तदाद. [7] रसनां रस (D).
[8] द्रवस्वेद 1 ed. [9] मृदु (D). [10] स्थैर्यधैर्ये 1 ed. [11] विग्रहाः (D).
[12] घ. यक्षपै fn. 1 ed; यस्य (D).



**तामसस्त्रिविधो देहः पशुमत्स्याङ्घ्रिपाकृतिः ।**
**तेषां लक्ष्माणि न ब्रूमो ग्रन्थविस्तरकातराः[1] ।। ७४ ।।**

(सु०) **अमर्षः** कोपः । **तैक्ष्ण्यम्** असहनत्वम् । **ऊष्मा** स्वेदोत्पादकः तापविशेषः । **ओजः** पूर्वोक्तम् । **शूरता** निर्भयत्वम् । **मेधाविता** अनुभूतस्याविस्मृतिः । उदकगुणान् कथयति---**जलात्त्विति** । **रसनं** रसनेन्द्रियम् ।। ६९ ।। **स्नेहः** स्निग्ध इति व्यवहारकारणभूतो वाग्विशेषगुणः । पृथ्वीगुणान् कथयति---**भूमेरिति** । **स्थैर्यम**त्वरत्वम् । **धैर्यं** आपद्यप्यव्यामूढता । **गौरवं** पतनासमवायिकारणभूतो गुणः ।। ७० ।। अन्यानपि देहभेदान् कथयति---**वातादीति** । वातादयो वातपित्तश्लेष्माणः । व्योमपवनतेजोऽम्बुभूमयो **व्योमादयः** ।।७१ ।। **सप्तधा** सप्तप्रकारः सात्त्विको देहो ब्रह्मादीनाम्, **षड्विधः राजसो** देहः पिशाचादीनाम्, **त्रिविधस्तामसो** देहः पश्वादीनामिति । तेषां लक्षणं किमिति नोक्तमित्यत आह---**तेषामिति** ।। ६९-७४ ।।

**पिण्डस्याहुः षडङ्गानि शिरः पादौ करौ तथा ।**
**मध्यं चेत्यथ वक्ष्यन्ते प्रत्यङ्गान्यखिलान्यपि ।। ७५ ।।**

**त्वचः सप्त कलाः सप्त स्नायुश्लेष्मजरायुभिः ।**
**[2]छन्नाः कोशाग्निभिः पक्वास्ता धातूनन्तरान्तरा ।। ७६ ।।**

**सीमभूताश्च धातूनां काष्ठसारोपमा मताः ।**
**आद्या [3]मांसधरा [4]मांसे सिरा धमनयस्तथा ।। ७७ ।।**

**स्नायुस्त्रोतांसि रोहन्ति पङ्के पङ्कजकन्दवत् ।**
**असृङ्मेदःश्लेष्मशकृत्पित्तशुक्लधराः पराः ।। ७८ ।।**

[1] घ. कातरात्; C. E. [2] स्वस्वकोषाग्निभिः पक्वास्ते त्रिधा C. E.
[3] मांसोद्भवा C. E. [4] मांसि (B).

(क०) जातस्य मातृजादीन् [1]षड्विधान् भावान् भौतिकस्य देहस्य तत्तद्भूतगुणोपादानं चोक्त्वा तस्य देहस्याङ्गप्रत्यङ्गधातुधमनीचक्रादिप्रपञ्चमाह—**पिण्डस्याहुरित्यादिना । प्रत्यङ्गानि** त्वक्कलादीनि । **वक्ष्यन्ते,** समनन्तरमेवेत्यर्थः ।। **त्वचः सप्तेति ।** पच्यमानादसृजो जायमाना भासिन्यादयः सप्त त्वचः । यथोक्तमा**युर्वेदे—**

"इति भूतमयो देहस्तत्र सप्त त्वचो ऽसृजः ।
पच्यमानात् प्रजायन्ते [2]क्षीरात् संतानिका इव ।।
भासिनी लोहिनी[3] श्वेता [4]ताम्रा त्वग्वेदिनी तथा ।
स्याद् रोहिणी मांसधरा [5]सप्तमी परिकीर्तिता ।।"

इति । **कलाः सप्तेति ।** रसक्लेदो धातुसारविशेषः[6] पूर्वोत्तरधात्वन्तरालस्थः[7] स्नायुश्लेष्मजरायुच्छन्नः कोशाग्निपक्वः [8]काष्ठसारोपमः सूक्ष्मरूपत्वात् कलेत्युच्यते । **तथा चोक्तम्—**

"[9]धात्वाशयान्तरक्लेदो विपक्वः [10]स्वं स्वमूष्मणा ।
श्लेष्मस्नाय्वपराच्छन्नः कलाख्यः काष्ठसारवत् ।।"

इति । स्नाय्वादिच्छन्नत्वादिकं[11] विशेषणं त्वक्कलोभयसाधारणं वेदितव्यम् । तास्त्वचः कलाश्च धातूनन्तरान्तरा त्वगादिसप्तधातूनां [12]मध्ये मध्ये सीमभूताः तेषामेव धातूनामसंकीर्णतापादका

[1] जादिषड्वि 1 ed. [2] जीवाः सांतानिका 1 ed; जीवाः सन्तानिका (D). [3] लोहिता 1 ed. [4] त्वक्ताम्रा वेदिनी 1 ed. [5] सप्तधा 1 ed. [6] सारशेषः 1 ed; धात्वाधार विशेषः (C). [7] धात्वन्य 1 ed. [8] स्वस्वमूष्मणा श्लेष्मस्नायुजरायुच्छन्नः कलाख्यः 1 ed. [9] धात्वन्तरा श्रयक्लेदो (C). [10] स्वस्वमू (D); स्वाय्ववराच्छन्नः (C). [11] च्छन्नत्वापादकं 1 ed. [12] मध्ये सीम 1 ed.



इत्यर्थः ।। **आद्येति । आद्या** त्वक् कला [1]**च मांसधरा** नाम, पराः **षट्** त्वचः कलाश्च असृगादिधराः ।। ७५-७८ ।।

(सु०) देहे ऽङ्गप्रत्यङ्गानि विभजते—**पिण्डस्येति ।।** [2]**धातूनन्तरान्तरा** सप्तानां धातूनां मध्ये मध्य इत्यर्थः ।। **काष्ठसारोपमा** कठिना आद्या **मांसधरा** त्वक्, अन्यास्त्वकठिना इत्यर्थः । सिरादयः कुतोत्पद्यन्त इत्यत आह—**मांस** इति । **धमनयः** सिराविशेषाः ।। **स्नायुस्तन्तुसंनिभो** मांसबन्धनविशेषः । अन्यास्त्वचः कलाश्च किं धारयन्तीत्यत आह—**असृगिति** ।। ७५-७८ ।।

**त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्लानि[3] धातवः ।**
**सप्त स्युस्तत्र [4]चोक्ता त्वग्रक्तं [5]जाठरवह्निना ।। ७९ ।।**
**पक्वाद् भवेदन्नरसादेवं रक्तादिभिः परे ।**
**स्वस्वकोशाग्निना[6] पक्वैर्जन्यन्ते धातवः क्रमात् ।। ८० ।।**
**रक्त[7]श्लेष्मामपित्तानां पक्वस्य मरुतस्तथा ।**
**मूत्रस्य चाश्रयाः सप्त क्रमादाशयसंज्ञकाः ।। ८१ ।।**
**गर्भाशयो ऽष्टमः स्त्रीणां [8]पित्तपक्वाशयान्तरे ।**
**प्रसन्नाभ्यां कफासृग्भ्यां हृदयं पङ्कजाकृति ।। ८२ ।।**
**[9]सुषिरं स्यादधोवक्त्रं [10]यकृत्प्लीहान्तरस्थितम् ।**

(क०) धातूनुद्दिश्य तेषामुत्पत्तिं दर्शयति—**त्वगसृगि**त्यादिना । **तत्र चोक्ता त्वगिति** । चकारो भिन्नक्रमः, त्वक्चेति ।

[1] च त्वक्कला 1 ed. [2] सम धातू (A), (B). [3] मज्जाशुक्राणि 1 ed. [4] चोक्तत्वाद्रक्तं (D). [5] ख. ङ. जठर. [6] शादिना 1 ed; शाग्निभिः (D). [7] श्लेष्मादिपि (D). [8] पित्तं पक्वा (D). [9] स्नायुवं श्यमधो C. E. [10] यच्चदेहान्तरे (D).

अयमर्थः––अत्र धातुत्वेन परिगणिता बाह्या त्वगपि धातुसीमभूतत्वग्लक्षणेनैवोक्तलक्षणेति **रक्तश्लेष्मे**त्यत्र रक्तशब्देन धातुव्यतिरिक्तं रक्तं विवक्षितम् ।। ७९-८२- ।।

(सु०) धातून् विभजते––**त्वगिति**। रक्तादीनामुत्पत्तिप्रकारमाह––**रक्तेति**।[1] [2]**आमो** ऽपक्वो रसः ।। स्त्रीणामधिकमाशयं कथयति ––**गर्भाशय** इति। हृदयस्योत्पत्तिप्रकारं [3]संस्थानविशेषं स्थानं च कथयति ––**प्रसन्नाभ्यामिति** ।। ७९-८२- ।।

**एतच्च चेतनस्थानं तदस्मिंस्तमसावृते ।। ८३ ।।**
**निमीलति स्वपित्यात्मा जागर्ति विकसत्यपि ।**
[4]**द्वेधा स्वप्नसुषुप्तिभ्यां स्वापो बाह्येन्द्रियाणि चेत् ।। ८४ ।।**
**लीयन्ते हृदि जागर्ति चित्तं स्वप्नस्तदोच्यते ।**[5]
[6]**मनश्चेल्लीयते प्राणे सुषुप्तिः स्यात् तदात्मनः ।। ८५ ।।**
**स्वमपीतः**[7] **परात्मानं**[8] **स्वपित्यात्मेत्यतो मतः ।**

(क०) **एतच्च चेतनस्थानमिति**। एतत् **पङ्कजाकृत्यधोवक्त्रं सुषिरं** हृत्पङ्कजमित्यर्थः। अत्र चशब्दः चेतनाभिव्यक्तिहेतुभूतस्थानान्तरसमुच्चयार्थः। स्थानान्तराणि तु 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यादि**श्रुत्यु**क्तानि[9] प्राणादीनि। **चेतनस्थानं** चेतनस्य कूटस्थब्रह्मणः स्थानमभिव्यक्तिस्थानम्। अत्र चेतनशब्दो न जीवपरः। कुतः? **श्रुति**विरोधात्, 'अथ यदिदं

[1] रक्तमिति (A), (B). [2] आशयान् कथयति––रक्ते। आमान् कथमति (A). [3] स्थान (B). [4] द्विधा 1 ed. [5] स्वप्नंतदुच्यते C. E. [6] मनस्संलीयते (D). [7] छ. पीतं स्वप्नप्रीता (D); स्वपतः (C). [8] परमात्मानं (C). [9] श्रुत्युक्तादीनि 1 ed.



ब्रह्मपुरम्' [1]'इत्यादिः; **श्रुतिर्हि** 'पुण्डरीकसंनिवेशम्' इत्यत्र पुण्डरीकस्य ब्रह्मस्थानत्वमाह। तथा हि **भामत्यां दहराधिकरणे** 'अथ यदिदमस्मिन् ब्रह्मपुरं दहरं सूक्ष्मगुहाप्रायं पुण्डरीकसंनिवेशं वेश्म दहरम्' इत्युपक्रम्य 'इमाः सर्वाः प्रजा अहरहर्ब्रह्म गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति **श्रुति**मुदाहृत्य 'स्वाप[2]कालेऽपि सर्व एवायं विद्वानविद्वांश्च जीवलोको हृत्पुण्डरीकाश्रयं दहराकाशाख्यं ब्रह्मलोकं प्राप्तोऽपि, अनाद्यविद्यातमःपटलपिहितदृष्टितया ब्रह्मभूयमापन्नोऽहमस्मीति न वेद' इत्यादिना महता संदर्भेण दहरशब्दस्य आकाशजीवपरत्वदूषणपूर्वकं ब्रह्मपरत्वप्रतिपादनाद्, अत्रापि हृत्पङ्कजाधिष्ठातृत्वेन चेतनं ब्रह्मैवेत्यवगन्तव्यम्। **तदस्मिन्नि**त्यादि। अस्मिन् चेतने ब्रह्मणि **तमसा** अनाद्यविद्यया आवृते पिहिते सति, तद्धृदयपङ्कजं यदा **निमीलति** मुकुलीभवति तदा **आत्मा** जीवः **स्वपिति** निद्राति, तत्पङ्कजं यदा **विकसति** तदा जीवो **जागर्ति** अहमिति बुध्यते। **अपिश्चार्थे**। एतदुक्तं भवति ––आत्मनः स्वरूपाज्ञानेन जीवभावेऽपि अनादिविश्वतैजसप्राज्ञव्यपदेशहेतवो जीवस्य जाग्रत्स्वप्नसुषुप्त्यवस्था भवन्ति इति। **द्वेधेति**। स्वापो निद्रा, तद्विशेषो स्वप्नसुषुप्ती ।। ८३-८६- ।।

(सु०) हृदयमेव स्वप्नजागरणयोः कारणमित्याह––**एतच्चेति**। **चेतनस्य** आत्मनः **स्थानम्**। अस्मिन् **निमीलति** सति **आत्मा स्वपिति, विकसति** सति **जागर्ति**। स्वापस्य द्वैविध्यं कथयित्वा तं लक्षयति––**द्वेधेति**। **चित्तं** मनः, **जागर्ति** स्वाप्निकान् पदार्थान् पश्यति। **स्वपिति**शब्दं निर्वक्ति ––**स्वमपीत** इति। 'स्वं ह्यपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते' इति **श्रुतेः** ।। ८३-८६- ।।

[1] इत्यादि श्रुति 1 ed. [2] हि 1 ed.

श्रवणे नयने नासे वदनं गुदशेफसी ।। ८६ ।।
बहिर्मलवहानि स्युर्नव स्रोतांसि देहिनाम् ।
स्त्रीणां त्रीण्यधिकानि स्युः स्तनयोर्द्वे भगे ऽसृजः ।। ८७ ।।
अस्थिस्नायुसिरामांसस्थानि [1]जालानि षोडश ।
षट् कूर्चाः करयोरङ्घ्र्योः कंधरायां च मेहने ।। ८८ ।।
पार्श्वयोः पृष्ठवंशस्य चतस्रो मांसरज्जवः ।
सीवन्यः पञ्च शिरसि द्वे जिह्वालिङ्गयोर्मते ।। ८९ ।।
चतुर्दशाष्टादश वा संमता अस्थिराशयः ।
अस्थ्नां शरीरे संख्या स्यात् षष्टियुक्तं शतत्रयम् ।। ९० ।।
वलयानि कपालानि रुचकास्तरुणानि च ।
नलकानीति तान्याहुः पञ्चधा ऽस्थीनि सूरयः ।। ९१ ।।
त्रीण्येवास्थिशतान्यत्र[2] धन्वन्तरिरभाषत ।
[3]द्वे शते[4] त्वस्थिसंधीनां स्यातामत्र दशोत्तरे ।। ९२ ।।
कोरकाः [5]प्रतरास्तुन्नाः[6] [7]सीवन्यः स्युरुलूखलाः ।
सामुद्गा मण्डलाः शङ्खावर्ता वायसतुण्डकाः ।। ९३ ।।
इत्यष्टधा समुद्दिष्टा मुनीन्द्रैरस्थिसंधयः ।
पेशीस्नायुसिरासंधिसहस्रद्वितयं मतम् ।। ९४ ।।
नव स्नायुशतानि स्युश्चतुर्धा स्नायवो मताः ।
प्रतानवत्यः सुषिराः कण्डराः पृथुलास्तथा ।। ९५ ।।
बन्धनैर्बहुभिर्बद्धा [8]भूरिभारक्षमा [9]भवेत् ।
नौरम्भसि यथा स्नायुशतबद्धतनुस्तथा ।। ९६ ।।

[1] नालानि (D). [2] शतानीति (D). [3] सप्त सेवनी (A). [4] नामभेदेन 1 ed. [5] घ. प्रचुराः. [6] स्सन्नाः (D). [7] सेवनाः 1 ed. [8] बद्धो C. E. [9] क्षमो C. E.



पञ्च [1]पेशीशतान्याहुः शरीरस्थानि सूरयः ।
अधिका विंशतिः स्त्रीणां तत्र स्युः स्तनयोर्दश ।। ९७ ।।

यौवने ताः प्रवर्धन्ते दश योनौ [2]तु तत्र च ।
द्वे अन्तः प्रसृते बाह्ये द्वे तिस्रो गर्भमार्गगाः ।। ९८ ।।

शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्तात्र तृतीयके ।
आवर्ते गर्भशय्यास्ति पित्तपक्वाशयान्तरे ।। ९९ ।।

रोहिताभिधमत्स्यस्य सदृशी तत्र पेशिका ।
[3]शुक्लार्तवप्रवेशिन्यस्तिस्रः प्रच्छादिका मताः ।। १०० ।।

सिराधमनिकानां तु लक्षाणि नव[4]विंशतिः ।
सार्धानि स्युर्नवशती षट्पञ्चाशद्युता तथा ।। १०१ ।।

दश मूलसिरा ओजोवाहिन्यो हृदयाश्रयाः ।
द्व्यङ्गुलं चाङ्गुलदलं यवं यवदलं तथा ।। १०२ ।।

गत्वा द्रुमदलस्येव सीवन्यः प्रतता यदा ।
भिद्यन्ते तास्तदा सप्त शतानि परिसंख्यया ।। १०३ ।।

तासु जिह्वास्थिते द्वे द्वे वाग्रसज्ञानकारणे ।
घ्राणे गन्धवहे द्वे द्वे मेषोन्मेषकृतौ दृशोः ।। १०४ ।।

श्रोत्रयोः शब्दवाहिन्यौ[5] तासु द्वे शार्ङ्गिणोदिते ।
धमन्यो रसवाहिन्यश्चतुर्विंशतिरीरिताः ।। १०५ ।।

कुल्याभिरिव [6]केदारास्ताभिर्देहो ऽभिवर्धते ।
एताः प्रतिष्ठिता नाभ्यां चक्रनाभावरा इव ।। १०६ ।।

[1] पेशि (D). [2] च (D). [3] शुक्रा 1 ed. [4] द्विशते इति (B). [5] ग्राहिण्यौ 1 ed; ग्राहिण्यौ श्रोत्रयोः शब्दं (D). [6] केदारस्ताभि 1 ed.

**ऊर्ध्वं दश दशाधस्ताच्चतस्रस्तिर्यगायताः ।**
**ऊर्ध्वगा हृदयं[1] प्राप्ताः प्रतायन्ते पृथक् त्रिधा ।। १०७ ।।**
**वातं पित्तं कफं रक्तं रसं द्वे द्वे विमुञ्चतः ।**
**शब्दं [2]रूपं रसं गन्धं द्वे द्वे तत्रावगच्छतः ।। १०८ ।।**
**द्वे द्वे च भाषणं घोषं स्वापं बोधं च रोदनम् ।**
**कुर्वाते द्वे नरे [3]शुक्लं स्तन्यं तु[4] स्रवतः स्त्रियाम् ।। १०९ ।।**
**अधोगता अपि त्रेधा पृथक् पक्वाशयस्थिताः ।**
**प्रवर्तयन्ति तत्राद्या दश वातादि पूर्ववत् ।। ११० ।।**
**अन्नं भुक्तं धमन्यौ द्वे [5]वहतोऽम्बुसमाश्रयात् ।**
**तोयं मूत्रं बलं द्वे द्वे नारीणामार्तवं त्विमे ।। १११ ।।**
**विमुञ्चतो द्वे स्रोतांसि द्वे स्थूलान्त्रान्विते शकृत् ।**
**स्वेदं समर्पयन्त्यष्टौ तिरश्च्यो बहुधा मताः ।। ११२ ।।**
**रोमकूपेषु सन्त्यासां मुखानि स्वेदमुक्तये ।**
**प्रवेशयन्ति [6]चाभ्यङ्गलेपादिप्रभवान् रसान् ।। ११३ ।।**
**[7]जीवस्थानानि मर्माणि शतं सप्तोत्तरं विदुः ।**
**[8]सार्धकोटित्रयं रोम्णां श्मश्रुकेशास्त्रिलक्षकाः ।। ११४ ।।**
**स्रोतः सिराश्मश्रुकेशैः सह रोम्णां तु कोटयः ।**
**चतुःपञ्चाशदाख्याताः सप्तषष्टया च सार्धया ।। ११५ ।।**
**लक्षाणां [9]संहितामानं जलादेरधुनोच्यते ।**
**दशाञ्जलि जलं ज्ञेयं रसस्याञ्जलयो नव ।। ११६ ।।**

[1] हृदय 1 ed. [2] स्पर्श (D). [3] शुक्रं 1 ed. [4] द्वे (D).
[5] वहतोऽन्न 1 ed; वहन्तोन्तः समा (D). [6] ङ. चाभ्यङ्गे. [7] ओज (सु).
[8] सार्धं (D). [9] संहिता मान 1 ed.



**रक्तस्याष्टौ पुरीषस्य सप्त स्युः श्लेष्मणस्तु[1] षट् ।**
**पित्तस्य पञ्च चत्वारो मूत्रस्याञ्जलयस्त्रयः[2] ।।११७।।**
**वसाया मेदसो द्वौ तु मज्ज एको ऽञ्जलिर्मतः[3] ।**
**अर्धाञ्जलिः शिरोमज्जा श्लेष्मसारो बलं तथा ।। ११८ ।।**
**इति प्रत्यङ्गसंक्षेपो विस्तरस्त्विह तत्त्वतः ।**
**अस्मद्विरचिते ऽध्यात्मविवेके वीक्ष्यतां बुधैः ।। ११९ ।।**

(क०) **श्रवणे नयने** इत्यादिरस्मद्विरचिते ऽध्यात्मविवेके **वीक्ष्यतां बुधै**रित्यन्तः स्पष्टार्थः ।। -८६-११९ ।।

(सु०) वहिर्मलवहानि रन्ध्राणि कथयति——**श्रवणे** इति ।। ८६-८७ ।। **जालानि षोडश षट् कूर्चान् रज्जूश्चतस्रः** पञ्च **सीवनीश्च** कथयति —**अस्थी**त्यादिना ।।८८-८९।। [3]मतभेदेनास्थिराशीन् कथयति—**चतुर्दशेति** ।। ९० ।। अस्थीनि संख्याति-—**अस्थ्नामिति** ।। ९० ।। आकारविशेषेण पञ्चधा अस्थीन्याह——**वलयानीति** ।। ९१ ।। मतभेदेनास्थ्नामन्यथा संख्यां ख्यापयति——**त्रीणीति** । **अस्थिसंधीन्** संख्याति——**द्वे शते** ।। ९२ ।। आकारविशेषेणास्थिसंधीनामष्टविधत्वं कथयति——**कोरका** इति ।। ९३-९४ ।। **पेशीस्नायुसिरासंधीन्** संख्याय **स्नायुभेदान्** कथयति——**पेशीति** ।। ९४-९५ ।। स्नायूनामुपयोगं कथयति—-**बन्धनैरिति** ।। ९६ ।। पुंस्त्रीभेदेन पेशीः संख्याति——**पञ्चेति** ।। ९७-१०० ।। **सिराधमनिकाः** संख्याति—— **सिरेति** ।। १०१-१०२ ।। **सीवनीनां** दृष्टान्तेन संस्थानविशेषं दर्शयित्वा संख्यां स्थानं विभागं च कथयति——**द्व्यङ्गुलमिति** । **गन्धवहे** गन्धज्ञान-कारणे ।। १०२-१०४ ।। **रसवाहिनीर्धमनीः** संख्याय तासां प्रयोजनमाह—— **धमन्य** इति ।। १०५-१०६ ।। तासां स्थानं संस्थानं च कथयति——**एता** इति ।। १०६-१०७ ।। **ऊर्ध्वायता दश, अध आयता दश, तिर्यगायताश्चतस्र**

[1] श्लेष्मणश्च 1 ed. [2] ञ्जलयस्ततः (D). [3] मज्जा त्वञ्जलिसंमिता 1 ed.

इत्युक्तम्; तत्रोर्ध्वायतानां व्यापारभेदेन **त्रैविध्यं** कथयति---**ऊर्ध्वगा** इति ।। १०७-१०९ ।। **अधोगतानां त्रै**विध्यं कथयति---**अधोगता** इति ।। १०९ ।। तासां व्यापारं[1] कथयति---**प्रवर्तयन्तीति । बलं** वीर्यम् ।। ११०-११२ ।। तिरश्चीनां विशेषं कथयति---**तिरश्चश्च** इति ।। ११२-११३ ।। **मर्माणि** परिसंख्याति---[2]**जीवस्थानानीति** ।। ११४-११५ ।। **संहितानां मानं** कथयति---**सप्तषष्टचेति । संहिता** रोमादिसंधिः । द्रवमानं प्रतिज्ञाय कथयति---**जलादेरिति । रसस्य** अन्नरसस्य । [3]**मज्जः** मज्जाख्यधातुः । विस्तरस्तु **अध्यात्मविवेके** वीक्ष्यताम् इत्यनेन सोऽपि मत्कृतो ग्रन्थो ऽस्तीति कर्ता [4]स्वातिशयं प्रतिपादयन् सोऽपि ग्रन्थो विलोकनीय इत्याह ।। ८६-११९ ।।

**गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।**
**परमः सहजस्तद्वदानन्दो वीरपूर्वकः[5] ।। १२० ।।**
**योगानन्दश्च तत्र स्यादैशानादिदले फलम् ।**
**अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ।। १२१ ।।**
**आब्रह्मरन्ध्रमृजुतां नीतेयममृतप्रदा ।**

(क०) **गुदलिङ्गान्तर** इति । गुदलिङ्गयोर्मध्ये [6]स्थितस्याधारचक्रस्य**ैशानादिदल**चतुष्टये जन्मकाले जीवस्थित्या **परमानन्दादयः** फलानि । **आधारपङ्कजे** तस्मिन्नेवाधारचक्रे । कुण्डलिनीत्यन्वर्थतया सर्परूपिणी **ब्रह्मशक्तिः**, ब्रह्मणो ऽसङ्गोदासीनस्य परमात्मनः कर्तृत्वाद्युपहिताकारकारिण्यविद्याशक्तिः । सैव मूर्तिमती कुटिलाकारतया **कुण्डलिनीत्युच्यते । आब्रह्मरन्ध्रम्**,

[1] प्रकारं (B). [2] ओज (A), (B). [3] मज्जा तदाख्यो धातुः (A), (B). [4] स्वातिशय प्रतिपादनाय (A). [5] नन्दः परपूर्वकः (D). [6] पहिताकारिण्य 1 ed.



ब्रह्मरन्ध्रं नाम सुषुम्नाया अग्रं शिरसि सहस्रदलचक्रमध्यगम्, तत्पर्यन्तम् । **ऋजुतां नीतेति** । गुरूपदिष्टप्रकारेण यमनियमादिक्रमेण वायोरिडापिङ्गलयोः संचारं निरुध्य तेन वायुना [1]सवह्निना ब्रह्मग्रन्थौ सुषुम्नामूलरन्ध्रग्रन्थीनां कुण्डलिनीफणामपसार्य तत्र प्रवेशितेन तेन ब्रह्मविष्णुरुद्रग्रन्थीनां क्रमाद्भेदे सति कुण्डलिनी चात्मवक्रतां विहाय यदा ऋजुतां प्राप्यते । **अमृतप्रदेति** । तदा कुण्डलिनी स्वार्जवाद् ब्रह्मरन्ध्रविनिर्गतेन स्ववालाग्रेण सुधाधारं सहस्रदलचक्रं [2]विभिद्य ततोऽमृतं द्रावयतीति तथोक्ता ।। १२०-१२१- ।।

(सु०) एवमङ्गप्रत्यङ्गान्युक्त्वा चक्राणि वक्तुमुपक्रमते---**गुदलिङ्गान्तर** इति । गुदलिङ्गयोरन्तरे मध्य **आधार**संज्ञकं **चक्रं चतुर्दलम्** पद्माकारमास्ते ।। तस्य चतुर्णां दलानां फलं कथयति---**परम** इति । **ऐशान**दले **परमानन्दः** आग्नेयदले **सहजानन्दः**, नैर्ऋतदले **वीरानन्दः**, वायव्यदले **योगानन्दः** । ततश्चाधारकमलस्य विदिक् स्थितान्येव चत्वारि दलानीति लभ्यते ।। **अस्तीति । कुण्डलिनी**संज्ञिका **ब्रह्मशक्तिः**, ब्रह्मप्राप्तिकारणत्वात्, **आधारपङ्कजे** विद्यते । **सेयम् आब्रह्मरन्ध्रं** ब्रह्मरन्ध्रपर्यन्त**मृजुतां** नीता सती **अमृतप्रदा** मोक्षप्रदा ।। १२०-१२१- ।।

**स्वाधिष्ठानं लिङ्गमूले षट्पत्रं चक्रमस्य च ।। १२२ ।।**
**पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात् ।**
**प्रश्रयः क्रूरता [3]गर्वनाशो मूर्च्छा ततः परम् ।। १२३ ।।**
**अवज्ञा स्यादविश्वासः कामशक्तेरिदं गृहम् ।**

(क०) **स्वाधिष्ठानमिति** । आधारचक्रादूर्ध्वं **लिङ्गमूले स्वाधिष्ठानाख्यं षड्दलं** द्वितीयं **चक्रम्** । तस्य **पूर्वादिदलेषु** क्रमात्

[1] विदिशि स्थिता (A). [2] षड्दलं 1 ed. [3] गर्वो (D).

**प्रश्रयादीनि फलान्याह——अस्य चेति । अवज्ञा स्यादिति ।** [1]धर्म-परो ऽयं निर्देशः ।। -१२२-१२३- ।।

(सु०) स्वाधिष्ठानसंज्ञितं चक्रं कथयति——**स्वाधिष्ठानमिति । षट्पत्रं** षड्दलं कमलाकारम् । एतस्य षण्णां दलानां फलानि कथयति——**अस्य चेति । प्रश्रयो** विनयः पूर्वदिगवस्थितस्य दलस्य फलम् । तत्रावस्थित आत्मा प्रश्रयवान् भवतीत्यर्थः । **क्रूरता** दुष्टकर्माभिनिवेशः । **गर्व** आत्मोत्कर्षभावनम्, तस्य नाशः । **मूर्च्छा** मोहाधिक्यम् । **अवज्ञा,** अवगणना । **अविश्वासः** सर्वत्र सशङ्क[2]त्वमनाश्वासो वा । इदं स्वाधिष्ठानचक्रं कामोत्पादिकायाः शक्तेर्गृहम् आश्रयः ।। -१२२-१२३- ।।

**नाभौ दशदलं चक्रं मणिपूरकसंज्ञितम् ।। १२४ ।।**
**सुषुप्तिरत्र तृष्णा स्यादीर्ष्या पिशुनता तथा ।**
**लज्जा भयं घृणा मोहः कषायो [3]ऽथ विषादिता ।। १२५ ।।**
**क्रमात् पूर्वादिपत्रे तु[4] स्याद् भानुभवनं च तत्[5] ।**
**हृदये ऽनाहतं चक्रं शिवस्य प्रणवाकृतेः ।। १२६ ।।**
**पूजास्थानं तदिच्छन्ति दलैर्द्वादशभिर्युतम् ।**
**[6]लौल्यप्रणाशः [7]प्रकटो वितर्को ऽप्यनुतापिता ।। १२७ ।।**
**आशा[8] प्रकाशश्चिन्ता च समीहा समता ततः ।**
**क्रमेण दम्भो वैकल्यं विवेको ऽहंकृतिस्तथा ।। १२८ ।।**
**फलान्येतानि पूर्वादिदलस्थस्यात्मनो जगुः ।**

(क०) तत ऊर्ध्वं नाभिहृदयकण्ठघण्टिकाभ्रूमध्यललाट-केशमूलब्रह्मरन्ध्रेषु अष्टसु स्थानेषु क्रमेण मणिपूरकानाहतविशुद्धि-

[1] धर्मि 1 ed. [2] सशङ्कम् च (A); सशङ्कत्वम् (B). [3] ऽप्यविषा 1 ed. [4] पत्रेषु 1 ed. [5] यत् (D). [6] लौल्यं प्र 1 ed. [7] कपटं 1 ed. [8] घ. प्रणाश.



ललनाज्ञामनःसोमसहस्रपत्राख्यानामष्टानां चक्राणां तच्चक्रगतदलसंख्यया प्रागाद्यारम्भक्रमेण प्रतिदलं पृथक् फलान्याह——**नाभौ दशदलमि**त्यादिना ।। १२४-१२८- ।।

(सु०) मणिपूरकचक्रं कथयति——**नाभाविति ।** एतस्य पूर्वादिदलानां फलानि कथयति——**सुषुप्तिरिति । सुषुप्तिः** बाह्येन्द्रियाणां मनसश्चोपरमावस्था । **तृष्णा** अभिलाषः । **ईर्ष्या** परगुणासहनम् । **पिशुनता** विद्यमानाविद्यमानपरदोषसूचनम्[1] । **लज्जाभये** प्रसिद्धे । **घृणा** परदुःख[2]प्रहाणेच्छा । **मोहो** जाग्रदवस्थायामपि विषयापरिज्ञानम् । **कषायः** कलुषाशयत्वम् । **विषादः** [3]सचिन्तं दुःखम् । **तन्मणिपूरकं चक्रं भानोः** सूर्याख्यस्य प्राणस्य **भवनं** स्थानम् ।। १२५,१२६ ।। **अनाहतं चक्रं** कथयति——**हृदय** इति । **शिवस्य प्रणवाकृतेः** ओंकाराकृतेः **पूजास्थानमिति;** तत्र स्थितं परमेश्वरं ध्यात्वा मनसा पूजयेदित्यर्थः । आत्मनः पूर्वादि**द्वादशदलेषु** अवस्थानेन फलानि कथयति——**लौल्येति ।** लोलस्य भावो **लौल्यम्,** तस्य प्रणाशो निश्चलत्वम् । **प्रकट** इति प्रकटत्वेन वितर्कस्य [4]विशेषणम् । **वितर्क** उभयोर्मध्ये अन्यतरोपादेयताविचारः । **अनुतापिता** पश्चात्तापवत्त्वम् । **आशा** इष्टप्राप्तेरभिलाषः । **प्रकाश** आकारगुप्तेरभावः । **चिन्ता** विचारमात्रम् । **समीहा** [5]अनिष्टनिवृत्तीच्छा । **समता** उत्कर्षापकर्षशून्यतया सर्वेषां भावनम् । **दम्भो** लोकोपसंग्रहार्थमश्रद्धया कर्मानुष्ठानम् । **वैकल्यम्** अनवस्थत्वम् । **विवेकः** सम्यग्विचार्य कार्यकरणम् । **अहंकृतिः** अशक्ये ऽपि कार्ये चिकीर्षाध्यवसायः ।। १२६-१२८- ।।

**कण्ठे ऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदम् ।। १२९ ।।**
**तत्र प्रणव उद्गीथो हुंफड् [6]वषडथ स्वधा ।**

[1] वचनम् (A). [2] प्रहरणे (B). [3] संचितं (B). [4] क्रियाविशे (A), (B). [5] ऽनिष्टनिष्ठनिर्वृत्ती (B). [6] वौषड्वषट् (D).

**स्वाहा नमो ऽमृतं सप्त स्वराः षड्जादयो विषम्[1] ।।१३०।।**
**इति पूर्वादिपत्रस्थे फलान्यात्मनि षोडश[2] ।**
**ललनाख्यं घण्टिकायां चक्रं द्वादशपत्रकम् ।। १३१ ।।**
**मदो मानस्ततः स्नेहः शोकः [3]खेदश्च लुब्धता ।**
**अरतिः संभ्रमश्चोर्मिः श्रद्धा[4]तोषोपरोधिताः ।। १३२ ।।**
**फलानि ललनाचक्रे स्युः पूर्वादिदलेष्विति ।**

(क०) **उद्गीथ** इति साम्नो द्वितीयो भागः; साम्नो हि पञ्च भागाः––प्रस्तावः प्रथमः, **उद्गीथो** द्वितीयः, प्रतिहारस्तृतीयः, उपद्रवश्चतुर्थः, निधनः पञ्चम इति । **प्रणव** इत्युद्गीथस्यादौ प्रयोज्य ओंकारः । **घण्टिकायां** जिह्वामूले । ऊर्मिः **ऊर्मयो** ऽशनायापिपासाशोकमोहजरामरणानि षडूर्मयः ।।-१२९-१३२-।।

(सु०) **विशुद्धि**संज्ञकं **चक्रं** कथयति––**कण्ठ** इति । **भारतीस्थानम्,** भारत्याः सरस्वत्याः स्थानमाश्रयः । तत्र भाविता वाग्देवता वाग्वैभवं ददातीत्यर्थः । एतस्य चक्रस्य पूर्वादिपत्रावस्थितावात्मनः षोडश फलानि कथयति––तत्रेति । **प्रणव** ओंकारः । पूर्वपत्रे प्रणवानुसंधानेनात्मा श्रेयः प्राप्नोति । **उद्गीथः** सामभक्तिविशेषः । द्वितीयपत्रे स्थितमुद्गीथोपासनायां चिन्तयेदित्यर्थः । **हुंफडिति** हविःप्रदाने अव्ययम्[5] । **वषडित्यपि** । **स्वधेति** [6]पितृद्देशेन हविःप्रदाने अव्ययम्[7] । **स्वाहे**ति देवतोद्देशेन । **नम** इति नमस्कारे अव्ययम् । एतानि तत्तद्दलेषु चिन्तनीयानीत्यर्थः । **अमृतं** पीयूषम् । तद्दले स्थित आत्मा पीयूषाप्लुत इव सुखितो भवतीत्यर्थः । **सप्त स्वराः षड्जादयः** षड्जर्षभगांधारमध्यमपञ्चमधैवतनिषादाः । तेषां तानि तानि दलानि उपासनस्थानानि । **विषम्** अमृतवद्व्याख्येयम् ।

[1] दयः क्रमात् (D). [2] षोडशे (D). [3] स्वेहश्च 1 ed. [4] द्वेषोविरोधिता (D). [5] प्रदानेष्वयम् (A). [6] पितृ (B). [7] प्रदानेष्वयम् (A).



विषदलस्थ आत्मा दुःखितो भवतीत्यर्थः ।। [1]ललनाख्यं चक्रं कथयति–– [2]ललनाख्यमिति । **घण्टिका** अवटुः ।

एतस्य पत्रफलानि कथयति––मद इति । **मदो** मत्तता । **मान** उत्कर्षभावनया कार्याकार्यानवेक्षणम् । **स्नेहः** स्निग्धता । **शोको** विज्ञातकारणकं दुःखम् । **खेदः** अविज्ञातकारणकं दुःखम् । **लुब्धता** अभिलाषाधिक्यम् । **अरतिः** सुखसाधनेष्वप्युद्वेगः । **संभ्रमः,** आवेगः । **ऊर्मयः,** षडागमशास्त्रप्रसिद्धाः––

'बुभुक्षा च पिपासा च शोकमोहौ जरामृती[3] ।
ऊर्मयः षडिति प्राणबुद्धिदेहेषु[4] संस्थिताः ।।'

इति । **श्रद्धा** आस्तिक्यबुद्धिः । [5]**तोषः** [6]प्रसिद्धः **उपरोधिता** दाक्षिण्यम् ।। -१२९-१३३- ।।

**भ्रूमध्ये [7]त्रिदलं चक्रमा[8]ज्ञासंज्ञं फलानि तु ।। १३३ ।।**
**आविर्भावाः[9] सत्त्वरजस्तमसां क्रमतो मताः[10] ।**
**[11]ततो ऽप्यस्ति मनश्चक्रं षड्दलं तत्फलानि तु ।। १३४ ।।**
**स्वप्नो रसोपभोगश्च[12] घ्राणं रूपोपलम्भनम् ।।**
**स्पर्शनं शब्दबोधश्च पूर्वादिषु दलेष्विति ।। १३५ ।।**
**ततो ऽपि षोडशदलं सोमचक्रमितीरितम् ।**
**दलेषु षोडशस्वस्य कलाः षोडश संस्थिताः ।। १३६ ।।**

[1] नमस्कारैः (A). [2] **जलना** (A). [3] शोको मोह जरामृतिः (B). [4] देंहेषु (A). [5] प्रसिद्धा (A). [6] रोषः (A); दोषः (B). [7] द्विदलं 1 ed. [8] चक्रमितीरितम् (D). [9] भावः C. E. [10] मतः C. E. [11] अतो 1 ed. [12] क. ग. ङ. योगश्च fn. 1 ed.

**कृपा क्षमार्जवं धैर्यं वैराग्यं धृतिसंमदौ[1] ।**
**हास्यं रोमाञ्चनिचयो [2]ध्यानाश्रु स्थिरता ततः ।। १३७ ।।**
**गाम्भीर्यमुद्यमो ऽच्छत्वमौ[3]दार्यैकाग्रते क्रमात् ।**
**[4]फलान्युद्यन्ति जीवस्य पूर्वादिदलगामिनः[5] ।। १३८ ।।**
**चक्रं सहस्रपत्रं तु ब्रह्मरन्ध्रे [6]सुधाधरम् ।**
**तत्सुधासारधाराभिरभिवर्धयते तनुम् ।। १३९ ।।**
**अनाहतदले पूर्वे ऽष्टमे चैकादशे तथा ।**
**द्वादशे [7]च स्थितो जीवो गीतादेः सिद्धिमृच्छति ।। १४० ।।**
**चतुर्थषष्टदशमैर्दलैर्गीतादि नश्यति ।**
**विशुद्धेरष्टमादीनि दलान्यष्टौ श्रितानि तु ।। १४१ ।।**
**दद्युर्गीतादिसंसिद्धिं षोडशं तद्विनाशकम् ।।**
**दशमैकादशे पत्रे ललनायां तु [8]सिद्धिदे[9] ।। १४२ ।।**
**नाशकं[10] प्रथमं तुर्यं पञ्चमं च दलं विदुः ।**
**ब्रह्मरन्ध्रस्थितो जीवः सुधया संप्लुतो यथा[11] ।। १४३ ।।**
**तुष्टो गीतादिकार्याणि सप्रकर्षाणि साधयेत्[12] ।**
**[13]एषां शेषेषु पत्रेषु चक्रेष्वन्येषु च स्थितः[14] ।। १४४ ।।**
**जीवो गीतादिसंसिद्धिं न कदाचिदवाप्नुयात् ।**
**आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः ।।१४५।।**

[1] वैराग्यधृतिसंमदाः 1 ed. [2] ङ. ध्यानसुस्थिरता fn. 1 ed. [3] मद मौद्धत्य (C); मोजस्त्व (D). [4] फलं भिद्यन्ति C. E. [5] गामि तु (D). [6] घ. सुधाधरे fn. 1 ed. [7] ऽवस्थितो 1 ed. [8] ललनायास्तु (D); सुसिद्धि 1 ed. [9] सिद्धये C. E. [10] नाशनी (सु). [11] यदा 1 ed. [12] कारयेन् 1 ed. [13] तेषां (D). [14] °न्येष्ववस्थितः C. E.



(क०) **ध्यानाश्रु,** ध्यानाज्जातमश्रु ध्यानाश्रु ।। १३३-१४५ ।।

(सु०) त्रिदलमाज्ञाचक्रं कथयति—**भ्रूमध्य** इति । तस्य फलानि कथयति—**आविर्भावा** इति । प्रथमदले सत्त्वाविर्भावः, द्वितीयदले रजआविर्भावः, तृतीयदले तमआविर्भावः, **मनः**संज्ञकं **षड्दलं चक्रं** कथयति—**तत** इति । **मनश्चक्रं** मनःसंज्ञं चक्रम् । मनःसंज्ञा तु [1]तत्र मनसोऽवस्थानात् । फलान्याह—**तत्फलानीति । स्वप्नः** सुप्त्यवस्था । **रसोपभोगः**[2] [3]अन्नरसस्योपभोगः । **घ्राणं** गन्धज्ञानम् । **रूपोपलम्भनं** दर्शनम् । **स्पर्शनं** त्वगिन्द्रियकरणकं[4] ज्ञानम् । **शब्दबोधः** श्रवणम् ।

**सोमाख्यं चक्रं** कथयति—**तत** इति । **ततोऽपि** उपरिप्रदेशे । **अस्य** पूर्वादिदलावस्थानेन[5] जीवस्य फलानि कथयति—**कृपेति । कृपा** परानुग्रहापेक्षा । **क्षमा** कोपकारणे सत्यप्यकोपः । **आर्जवम्**[6]अवक्रबुद्धित्वम् । **धैर्यम्** अस्खलितचेतस्त्वम् । **वैराग्यं** संसारासारताबुद्धिः । [7]**धृतिः** धारणम् । **संमदो** हर्षः । हास्यादीनि गाम्भीर्यान्तानि प्रसिद्धानि । **उद्यम** उद्योगः । **अच्छत्वम्** अकलुषमनस्त्वम् । **औदार्यम्** स्वभावेन दानशूरता । **एकाग्रता** एकतानत्वम् ।।

चक्रान्तरं कथयति—**चक्रमिति । सुधाधरम्** मृतधारकम् । तद्व्यापारं कथयति—**तदिति ।** एतेषां चक्राणां तत्तद्दलावस्थाने जीवस्य फलानि कथयन् प्रकृतोपयोगमाह—**अनाहतेति । अनाहत**चक्रस्य **दले** [8]**पूर्वे** पूर्वे पूर्वदिक्स्थिते प्रथमे वा **अष्टमादिषु च** [9]**संस्थितो जीवो गीतादेः सिद्धिमृच्छति** [10]गीतनृत्तवाद्यानां सिद्धिमाप्नोति, अथवा तान्यभिलषति[11] । **चतुर्थषष्ठदशमदलेषु** स्थिते जीवे **गीतादि नश्यति । विशुद्धेरिति । विशुद्धि**संज्ञकस्य चक्रस्य

[1] तस्य (E). [2] पयोगः (A), (B). [3] रसनं अन्न (B). [4] न्द्रिये करणकं (A): न्द्रिये कारणकं (B). [5] कलावस्थानेन (B). [6] अवक्तृबुद्धि (A), (B). [7] तस्या धृति (A), (B). [8] पूर्वदले (A), (B). [9] **स्थितो** (A). [10] नृत्य (B). [11] प्रतिकर्षति (A).

**अष्टमादिष्वष्टसु दलेषु** संस्थिते जीवे **गीतादि सिध्यति । षोडश**दलावस्थिते नश्यति । [1]**ललना**ख्यचक्रस्य दलविशेषावस्थाने जीवस्य गीतादिसिद्धयसिद्धी कथयति—**दशमेति । दशमं चैकादशं** चेति द्वे **पत्रे** गीतादि**सिद्धि**दायके भवतः । **प्रथमा**दीनि **तु** गीतादि**नाशका**नीति[2] विदुः **योगशास्त्रविदः ।** ब्रह्मरन्ध्रावस्थानेन जीवस्य गीतादिसिद्धि[3] कथयति—**ब्रह्मरन्ध्रेति । ब्रह्मरन्ध्रे** तिष्ठन् **जीवो** ऽमृत**प्लुत** इव निर्वृतिं प्राप्तः **संतुष्टो** निरभिलाषो **गीतादि साधयेत्** निष्पादयेत् । एवं गीतादेः साधकानि नाशकानि च[4] दलानि कथयित्वा साधारणानि कथयति—**एषामिति ।** एषामनाहतविशुद्धि[5]ललनाख्यानां चक्राणां [6]**शेषेषु** साधकनाशकेभ्योऽन्येषु **पत्रेषु, अन्येषु चक्रेषु** विशुद्धयादेरन्येषु मणिपूरकादिचक्रेषु **च स्थितो जीवो गीतादिसिद्धा**वुदासीन इत्यर्थः ।। १३३-१४५ ।।

**एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम् ।**
**तत्रास्ते ऽग्निशिखा तन्वी चक्रात्[7] तस्मान्नवाङ्गुले ।। १४६**
**देहस्य कन्दो[8] ऽस्त्युत्सेधायामाभ्यां चतुरङ्गुलः ।**
**ब्रह्मग्रन्थिरिति प्रोक्तं[9] तस्य नाम पुरातनैः ।। १४७ ।।**
**तन्मध्ये नाभिचक्रं तु द्वादशारमवस्थितम् ।**
**लूतेव तन्तुजालस्था तत्र जीवो भ्रमत्ययम् ।। १४८ ।।**
[10]**सुषुम्नया ब्रह्मरन्ध्रमारोहत्यवरोहति ।**
**जीवः प्राणसमारूढो [11]रज्ज्वां कोह्लाटिको यथा ।।१४९।।**
**सुषुम्नां परितो नाड्यः [12]कन्दादा ब्रह्मरन्ध्रतः ।**
[13]**कन्दीकृत्य स्थिताः कन्दं शाखाभिस्तन्वते तनुम् ।।१५०।।**

[1] जलना (A). [2] **नाशनौति** (A), (B). [3] सिद्धीः (B). [4] तद्दलानि च (A). [5] जलना (A). [6] विशेषेषु (B). [7] त्तस्मिन्नवा (D). [8] °न्दोह्त्युत्सधोयन्नाभ्यां C. E. [9] °क्तमस्य C. E. [10] सुषुम्नाया 1 ed. [11] रज्ज्वा कोल्लाटिकौ (D). [12] आकन्दाद् (D). [13] क्रोडीकृत्य (सु).



(क०) देहविधारकनाडीसंदोहमूलभूतस्य ब्रह्मग्रन्थेः स्थानं स्वरूपं चाह—**आधाराद् द्वयङ्गुलादिति ।** आधारादाधारचक्रादवधिभूतात् । **देहमध्यमिति ।** देहस्योर्ध्वाधोभागयोर्मध्ये स्थितत्वाद् देहमध्यम् । **चक्रात् तस्मादिति ।** देहमध्यचक्रादवधेः । **ब्रह्मग्रन्थिरिति ।** ब्रह्माधिष्ठितत्वाद् ब्रह्मग्रन्थिः । **तन्मध्ये** ब्रह्मग्रन्थिमध्ये । **नाभिचक्रं[1] द्वादशारं** द्वादशाराणि यस्य तत्तथोक्तम् । आतानवितानात्मकनाडीसंघातरूपत्वान्नाभिचक्रस्य **तन्तुजालं** दृष्टान्तः । **कन्दीकृत्य,** अकन्दं कन्दं कृत्वा । 'अभूततद्भावे च्विः' ।। ताश्च नाड्यः **स्वशाखाभिः** कन्दीकृतं [2]**कन्दं** तनुं देहाकारं **तन्वते** ।। १४५-१५० ।।

(सु०) अग्निशिखास्थानं कथयति—**आधारादिति ।** आधारचक्राद् **द्वयङ्गुल**मात्र**मूर्ध्व**प्रदेशे **मेहनाद्** लिङ्गस्थानाद् **द्वयङ्गुल**मात्र**मधः**-प्रदेश **एकाङ्गुलि**प्रमाणं सुवर्णवर्णं **देहमध्यं** देहस्य मध्यप्रदेशः । तत्र **तन्वी** कृशा **अग्निशिखा आस्ते । तस्मात् चक्राद्** देहमध्यादाधाराद्वा **नवाङ्गुले** नवाङ्गुलप्रमाणे । ब्रह्मग्रन्थिं कथयति—**देहस्येति । देहस्य** शरीरस्य **कन्दो** विस्तारकारणम् । **उत्सेधः दीर्घोच्छ्रायः ।** नाभिस्थित**श्चतुरङ्गुल**प्रमाणकः । [3]**तस्य नाम ब्रह्मग्रन्थिरिति । तन्मध्य** इति । तस्य ब्रह्मग्रन्थेर्मध्ये **नाभि**-चक्राख्यं **चक्रं द्वादशद**लमस्ति । **लूता** ऊर्णनाभः, तद्व**ज्जीवस्तत्र भ्रमति । सुषुम्नयेति ।** आ आधारादाब्रह्मरन्ध्रमायता नाडी **सुषुम्ना ।** तया तस्य[3] सकाशात् **ब्रह्मरन्ध्र**पर्यन्तम् **आरोहति** ब्रह्मरन्ध्राच्चा**वरोहति । प्राणसमारूढः** प्राणपवनेनोपश्लिष्टः । [4]**कोहलाटिकः** विषमनर्तकः । **सुषुम्नामिति सुषुम्नां परितः** सर्वतः सुषुम्नायाः **कन्दं** ब्रह्मग्रन्थिं **क्रोडीकृत्य** व्याप्य **स्थिता नाड्यस्तनुं** शरीरं **तन्वते** विस्तारयन्ति ।। १४५-१५० ।।

[1] नाभिरेव चक्रं । **द्वा** 1 ed. [2] कन्दस्य 1 ed. [3] तस्याः (A), (B).
[4] कोलांतिकौ (A).

**[1]ताश्च भूरितरास्तासु मुख्याः प्रोक्ताश्चतुर्दश ।**
**सुषुम्नेडा पिङ्गला च कुहूरथ सरस्वती ॥ १५१ ॥**

**[2]गान्धारि हस्तिजिह्वा च वारुणी च यशस्विनी ।**
**विश्वोदरा शङ्खिनी च ततः पूषा पयस्विनी ॥ १५२ ॥**

**अलम्बुसेति तत्राद्यास्तिस्रो मुख्यतमा मताः ।**
**सुषुम्ना तिसृषु श्रेष्ठा वैष्णवी मुक्तिमार्गगा[3] ॥ १५३ ॥**

**कन्दमध्ये स्थिता[4] तस्या इडा सव्ये ऽथ[5] दक्षिणे ।**
**पिङ्गलेडापिङ्गलयोश्चरतश्चन्द्रभास्करौ ॥ १५४ ॥**

**क्रमात् कालगतेर्हेतू[6] सुषुम्ना[7] कालशोषिणी ।**
**सरस्वती कुहूश्चास्ते सुषुम्नायास्तु पार्श्वयोः ॥ १५५ ॥**

(क०) **कालगतेरिति** । अत्र कालशब्देन जीवस्य पिण्डावस्थानिमित्तभूताः[8] तपनपरिस्पन्दक्षणा उच्यन्ते, त एवायुरिति[9] यावत्; तस्य गतेः [10]क्षयस्येत्यर्थः । **कालशोषिणीति** । इह कालशब्देन मृत्युरुच्यते, तस्य शोषिणी प्रतिबन्धिनी ॥ १५१-१५५ ॥

(सु०) तासु नाडीषु मुख्याः चतुर्दशेति कथयति—**ताश्चेति** ॥ १५० ॥ तासां नामानि कथयति—**सुषुम्नेति** । चतुर्दशानां मध्ये **सुषुम्नेडापिङ्गलानां तिसृणां** नाडीनां **मुख्यत्वं** तासु च सुषुम्नाया मुख्यत्वमाह—**तत्राद्या** इति । सुषुम्नाया मुख्यत्वे कारणमाह—**वैष्णवीति** ।

[1] दश (D). [2] गांधारा (D). [3] घ. मार्गदा. [4] मध्यस्थिता 1 ed. [5] ङ. तु च (D). [6] गतीह्येतौ (D); गतेर्हेतुः 1 ed. [7] म्ना 1 ed. [8] भूताः स्वपनपरि 1 ed. [9] एव हेतुरिति 1 ed. [10] क्षणस्ये (C).



**वैष्णवी** विष्णुदेवताका । अथवा, वैष्णवी या मायाशक्तिः तद्रूपिणी । **मुक्तिमार्गगा**[1] मोक्षप्रदायिनी । अथवा, मुक्तिमार्गो मुक्तेरुपाय[2] आत्मा, तत्संबन्धिनी, आत्मनो ऽधिष्ठानभूतेत्यर्थः ॥ कन्दस्य ब्रह्मग्रन्थेर्मध्ये स्थिता । [3]इडापिङ्गले तस्या वामदक्षिणतः स्थिते इत्यर्थः । तयोः [4]प्रचरतः प्राणपवनस्य संज्ञाविशेषमाह—[5]**इडापिङ्गलयोरिति** । वामनाड्यनुसारी प्राणपवनश्चन्द्रः, दक्षिणनाड्यनुसारी तु भास्कर इत्युच्यते । कथं प्राणपवनस्य चन्द्रत्वं भास्करत्वं चेत्यत आह—**कालगतेर्हेतू**[6] इति । यथा चन्द्रसूर्यौ कालज्ञानकारणे[7] तथा तावपीत्यर्थः कालशोषिणीति । कालं शोषयतीति कालशोषिणी ॥ १५१-१५५ ॥

**इडायाः पृष्ठपूर्वस्थे[8] गान्धारी[9]हस्तिजिह्विके ।**
**क्रमात् पूषायशस्विन्यौ[10] पिङ्गलापृष्ठपूर्वयोः ॥ १५६ ॥**
**विश्वोदरा मध्यदेशे स्यात् कुहूहस्तिजिह्वयोः ।**
**मध्ये कुहूयशस्विन्योर्वारुणी [11]संस्थिता मता ॥ १५७ ॥**
**पूषासरस्वतीमध्यमधिशेते[12] पयस्विनी[13] ।**
**गान्धारिकासरस्वत्योर्मध्ये वसति शङ्खिनी ॥ १५८ ॥**
**अलम्बुसा[14] कन्दमध्ये तत्रेडापिङ्गले क्रमात् ।**
**[15]सव्यदक्षिण[16]नासान्तं कुहूरामेहनं पुरः[17] ॥ १५९ ॥**
**सरस्वत्यूर्ध्वमाजिह्वं [18]गान्धार्या पृष्ठतः स्थिता[19] ।**
**आवामनेत्र[20]मासव्यपादाङ्गुष्ठं तु[21] संस्थिता[22] ॥१६०॥**

[1] मार्गदा (B). [2] मुक्तिमार्ग उपायः (A), (B). [3] स्थिते इला (B). [4] प्रचारतः (B). [5] इला (B). [6] गर्भे [भहे] तू? (A). [7] कालकारणे (B). [8] वंशस्थौ (D). [9] गांधारा (D). [10] स्विन्योः (D). [11] वरिणासं 1 ed; वारणासी (D). [12] ध्यास्ते च (D). [13] यशस्बिनी (D). [14] ख. ग. घ. ङ. म्बुसा. [15] तस्य (D). [16] क. नामान्तः. [17] पुनः (D). [18] गांधारा (D); गांधारी 1 ed. [19] स्थिताम् (D). [20] मासाद्य 1 ed. [21] गुष्ठेषू (D). [22] स्थिते (D).

**हस्तिजिह्वा सर्वगा तु वारुण्यथ[1] [2]यशस्विनी ।**
**[3]आङ्गुष्ठाद्दक्षिणाङ्घ्रिस्था[4] देहे[5] विश्वोदरा[6]खिले ॥**

**शङ्खिनी सव्यकर्णान्तं पूषा [7]त्वा याम्यनेत्रतः ।**
**पयस्विनी तु वितता [8]दक्षिणश्रवणावधि ॥ १६२ ॥**

**अलम्बुसा पायुमूलमवष्टभ्य[9] व्यवस्थिता ।**
**एवंविधे तु देहे ऽस्मिन् मलसंचयसंवृते[10] ॥ १६३ ॥**

**[11]प्रसाधयन्ति धीमन्तो भुक्तिं मुक्तिमुपायतः ।**
**तत्र स्यात् [12]सगुणाद् ध्यानाद् भुक्तिर्मुक्तिस्तु निर्गुणात् ॥**
**ध्यानमेकाग्रचित्तैकसाध्यं न सुकरं नृणाम् ।**
**तस्मादत्र सुखोपायं श्रीमन्नादमनाहतम् ॥ १६५ ॥**
**गुरूपदिष्टमार्गेण मुनयः समुपासते ।**
**सो ऽपि रक्तिविहीनत्वान्न मनोरञ्जको नृणाम् ॥१६६॥**
**तस्मादाहतनादस्य श्रुत्यादिद्वारतो ऽखिलम् ।**
**गेयं वितन्वतो लोकरञ्जनं भवभञ्जनम् ॥ १६७ ॥**
**उत्पत्तिमभिधास्यामस्तथा श्रुत्यादिहेतुताम् ।**

(क०) **सर्वगा तु वारुणीति** । अत्र **वारुणीति** नाडी तु सर्वगा सकलशरीरव्यापिनी ॥ लोकरञ्जनं भवभञ्जनमिति द्वे गेयविशेषणे ॥ १५६-१६७- ॥

[1] वारणाथ 1 ed. [2] तप (D). [3] अङ्गु. [4] स्थाद् 1 ed. [5] देणे (D). [6] दरे 1 ed. [7] त्वावामनेत्रतः C. E. [8] दक्षिणाच्चरणा (D). [9] मवलम्ब्य 1 ed. [10] वृता (D). [11] प्रसाद (D). [12] त्सगुणध्या 1 ed.



(सु०) सरस्वत्यादीनां नाडीनामवस्थानमाह––**सरस्वतीति । सरस्वती** सुषुम्नाया दक्षिणपार्श्वे तिष्ठति, कुहूर्वामपार्श्वे; **गान्धारीडायाः** पश्चात्प्रदेशे, **हस्तिजिह्विका पूर्वप्रदेशे; पूषा** पिङ्गलायाः **पृष्ठ**प्रदेशे, **यशस्विनी पूर्व**प्रदेशे; **[1]विश्वोदरा कुहूहस्तिजिह्वयोर्मध्ये; [2]वारुणी कुहूयशस्विन्योर्मध्ये । [3]पयस्विनी पूषासरस्वत्योर्मध्यमधिशेते** । अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । **[4]शङ्खिनी गान्धारिकासरस्वत्योर्मध्ये** तिष्ठति, अलम्बुसा पूर्वोक्तस्य **कन्दस्य मध्ये** ।

एतासां नाडीनां प्रमाणं कथयति––**तत्रेति । इडा सव्य**नासापर्यन्तम्; **पिङ्गला दक्षिणनासापर्यन्तम्**; **कुहूर्मेहन**पर्यन्तम्; **सरस्वती ऊर्ध्वजिह्वा**पर्यन्तम्; **गान्धारी पृष्ट**प्रदेशपर्यन्तम्; हस्तिजिह्वा **वामनेत्रा**दारभ्य वामपादा**ङ्गुष्ठ**पर्यन्तम्; **वारुणी**[5] सर्वप्रदेशे । **यशस्विनी अङ्गुष्ठादा**रभ्य **दक्षिणाङ्घ्रौ** तिष्ठति; **अखिले देहे विश्वोदरा । शङ्खिनी सव्यकर्णपर्यन्तम् । पूषा आ दक्षिणनेत्रतः** । श्रवणावधि श्रवणपर्यन्तम् । **पयस्विनी दक्षिण**कर्णपर्यन्तम् । **अलम्बुसा पायुमूलं** गुदमूलमवष्टभ्य **स्थिता** । पिण्डनिरूपणमुपसंहरति––**एवंविध** इति । [6]भुक्तिर्मुक्तिश्च देह उपायात् सिध्यत इत्युक्तम्; तयोरुपायं कथयति––**तत्रेति** । पूर्वं सगुणोपासनोक्तिस्तु निर्गुणोपासनां प्रति तस्या हेतुत्वं सूचयितुम् । तथोक्तं **वेदान्तकल्पतरौ––**

"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥" इति ॥

सगुणनिर्गुणब्रह्मोपासनास्वसमर्था नादमुपासत इत्याह––**ध्यानमिति । न सुकरम्**, सुखेन कर्तुमशक्यम् । **अनाहतो ऽपि नादो** न जनम-

[1] विश्वोदरो (A); विश्वोदारा (B). [2] वारणा(B); वारुणा (A). [3] यशस्विनी (A). [4] शंकिनी (A). [5] वारुणा (A), (B). [6] भुक्तिमुक्ती देहे उपायात्साध्ये (B).

नोहर इत्याड—**सोऽपीति**। पूर्वप्रक्रतमुपसंहरन् उत्तरत्राभिधेयं प्रतिजानीते —**तस्मादिति**। **श्रुत्यादी**त्यादिशब्देन स्वर, ग्राम, मूर्च्छना, तान, कूटतानादयो गृह्यन्ते; **तद्द्वारतोऽखिलं गेयं** गानक्रियायोग्यं जात्यादि **वितन्वतः** विस्तारयत **आहतनादस्योत्पत्ति** श्रुत्यादिहेतुत्वं च वक्ष्याम इति संबन्धः। **लोकरञ्जनं भवभञ्जनमिति** गेयस्य विशेषणद्वयं भुक्तिमुक्तिप्रदत्वं सूचयति; अन्यथा सगुणनिर्गुणब्रह्मोपासनानुकल्पत्वं नादोपासनाया नावकल्पेतेत्यर्थः ॥ १५६-१६७ ॥

**इति प्रथमे स्वरगताध्याये द्वितीयं पिण्डोत्पत्तिप्रकरणम् ॥ २ ॥**

---

## ३. नाद-स्थान-श्रुति-स्वर-जाति-कुल-दैवत-र्षि-च्छन्दो-रसप्रकरणम्

**चैतन्यं सर्वभूतानां [1]विवृत्तं जगदात्मना ।**
**नादब्रह्म तदानन्दमद्वितीयमुपास्महे ॥ १ ॥**
**नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः ।**
**भवन्त्युपासिता नूनं यस्मादेते तदात्मकाः ॥ २ ॥**

(क०) शरीरं निरूप्य शरीरनादा[2]दिप्रकरणमारभमाणः श्रुत्यादिप्रपञ्चनिदानस्य नादस्य चैतन्यादिसाधर्म्येण ब्रह्मत्वं रूपयित्वा, तस्य परदेवतात्वमनुसंधायोपास्ते—**चैतन्यमिति**। **सर्वभूतानां** सकलप्रणिनां **चैतन्यम्**। नादो हि स्फोटात्मना समस्तपदार्थप्रकाशकत्वसाधर्म्येण चैतन्यारोपविषयत्वात् चैतन्यम्। **जगदात्मना,** परिदृश्यमानचराचरप्रपञ्चाकारेण [3]**विवृत्तम्,** अतत्त्वतोऽन्यथाभूतम्, नादे श्रुतिवर्णादिसकलशब्दप्रपञ्चप्रति[4]भाससाधर्म्येण नामरूपोल्लिखितस्य, जगतोऽप्यधिष्ठानत्वारोपात्। **आनन्दम्,** अभिव्यञ्जके ऽस्मिन् अभिव्यङ्ग्यानन्दरूपारोपात्[5]। **अद्वितीयम्,** स्वकार्यस्वरादिप्रपञ्चकारणत्वरूपेण ब्रह्मसाधर्म्यैकत्वारोपात्। **तदिति** सर्वलोकप्रसिद्धम्। **नादब्रह्म,** नाद एव ब्रह्मेत्यभेद[6]प्राधान्य [7]आरोपविषयभूतनादानपह्नवे चैतन्याद्यवयवयुक्तत्वेन **समस्तवस्तुविषयं** सावयवरूपकम्। **उपास्महे** इति "अस्मदो द्वयोश्च" इति

[1] विवृतं 1 ed. [2] प्रतीत्यादि (A). [3] दिवृत 1 ed. [4] भासात्मा 1 ed. [5] रोपेण 1 ed. [6] नादब्रह्मेत्यभेदेन 1 ed. [7] आरोप्य 1 ed.

बहुवचनोपपत्तिः। **अयमभिसंधिः**—[1]परावाक्पर्यायस्य ब्रह्मशक्तेर्नादस्य ब्रह्मणोऽत्यन्तप्रत्यासन्नत्वात् तदुपासनायां कृतायां ब्रह्मप्राप्तिः मणिप्रभाप्रवृत्तस्य मणिलाभवद् भवेदिति । तथा चोक्तम्—

'अतो गीतप्रपञ्चस्य श्रुत्यादेस्तत्त्वदर्शनात् ।
अपि स्यात् सच्चिदानन्दरूपिणः परमात्मनः ।।
प्राप्तिः प्रभाप्रवृत्तस्य मणिलाभो यथा भवेत् ।
प्रत्यासन्नतयात्यन्तम् ।'

इति, 'वीणावादन—' इत्यादि च । ननु—उपासनस्य[2] सगुणेषु प्रसिद्धदेवतान्तरेषु सत्स्वपि किमचेतनस्य नादस्य ब्रह्मत्वरूपेणो[3]पासनमित्यत आह—**नादोपासनयेति**। तत्रोपपत्तिमाह—**यस्मादेते तदात्मका** इति। अत्र **तदिति** नादब्रह्म परामृश्यते । तस्मादभिन्ना यतोऽत इत्यर्थः ।। १-२ ।।

(सु०) एवं श्रुत्यादिकारणं पिण्डं [4]निरूप्य, श्रुतिस्वरादि निरूपयितुमिच्छुः प्रकृतानुगुणं मङ्गलमाचरति—**चैतन्यमिति**। नाद एव [5]ब्रह्म नादब्रह्म, तदुपास्महे। सर्वभूतानां चैतन्यं चैतन्यफलं वा, नादाभावे चेतनानां पाषाणादिभिरचेतनैः को विशेषः स्यात्? **ब्रह्मपक्षे**—सर्वभूतानां चैतन्यं ज्ञानम्, "सत्यं ज्ञानमनन्तं **ब्रह्म**" इति **श्रुतेः**। जगदात्मना [6]विवृत्तम्, जगति प्रसिद्धत्वान्नादस्य जगद्रूपेण [7]विवृत्ततोच्यते । ब्रह्मपक्षे—अप्रच्युतप्राच्यावस्थस्यासन्नानाकारावभासो विवर्तः । एवं ब्रह्मैव जगदाकारेण[8] विवर्तत इत्यर्थः । **आनन्दं** सुखसाधनम्[9]। पक्षे सुखं [10]सुखरूपम्, "आनन्दो ब्रह्मेति व्यजानात्" इति **श्रुतेः। अद्वितीयम् अनुपमं** लोकोत्तरम् । पक्षे

[1] परं (C). [2] सनायां 1 ed. [3] पादानमित्यत 1 ed. [4] निर्वःर्य (B). [5] ब्रह्मनादः ब्रह्मतनुः (A). [6] बृहती (B). [7] चिवर्तं उच्यते (A), (B). [8] काकार (A). [9] भावनम् (B). [10] दुःखरूपम् (B).



सजातीयविजातीयस्वगतभेदशून्यम् । [1]अत्र श्लिष्टरूपकमलंकारः ।। किमर्थं नाद उपास्यत इत्यत आह—**नादोपासनयेति**। ब्रह्मादयो **देवा** नादोपासनयोपासिता भवन्तीत्यत्र हेतुः यस्मादेते **तदात्मका** इति। नादात्मका इत्यर्थः ।। १-२ ।।

**आत्मा विवक्षमाणो ऽयं मनः प्रेरयते मनः ।**
**देहस्थं वह्निमाहन्ति स प्रेरयति मारुतम् ।। ३ ।।**
**ब्रह्मग्रन्थिस्थितः सो ऽथ क्रमादूर्ध्वपथे चरन् ।**
**नाभिहृत्कण्ठमूर्धास्येष्वाविर्भावयति[2] ध्वनिम् ।। ४ ।।**
**नादो ऽतिसूक्ष्मः सूक्ष्मश्च पुष्टो ऽपुष्टश्च कृत्रिमः ।**
**इति [3]पञ्चभिदा[4] धत्ते पञ्चस्थानस्थितः[5] क्रमात् ।। ५ ।।**
**नकारं प्राणनामानं दकारमनलं विदुः ।**
**जातः प्राणाग्निसंयोगात् तेन नादो ऽभिधीयते ।। ६ ।।**

(क०) तस्य नादस्य नित्यत्वमङ्गीकृत्य तदभिव्यक्तिक्रममाह—**आत्मा विवक्षमाण** इत्यादिना। **विवक्षमाण** इति 'ब्रुव इच्छायां' सनि तस्यार्धधातुकत्वाद् ब्रुवो वच्यादेशे "पूर्ववत्सनः" इति निमित्तातिदेशत्वादात्मनेपदित्वे रूपम् । नाभ्यादिस्थानेषु आविर्भूतस्य नादस्य क्रमेण व्यपदेशभेदमाह—**नादो ऽतिसूक्ष्म** इति । **नादशब्दस्य** योगतो निरुक्तिमाह—**नकारमिति। प्राणनामानं** प्राण इति नाम यस्यासौ प्राणनामा, तम् । एतेन मन्त्रशास्त्रानुसारतो बीजाक्षराणां तत्तद्देवतातादूप्या[6]पत्त्या अत्र **नकारदकारौ प्राणाग्नी** इत्युक्तं भवति । **विदुः**, मान्त्रिका इति

[1] तत्र (A), (B). [2] ङ. यते. [3] पञ्चाभिधां C. E. [4] भिधां 1 ed. [5] स्थिति (D). [6] यत्या 1 ed.

शेषः । **जात** [1]उदितः, अभिव्यक्त इति यावत् । उक्तपञ्चविध-नादस्यापि अविशेषेण गीतोपयोगित्वे प्राप्ते, हृत्कण्ठमूर्धस्थानेष्वेव श्रुतिपदनाडीसद्भावात् [2]तत्रत्यस्यैव नादत्रयस्य गीतोपयोगित्वम् ।। ३-६ ।।

(सु०) नादोत्पत्तिप्रकारमाह––**आत्मेति** । वक्तुमिच्छन् **विवक्षमाण आत्मा** मनो[3]ऽन्तःकरणं **प्रेरयते** । तदन्तःकरणमात्मप्रेरितं सद् **देहस्थम्** उदर्यम् **अग्निमाहन्ति** ताडयति । **स वह्निर्मारुतं** वायुं **प्रेरयति** ।। स पूर्वं **ब्रह्मग्रन्थिस्थितः तेन**[4] वह्निना प्रेरितः सन् ऊर्ध्वमार्गे गच्छन्नाघातेन[5] **नाभिहृदयकण्ठमूर्धमुखेषु**[6] ध्वनिं प्रकटयति । **ऊर्ध्वपथ** [7]इति प्रकृतगानोपयोगार्थम्, [8]अधोऽपि अनाहतस्य नादस्योत्पत्तेः; तदुक्तम्––

'कन्दस्थानसमुत्थो ऽपि समीरः संचरन्नधः ।
ऊर्ध्वं च कुरुते [9]सर्वान् नादान् मूर्धनि तूद्धतान् ।।'

इति । पञ्चविधस्य नादस्य संज्ञाः कथयति––**नाद** इति । **सूक्ष्मो ऽतिसूक्ष्मः पुष्टोऽपुष्टः कृत्रिम** इत्ययमेव क्रमो ज्ञातव्यः । **ग्रन्थान्तरे** तु––पुष्टापुष्टयोर्व्यक्तो ऽव्यक्त इति नामनी । तथा चोक्तं **मतङ्गेन––**

"सूक्ष्मश्चैवातिसूक्ष्मश्च व्यक्तो ऽव्यक्तश्च कृत्रिमः ।
[10]सूक्ष्मनादो गुहावासी हृदये चातिसूक्ष्मकः ।
कण्ठमध्यस्थितो व्यक्तश्चाव्यक्तस्तालुदेशगः[11] ।।
कृत्रिमो मुखदेशे तु ज्ञेयः पञ्चविधो बुधैः[12] ।"

[1] जातो विदितो 1 ed. [2] तस्यैव (C). [3] आत्मानं (A). [4] ग्रन्थिस्थितेन. [5] आयातो (B). [6] **मर्धास्येषु** (B). [7] इति ऊर्ध्वमुखेनेति (A), (B). [8] अधोपि नादस्यापि (A); अधोपि नादोत्पत्तिः (B). [9] सर्वाना(बृ). [10] सूक्ष्मो (B). [11] देशकः (A); देशके:(बृ). [12] विधस्तु सः (B).



इति ।। नादशब्दव्युत्पत्तिं[1] कथयति––**नकारमिति । नामलिङ्गानुशासनविदः, नकारं प्राणनामानं विदुः दकारं** चाग्निम् । नदाभ्यां जात इत्यण्प्रत्यये जाते, [2]आदिवृद्धौ च नाद इति रूपं सिध्यति । **मतङ्गेन** तु ––नद्यत[3] इति नाद इति व्युत्पत्तिर्दर्शिता । तथा चोक्तम्––

"[4]नकारं प्राण इत्याहुर्दकारश्चानलो मतः ।
नादस्य हि[5] पदार्थो ऽयं समीचीनो मयोदितः ।।
नादो ऽयं नदतेर्धातोः स च पञ्चविधो भवेत् ।"

इति ।। ३-६ ।।

**व्यवहारे त्वसौ त्रेधा हृदि मन्द्रो ऽभिधीयते ।**
**कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ।। ७ ।।**

(क०) नामान्तराणि स्वरूपभेदं चाह––**व्यवहारे त्विति** । व्यवह्रियत इति व्यवहारो गीतम्, तस्मिन् । **तुः** पक्षं व्यावर्तयति । [6]नाभ्या स्यस्थानयोर्नैवमित्यर्थः । **द्विगुणश्चोत्तरोत्तर** इति । **उत्तरोत्तरः**, मन्द्रादुत्तरो मध्यः, मध्यादुत्तरस्तार इति यावत् । **द्विगुणः**, गुण उच्चारणप्रयत्नः, द्वौ गुणौ यस्येति द्विगुणः । अयमर्थः––मन्द्रस्थानस्थितात् षड्जादिव्यपदेशवतो नादात् मध्यस्थानस्थितः, स एव षड्जादिव्यपदेशवान् ततो[7] ऽपि द्विगुणप्रयत्नसाध्यत्वाद् द्विगुण इति । पूर्वस्थानस्थितात् क्रमेणारोहे सति अष्टमः स्वर इति यावत् । अत्र **असौ,** इति [8]नादसामान्य-

[1] व्युत्पत्तिरूपं (B). [2] आदिपदवृद्धौ (B). [3] नदत (A). [4] नकारः (बृ). [5] द्वि(बृ). [6] नाभ्यां 1 ed, (D), (C). [7] व्यवदेशवान् अतो (D). [8] नामसाम्यनिर्देश 1 ed.

निर्देशेऽपि व्यवहारानुपयोगात् [1]स्वररूपनादाद् द्वैगुण्यं विवक्षितम्। श्रुतिरूपनादविवक्षायां तु [2]त्रयोविंशो द्विगुणः ।। ७ ।।

(सु०) त्रिविधस्य नादस्य व्यवहारयोग्यत्वं कथयति––**व्यवहारे** त्विति । **व्यवहारे** गानव्यवहारे, घटपटाद्यभिधानव्यवहारे तु मुखोत्पन्नस्यापि ध्वनेरुपयोगित्वात्[3]। **हृदि** य उत्पद्यते नादः, स **मन्द्र** इति कथ्यते; यस्तु **कण्ठ** उत्पद्यते स **मध्यः**; यस्तु **मूर्ध्नि** स [4]**तारः**। एषां मानं कथयति ––**द्विगुण** इति । यावान्मध्यः ततो द्विगुणो मध्यः, । यावान्मध्यः ततो द्विगुणस्तारः । तदुक्तं **संगीतसमयसारे**––

"त्रीणि स्थानानि हृत्कण्ठशिरांसीति समासतः ।
एकैकमपि तेषु स्याद् द्वाविंशतिविधायुतम् ।।
द्वाविंशतिविधो मन्द्रो ध्वनिः संजायते हृदि ।
यथोत्तरमसौ [5]नादो वीणायामधरोत्तरम् ।।
स एव द्विगुणो मध्यः कण्ठस्थाने यथाक्रमम् ।
स एव मस्तके तारः स्यान्मध्याद् द्विगुणः क्रमात् ।।
इति स्वरगता ज्ञेयाः श्रुतयः श्रुतिवेदिभिः ।
अन्तरस्वरवर्तिन्यो ह्यन्तरश्रुतयो मताः ।।"

इति ।। ७ ।।

**तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः ।**
**हृद्यूर्ध्वनाडीसंलग्ना नाड्यो द्वाविंशतिर्मताः ।। ८ ।।**
**तिरश्च्यस्तासु तावत्यः श्रुतयो मारुताहतेः[6] ।**
**उच्चोच्चतरतायुक्ताः प्रभवन्त्युत्तरोत्तरम् ।। ९ ।।**
**एवं कण्ठे तथा शीर्षे श्रुतिर्द्वाविंशतिर्मता ।**

[1] श्रुतिगुणरूपनादाद् (C). [2] त्रयोविंशः 1 ed. [3] रुपयोगात् (B).
[4] तारः इति (B). [5] तारो (B). [6] हताः 1 ed.



(क०) स्थानान्युक्त्वा क्रमप्राप्ताः श्रुतीर्नादभेदत्वेनाह ––**तस्येति** । तस्यैकैकस्थानाविर्भूतस्य नादस्य । सामान्यविवक्षयैकत्वम् । **द्वाविंशतिर्भेदाः** अभिव्यञ्जकनाडीभेदवशात् । **श्रवणात्**, श्रवणयोग्यत्वात् । **श्रुतयः**, श्रूयन्त इति व्युत्पत्त्या । एतदुक्तं भवति––यद्यपि श्रवणयोग्यत्वम् अनुरणनात्मनः स्वरतानादिरूपेण दीर्घदीर्घस्यापि ध्वनेर्विद्यते, तथाप्यत्र **मारुताद्याहत्य**[1]नन्तरोत्पन्न[2]प्रथमक्षणवर्तिश्रवणमात्रयोग्यध्वनेरेव श्रुतित्वमिति । तत्र मन्द्रस्थाने श्रुतिभेदजनकनाडीनां संनिवेशमाह––**हृदीति** । **ऊर्ध्वनाड्यौ**, इडापिङ्गले, **तयोः संलग्ना नाड्यः** सच्छिद्रा नाडिका[3]; **तासु**, नाडीषु उत्तरोत्तरम्[4], उच्चोच्चतरता**युक्ताः** उच्चा च उच्चतरा उच्चोच्चतरे, तयोर्भावौ उच्चोच्चतरते, ताभ्यां युक्ताः **श्रुतयः प्रभवन्ति** । अयमर्थः––मन्द्रस्थाने प्रथमनाड्युत्पन्ना श्रुतिः अतिनीचा । तदपेक्षया द्वितीया[5]तृतीययोः श्रुत्योरुच्चोच्चतरते । तत्र द्वितीयाया उच्चायास्तृतीया किंचिदुच्चेति तरप्प्रयोगः । एवं तृतीयाचतुर्थ्यादिषु श्रुतिषु [6]द्वयोर्द्वयोर्द्रष्टव्यमिति ।। एवं प्रथमस्थानोक्तमर्थ**मुत्तरोत्तर**स्थानद्वयेऽप्यतिदिशति––**एवं कण्ठ** इति ।। ८-१०- ।।

(सु०) तस्य नादस्य भेदान् कथयति––**तस्येति** । तस्य नादस्य **द्वाविंशति**संख्याका **भेदा** भवन्ति । ते च श्रुतिसंज्ञयोच्यन्ते । तत्र व्युत्पत्तिं कथयति––**श्रवणादिति** । श्रूयन्त इति **श्रुतय** इत्यर्थः । तथा चोक्तं **मतङ्गेन**––

[1] हत्या (D). [2] क्षणप्रथम 1 ed. [3] सच्छिद्रनलिकाः 1 ed.
[4] रोत्तरा 1 ed. [5] द्वितीय 1 ed. [6] द्वयोर्द्रष्ट 1 ed.

"[1]श्रवणार्थस्य धातोः क्तिन्प्रत्यये च सुसंश्रिते[2] ।।
श्रुतिशब्दः प्रसाध्योऽयं शब्दज्ञैः [3]कर्मसाधनः । (-२३, २४-)

इति । तत्र श्रुतेरेकत्वानेकत्वविषये महती विप्रतिपत्तिः । देहाग्निपवनसंयोगात् पुरुषप्रयत्नप्रेरितो ध्वनिः नाभेरूर्ध्वम् आकाशदेशम् आक्रामन् [4]धूमवत्सोपानपदावस्थानं पवनेच्छयानेकधारोहन् अन्तर्भूतपूरणप्रत्ययार्थतया चतुःश्रुतित्वादिभेदभिन्नोऽवभासते" इति **मतङ्गः** । **विश्वावसुस्तु**—द्वैविध्यं श्रुतेरुक्तवान् । तथा चाह—

"श्रवणेन्द्रियग्राह्यत्वाद् ध्वनिरेव श्रुतिर्भवेत् ।
सा चैका द्विविधा ज्ञेया स्वरान्तरविभागतः ।।
नियतश्रुति[5]संस्थातो गीयन्ते सप्त गीतिषु ।
तस्मात् स्वरगता ज्ञेयाः श्रुतयः श्रुतिवेदिभिः ।।
[6]अन्तरस्वरवर्तिन्यो ह्यन्तरश्रुतयो मताः ।"

इति । **केचित्** स्थानत्रययोगात् श्रुतीनां त्रैविध्यं प्रतिपद्यन्ते । **केचिद्** [7]द्वाविंशतिं श्रुतीराहुः । **केचित्** षट्षष्टिम् । **अन्ये,** आनन्त्यम् । तथा चाह **कोहलः**—

'द्वाविंशतिं केचिदुदाहरन्ति श्रुतीः श्रुतिज्ञानविचारदक्षाः ।
षट्षष्टिभिन्नाः[8] खलु केचिदासामानन्त्यमन्ये[9] प्रतिपादयन्ति ।'

इति । तत्र मन्दतीव्रतीव्रतरादितार[10]तम्याख्यविरुद्धधर्मसंसर्गस्य विद्यमानत्वाद् भेदस्तावत्सिद्धः । **तदुक्तम्**—"अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च" इति । मन्द्रमध्यतारस्थानेष्वपि ता एवैताः श्रुतयः, त एवामी स्वरा इति प्रत्यभिज्ञानाद् भेदस्यासिद्धिः, तस्माद् द्वावि-

[1] श्रु श्रवणे चास्य धातोः क्तिप्रत्यय समुद्भवः (बृ). [2] सुसंगते (B). [3] भावसाधनः (बृ). नादसाधनैः (B). [4] ऊर्ध्वं पतन् (B). [5] संस्थानाद् (बृ), संस्थानं जायते (B). [6] अन्तः श्रुति विवर्तिन्यो (बृ). [7] श्रुतीनां द्वाविंशत्वमाहुः (B). [8] भिन्नां (B). [9] न्त्यमेव (A). [10] तम्यस्य (A).



शतिश्रुतिपक्ष एव समीचीन इति मत्वा द्वाविंशतिरित्युक्तवान् । संख्यानियमे कारणमाह—**हृदीति । हृदि, ऊर्ध्वनाडी** सुषुम्णा, **तत्संलग्नाः, तिरश्च्य** तिर्यक् स्थिता द्वाविंशतिर्नाड्यः । **तासु** मारुतसंबन्धात् **तावन्त** एव नादा उत्पद्यन्ते । तेषु विरुद्धधर्मसंसर्गं दर्शयति—**उच्चेति । उत्तरोत्तरमुच्चोच्चतरतायुक्ताः,** । प्रथमो नादो हीनतमः, ततोऽनन्तरमुच्चः, ततोऽनन्तरमुच्चतरः, ततोऽनन्तरमुच्चतम इत्यर्थः । हृदय उक्तं श्रुत्युत्पत्तिप्रकारं **कण्ठशीर्षयो**रतिदिशति—**एवमिति** ।। ८-१०- ।।

**व्यक्तये कुर्महे तासां वीणाद्वंद्वे[1] निदर्शनम् ।। १० ।।**
**द्वे वीणे सदृशौ कार्ये यथा नादः समो भवेत् ।**
**तयोर्द्वाविंशतिस्तन्त्र्यः प्रत्येकं तासु चादिमा ।। ११ ।।**
**कार्या मन्द्रतमध्वाना द्वितीयोच्चध्वनिर्मनाक् ।**
**स्यान्निरन्तरता श्रुत्योर्मध्ये ध्वन्यन्तराश्रुतेः ।। १२ ।।**
**अधराधरतीव्रास्तास्तज्जो नादः श्रुतिर्मतः[2] ।**
**वीणाद्वये स्वराः स्थाप्यास्तत्र षड्जश्चतुःश्रुतिः ।। १३ ।।**
**स्थाप्यस्तन्त्र्यां तुरीयायामृषभस्त्रिश्रुतिस्ततः ।**
**पञ्चमीतस्तृतीयायां गांधारो द्विश्रुतिस्ततः ।। १४ ।।**
**अष्टमीतो द्वितीयायां मध्यमोऽथ चतुःश्रुतिः ।**
**दशमीतश्चतुर्थ्यां स्यात् पञ्चमोऽथ चतुःश्रुतिः ।। १५ ।।**
**चतुर्दशीतस्तुर्यायां धैवतस्त्रिश्रुतिस्ततः ।**
**अष्टादश्यास्तृतीयायां निषादो द्विश्रुतिस्ततः ।। १६ ।।**

(क०) शरीरे प्रतिस्थानमुक्तसंख्याकनाडीसंनिवेशस्य [3]तत्र श्रुत्युत्पादस्य च परोक्षत्वात्तत् तत्सद्भावे संदेहः स्यादिति

[1] द्वंद्वं (D). [2] मंता (D). [3] तत्तच्छुत्या नादस्य च परो 1 ed.

तन्निरासार्थं प्रत्यक्षतः संवादयितुं प्रतिज्ञाय निर्दिशति——**व्यक्तय** इत्यादिना । **सदृशौ** सदृशाकारे । यथा **नादः समो भवेदिति ।** यथा सदृशाकारयोः [1]कृतयोर्नादः समो भवेत् तथा सदृशौ कार्यौ । नादसाम्ये लाघवादिविशिष्टाकारसाम्यं निमित्तमित्यर्थः । **तासु चेति** । वीणयोः **प्रत्येकं द्वाविंशतौ तन्त्रीषु** । **चकारः**, द्वितीयवीणागततन्त्रीसमुच्चयार्थः । **आदिमा** प्रथमा तन्त्रीः । कर्त्रपेक्षया संनिहितेत्यर्थः ।

**मन्द्रतमध्वाना** अतिमन्द्रस्वना; उत्तरोत्तरापेक्षया पूर्वपूर्वस्या मन्द्रत्वे संभवत्यपि सर्वापेक्षयेयं मन्द्रेति तमप्प्रयोगः । अतिमन्द्रस्वनत्वं च तन्त्र्या अतिशिथिलीकरणेन भवति । ततोऽपि शिथिलीकरणे यथा सानुरणनध्वन्यसंभवः, तथा कार्येत्यर्थः । **द्वितीया** [2]तन्त्री**र्मनागुच्चध्वनिः कार्या ।** मनागुच्चध्वनित्वस्यैव व्यवस्थापकम्——**स्यान्निरन्तरतेति । श्रुत्योः** पूर्वोत्तरतन्त्र्युत्पन्नयोर्मध्ये **ध्वन्यन्तराश्रुतेः** ध्वन्यन्तरस्य पूर्वोत्तरश्रुतिविलक्षणस्य पूर्वश्रुतेः किंचिदुच्चस्य उत्तरश्रुतेः किंचिन्नीचस्य च अन्यध्वनेरश्रुतिरश्रवणम् । **अश्रुतेरिति,** हेतौ पञ्चमी । मध्यगतध्वन्यन्तराश्रवणं निमित्तीकृत्य श्रुत्योः निरन्तरता यथा स्यात् तथा [3]तन्त्रीः किंचिद् दृढीकरणेन **मनागुच्चध्वनिः कार्ये**त्यर्थः । अत्र नैरन्तर्यं ध्वन्योरेवोक्तम्, [4]न तु तन्त्र्योर्दण्डादिप्रदेशस्थयोः[5] । अतः तन्त्र्योर्दण्डादिषु मध्येऽवकाशो दृश्यत इति तत्र ध्वन्यन्तरसंभवो न शङ्कनीयः । **द्वितीयेति** उपलक्षणम् । तेन तृतीयादयोऽपि

[1] नादः समस्तथा कार्ये 1 ed. [2] तन्त्री मना 1 ed. [3] तन्त्री 1 ed. [4] तत्तु 1 ed. [5] प्रदेशयोर्वा (C).



द्वितीयाद्यपेक्षया किंचित्किंचिद् दृढीकरणेन मनागुच्चध्वनयः कार्या इत्यर्थः ।

**एवं कृते ताः तन्त्र्यः अधराधरतीव्रा** उच्चोच्चध्वनयो भवन्ति । यथा शरीरे श्रुतय उत्तरोत्तरोच्चा उत्पद्यन्ते, तथा वीणायां अधराधरोच्चा उत्पद्यन्त इति [1]बोद्धव्यम् । **तज्जः,** तासु तन्त्रीषु आहत्योत्पन्नो **नादः** श्रुतित्वेन **मतः** । अत्र श्रुतिशब्दनिरुक्तिपूर्वकं श्रुत्येकत्वादिविषयविकल्पे **मतङ्गो** मतभेदानदर्शयत् । **तद्यथा——**

[2]'श्रवणार्थस्य धातोः [3]क्तिन्प्रत्यये च सुसंश्रिते ।
श्रुतिशब्दः प्रसाध्योऽयं शब्दज्ञैः कर्मसाधनः[4] ॥'

श्रूयत इति श्रुतिः । सा चैका, अनेका वा । एकैव श्रुतिरिति । तद्यथा——तत्रादौ तावत् [5]देहाकाशपवनसंयोगात्ः पुरुषप्रयत्नप्रेरितो ध्वनिः नाभेरूर्ध्वम् आकाशदेशमाक्रामन् धूमवत् सोपानपदक्रमेण[6] पवनेच्छया अनेकधा आरोहन् अन्तर्भूतपूरणप्रत्ययार्थतया चतुःश्रूत्यादिभेदभिन्नः प्रतिभासत इति **मामकीयं** मतम् । [7]**अन्ये** पुनर्द्विप्रकारां श्रुतिं मन्यन्ते । कथम्? स्वरान्तरविभागात् । तथा चाह **विश्वावसुः——**

"श्रवणेन्द्रियग्राह्यत्वाद् ध्वनिरेव श्रुतिर्भवेत् ।
सा चैका [8]द्विविधा ज्ञेया स्वरान्तरविभागतः ॥

[1] स्वारस्यम् 1 ed. [2] श्रु श्रवणे चास्य धातोः क्तिप्रत्ययसमुद्भवः ॥१६॥ (बृ). [3] क्तिप्रत्यये 1 ed. [4] साधनैः 1 ed. [5] देहाग्नि (बृ). इहाकाश 1 ed. [6] पदावस्थानं 1 ed. [7] चतुर्थ्य(?) [चतुर्थ] श्रुत्यादिभेदभिन्न इत्यर्थः 1 ed (This is omitted in (C). [8] अपि द्विधा(बृ).

नियतश्रुतिसंस्थानाद् गीयन्ते[1] सप्त गीतिषु ।
तस्मात् स्वरगता[2] ज्ञेयाः श्रुतयः श्रुतिवेदिभिः ।।"

शुद्धस्वररूपा इत्यर्थः ।

[3]"अन्तरस्वरवर्तिन्यो ह्यन्तरश्रुतयो मताः ।"

विकृतस्वररूपा इत्यर्थः । प्रयोगबहुलत्वापेक्षया श्रुतय इति बहुवचननिर्देशः ।

"एतासामपि वैस्वर्यं[4] क्रिया[5]ग्रामविभागतः ।।" इति ।

"**केचित्** स्थानत्रययोगात् त्रिविधां श्रुतिं मन्वते । **अन्ये** इन्द्रियवैगुण्यात् त्रिविधां श्रुतिं मन्यन्ते । इन्द्रियवैगुण्यं च त्रिविधम्—सहजं, दोषजम्, अभिघातजं च इति । अत्र इन्द्रियं मनः । [6]तत्र सत्त्वगुणयुक्तं सहजम्, रजस्तमोयुक्तं दोषजम्, अम्लादिरसोपहतम् अभिघातजमित्यर्थः । **अपरे** तु वातपित्तकफसंनिपातभेदभिन्नां चतुर्विधां श्रुतिं प्रतिपेदिरे । तथा चाह [7]**तुम्बुरुः—**

"उच्चैस्तरो ध्वनी रूक्षो विज्ञेयो वातजो बुधैः ।
गम्भीरो [8]घनलीनस्तु ज्ञेयोऽसौ पित्तजो ध्वनिः ।।

स्निग्धश्च सुकुमारश्च मधुरः कफजो ध्वनिः ।
त्रयाणां गुणसंयुक्तो विज्ञेयः संनिपातजः ।।"

[1] गीयते 1 ed. [2] ग. रक्तता fn. 1 ed. [3] अन्तः श्रुति वि(बृ). [4] चैश्वर्यं (बृ). [5] क्रमवि 1 ed. [6] तच्च (D). [7] तुम्बंरुः 1 ed. [8] घनशीलश्च ज्ञातव्यः पित्त (बृ).



इति । एते तु शब्दभेदत्वेन वक्ष्यन्ते । अपरे तु **वेण्वादयो[1] मुनयो** नवविधां श्रुतिं मन्यन्ते । तथा हि—

"द्विश्रुतिस्त्रिश्रुतिश्चैव चतुःश्रुतिक एव च ।
स्वरप्रयोगः कर्तव्यो वंशच्छिद्रगतो बुधैः ।। (२८)

इति । **भरतेनाप्युक्तम्—**

"द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः ।
कम्पमानार्धमुक्ताश्च व्यक्तमुक्ताङ्गुलिस्वराः ।।
इति तावन्मया प्रोक्ताः [2]समीच्यः श्रुतयो नव ।"

इति । एतानि षण्मतानि स्वरश्रुत्योरभेदमङ्गीकृत्य प्रवर्तितानीति मन्तव्यम् । तानि तु अभिव्यङ्ग्यत्वाभिव्यञ्जकत्वाभ्यां सक्षाद्भिन्नरूपयोः स्वरश्रुत्योर्भेदापह्नवान्न समीचीनानि ।

"अत्र **केचित्** मीमांसा[3]मांसलितधियो धीरा द्वाविंशतिं श्रुतीर्मन्यन्ते । **केचित्** पुनः षट्षष्टिभेदभिन्नाः श्रुतय इति वदन्ति । **अन्ये** पुनः आनन्त्यं वर्णयन्ति श्रुतीनाम् । तथा चाह **कोहलः—**

"द्वाविंशतिं केचिदुदाहरन्ति
श्रुतीः श्रुतिज्ञानविचारदक्षाः ।
षट्षष्टिभिन्नाः खलु केचिदासा-
मानन्त्यमन्ये[4] प्रतिपादयन्ति ।।"

इति । तत्र,

[1] वेणादयो 1 ed; ग. वेणवादयो fn. 1 ed. [2] सवंशश्रुतयो (बृ). [3] धिमांसलित 1 ed. [4] न्त्यमेव 1 ed.

"आनन्त्यं हि[1] श्रुतीनां [2]च सूचयन्ति विपश्चितः ।
यथा ध्वनिविशेषाणामानन्त्यं गगनोदरे ॥
[3]उत्तालपवनोद्वेलजल[4]राशिसमुद्भवाः ।
[5]इयत्तां प्रतिपद्यन्ते न तरङ्गपरंपराः ॥"
इति श्रुतीनामानन्त्यं दर्शितम् ।

अस्मिन् पक्षे रणनानुरणनात्मकयोः श्रुतिस्वरयोर्भेदाङ्गीकारेऽपि अनुरणनरूपाणामपि ध्वनीनां श्रुतित्वमभिधाय, उभयेषामपि **"वीचीतरङ्गन्यायेन"** उत्पद्यमानानां तेषामतिसूक्ष्मभागकल्पनया प्रतिध्वन्यवयवभूतध्वनिबहुत्वविवक्षया, आनन्त्यं दर्शितम् । तदनुपपन्नमिति मन्तव्यम् ।

यद्यपि––श्रवणयोग्यस्य ध्वनेरिन्द्रियग्राह्यत्वाक्षिप्तेन सावयवत्वेन त्रसरेणुवदवयवाः सन्ति,[6] तथापि तेषां श्रोत्रप्रत्यक्षमूलेन अनुमानेन, अर्थापत्त्या वा, अन्यतरेणैव त्रसरेणुगतपरमाणुवद् गम्यतया श्रोत्रग्राह्यत्वाभावात्, [7]स्वतः स्वराभिव्यक्तिहेतुत्वाभावेन अश्रुतित्वादिति । द्वाविंशतिश्रुतिपक्षे, षट्षष्टिश्रुतिपक्षे [8]च यद्यपि श्रुतिस्वरयोः भेदाङ्गीकारः समान एव; तथापि द्वाविंशतिश्रुतिपक्षे द्वाविंशतिः श्रुतय एव मन्द्रस्थाः स्थानान्तरयोरपि द्विगुणद्विगुणत्वेनावर्त्यन्त इति ।

षट्षष्टिश्रुतिपक्षे तु–––तावत्य एव श्रुतयः स्थानत्रयेऽपि अनावृत्ताः, परस्परं भिन्ना इति च वैषम्यम् । तत्र अनावृत्ति-

[1] तु (बृ). [2] तु दर्शयन्ति (बृ). [3] णाममानं 1 ed. [4] द्वेल्लज्जल 1 ed; उच्चण्डपवनोद्गेगजल (बृ). [5] इयत्यः 1 ed; कियन्तः (बृ). [6] सन्तु 1 ed. [7] सर्वतः (D). [8] वा (C).



पक्षस्वीकारे षड्जादीनामपि स्वराणामावृत्त्यभावात् मध्यतारस्थाः चतुर्दश स्वराः पृथग्व्यपदेशभाजो भवेयुः । नैव तथा व्यवहारः । अत एव **मतङ्गादि**दर्शितेषु नवसु पक्षेषु द्वाविंशतिश्रुतिपक्षमेव रणनानुरणनात्मना साक्षादनुभूयमानश्रुतिस्वरभेदानपह्नवेनावृत्त्या सप्तानामेव स्वराणां गुणभिन्नानां व्यवहारोपयोगित्वसिद्धेश्च सारतमं निश्चित्य, **निःशङ्कः** वीणयोर्निदर्शितानां तासां द्वाविंशतिश्रुतीनां मध्ये, चतुर्थीप्रभृतिषु शास्त्रानुसारेण पूर्वोत्तरावधिप्रदर्शनपूर्वकं षड्जादिसप्तस्वरस्थापनं विदधाति––**वीणाद्वय** इत्यादिना । **चतुःश्रुतिरिति ।** स्वाभिव्यक्तिकरणत्वेन चतस्रः श्रुतयो यस्येति स तथोक्तः । एवं त्रिश्रुतिरित्यादौ द्रष्टव्यम् ॥ -१०-१६ ॥

(सु०) दृष्टान्तेन विनैते नादविशेषा दुरवबोधाः, कण्ठेऽपि दर्शयितुमशक्याः; तस्माद् **वीणाद्वंद्वे** दृष्टान्तकथनं प्रतिजानीते––**व्यक्तय इति** । ताः प्राकट्येन दर्शयितुमित्यर्थः । तदुक्तं **संगीतसमयसारे––**

"ते तु द्वाविंशतिर्नादा न कण्ठेन परिस्फुटाः ।
शक्या दर्शयितुं तस्माद् वीणायां तन्निदर्शनम् ॥"

इति । प्रतिज्ञातमर्थं कथयति––**द्वे वीणे** इति । **सदृशौ,** समाने । आकारसाम्यं नात्रोपयुज्यत इत्याह––**यथा नादः समो** भवेदिति । तदुक्तम्––

"द्वे वीणे तुलिते कार्ये [1]समस्तावयवैस्तथा ।
एकवीणेव भासेते यथा द्वे अपि शृण्वताम् ।"

इति । **तयोः** प्रत्येकं **द्वाविंशतिस्तन्त्र्यः** स्थापनीयाः । तासु आद्या **मन्द्रतमध्वाना** कर्तव्या । स मन्द्रतमो यस्माद्धीनो मन्द्रोऽन्यो नादो रञ्जको न निष्पद्यते । **द्वितीया** तस्याः सकाशात् **मनाक् किंचिदुच्चध्वनिः ।**

[1] सामानावयवै (A).

किंचित् इत्यनेनैवोक्तमर्थं विशदयति—**मध्ये ध्वन्यन्तराश्रुतेरिति** । यथा [1]मध्ये विसदृशं ध्वन्यन्तरं नोत्पद्यते, तथा नैरन्तर्यं विधेयम् । तदुक्तम्—

"द्वितीया तु ततस्तीव्रध्वनि[2]स्तन्त्रीर्विधीयते ।
[3]यथा यथा तयोर्मध्ये न तृतीया ध्वनिर्भवेत् ॥"

इति । ताः तन्त्र्यः, अधोऽधः[4]स्थाताः तीव्रनादा भवन्ति । ताभ्यः तन्त्रीभ्यो जातो नादः श्रुतिरित्युच्यते । श्रुतेः प्रमाणमुक्तं **मतङ्गेन**—"ननु श्रुतेः किं मानम्? उच्यते, पञ्चमस्तावद् ग्रामद्वयस्थो लोके प्रसिद्धः । [5]तस्योत्कर्षापकर्षाभ्यां मार्दवादायतत्वाद्वा[6] यदन्तरं तत्प्रमाणा श्रुतिः" इति । स्थानत्रये । षट्षष्टिसंख्याकानां श्रुतीनां नामान्युक्तानि **संगीतसमयसारे**—

"मन्द्रा चैवातिमन्द्रा च घोरा घोरतरा तथा ।
मण्डना च तथा सौम्या सुमनाः पुष्करा तथा ॥
शङ्खिनी चैव नीला च उत्पला चानुनासिका ।
[7]घोषावती लीननादा आवर्तन्यपि[8] चापरा ॥
रणदा चैव[9] गम्भीरा दीर्घतारा च नादिनी ।
मन्द्रजा सुप्रसन्ना च [10]निनदा मन्द्रसप्तके ॥
नादान्ता निष्कला गूढा सकला [11]मधुरा गली ।
एकाक्षरा [12]भृङ्गजाती रसगीती सुरञ्जिका ॥
पूर्णालंकारिणी चैव वांशिका वैणिका[13] तथा ।
त्रिस्थाना सुस्वरा [14]सौम्या भाषाङ्गी वार्तिका[15] तथा ॥

[1] मध्यं (A). [2] स्तन्त्री वि (B). [3] तथा (B). [4] स्थितास्तीव्र (A), (B). [5] तस्य श्रुत्युत्कर्षापकर्षाभ्यां (A), (B). [6] वायतत्वाद्वा य (A); वोदयस्त (B). [7] घोषवती (A). [8] आवर्तिन्यपि (A), (B). [9] उग्रनादा च (B). [10] निनादा (B); निगाद्य? (A). [11] च मुरा दला (A); मधुनादता (B). [12] भृङ्गजानी संगीती दस्वनंकिका? (B). [13] वेणिका (A). [14] सौमा (B). [15] वार्तिकी (B).



संपूर्णा च प्रसन्ना च सर्वव्यापनिका तथा ।
द्वाविंशतिः[1] समाख्याताः श्रुतयो मध्यसप्तके ॥
ईश्वरी चैव कौमारी [2]सवराली तथा परा ।
भोगवीर्या मनोरामा सुस्निग्धा च तथा परा ॥
[3]दिव्याङ्गाथो सुललिता विद्रुमा च तथा परा ।
महार्का शङ्खिनी राका लज्जा चैव[4] तथा परा ॥
काली सूक्ष्मातिसूक्ष्मा [5]च पुष्टा चैव सुपुष्टिका ।
विस्पष्टा [6]काकली चैव कराली च तथा परा ॥
विस्फोटान्तर्भेदिनी[7] च इत्येतास्तारसप्तके ।

इति । श्रुतिभ्यः स्वरोत्पत्तिप्रकारं कथयति—**वीणाद्वय** इति । **वीणाद्वये** चलवीणायां ध्रुववीणायां च स्वराः स्थापनीयाः । तत्र चतस्रः श्रुतयो यस्य संबन्धिन्यः, स चतुःश्रुतिः षड्जस्तुरीयायां चतुर्थ्यां तन्त्र्यां स्थाप्यः । त्रिश्रुतिर्ऋषभः सप्तम्यां तन्त्र्याम् । द्विश्रुतिर्गांधारो नवम्यां तन्त्र्याम् । चतुःश्रुतिर्मध्यमस्त्रयोदश्यां तन्त्रयाम् । चतुःश्रुतिः पञ्चमः सप्तदश्यां तन्त्र्याम् । त्रिश्रुतिर्धैवतो विंशतितम्यां तन्त्र्याम् । तन्त्र्यां द्विश्रुतिर्निषादो द्वाविंत्यां तन्त्र्यां समापनीय इति ॥ १०-१६ ॥

**एकविंश्या द्वितीयायां वीणैकात्र ध्रुवा भवेत् ।**
**चलवीणा द्वितीया तु तस्यां [8]तन्त्रीस्तु सारयेत् ॥ १७ ॥**
**स्वोपान्त्यतन्त्रीमानेयास्तस्यां सप्त स्वरा बुधैः ।**
**ध्रुववीणास्वरेभ्योऽस्यां चलायां ते स्वरास्तदा[9] ॥ १८ ॥**
**एकश्रुत्यपकृष्टाः स्युरेवमन्यापि[10] सारणा ।**

[1] शभिः (B). [2] शंवराजी (A); संवराटी (B). [3] दिव्याङ्गी तु स्वललिता? (B). [4] महाकाली शंखिनी च कालजा च (A), (B). [5] तु पुष्टा (B). [6] शैकली (B). [7] भेंदिता (B). [8] ख. तन्त्रीं तु fn. 1 ed; तिस्रस्तु (D). [9] स्तथा (D). [10] मन्याश्च (A.L.) fn. 1 ed.

(क०) **अत्र,** वीणयोः । **एका ध्रुवा भवेदिति** । अनयोः चलत्वध्रुवत्वे सारणा अन्वयव्यतिरेकानुविधायिनी । **द्वितीयेति ।** ध्रुवत्वेन कल्पिताया अन्येत्यर्थः । अत्र **तु**शब्दो व्यपदेशान्तरपरिग्रहार्थः । श्रुति[1]गतेयत्तापरिज्ञानार्थं चलवीणायां सारणां विदधाति ––**तस्यामिति । तन्त्रीस्तु सारयेदिति तु**शब्दो भिन्नक्रमः । **तस्यां** त्विति योजना ध्रुवातो वैषम्यप्रदर्शनार्था । **सारयेत्** सारणां कुर्यात्; स्वस्व[2]तन्त्रीस्थितान् स्वरान् तच्छ्रुतिस्थानात् प्रच्याव्य श्रुत्यन्तराणि तन्त्रीः प्रापयेदित्यर्थः ।। **सारयेदित्यनेन** [3]अनियमेन श्रुत्यन्तरप्रापणे प्राप्ते, प्रथमादिसारणासु श्रुत्यन्तरनियममाह–– **स्वोपान्त्येति । तस्यां**––प्रथमायां सारणायाम् ।

ननु––श्रुत्यन्तरप्राप्त्या स्वरान्तरत्वं किं न स्यादित्यत आह––**ध्रुववीणास्वरेभ्य** इति । **ते स्वराः तदेकश्रुत्यपकृष्टाः स्युरित्यत्र** त इति ध्रुवायामिव चतुःश्रुतिकत्वादिलक्षणानां षड्जादीनां परामर्शात् श्रुत्यन्तर[4]प्राप्त्या स्वरान्तरत्वप्राप्तावपि एकश्रुत्यपकर्षेण तेषामेव नीचत्वमात्रप्रतीतेः विशेष[5]लाभाभावात् स्वरान्तरत्वं न स्यादित्यर्थः । उक्तं प्रकारं सारणान्तरेऽप्यतिदिशति––**एवमिति ।** पूर्वत्र सारणायामेकश्रुत्यप[6]कृष्टान् स्वरान् प्रकृतिं कृत्वा, तेषां ततोऽप्युपान्त्यतन्त्र्यानयनमिहान्यशब्दार्थः ।। १७-१९- ।।

(सु०) अत्र वीणाद्वये एका चलवीणा, एका ध्रुववीणा । [7]यस्यां स्वराः स्वस्थानं परित्यज्य अपकृष्यन्ते सा चलवीणा; यस्यां तु नापकृष्यन्ते

[1] स्वरेयत्ता 1 ed. [2] तन्त्र्युत्थितान् स्वरान् (C), तन्त्र्युत्थितात्स्वरात् तत्तच्छ्रुति 1 ed. [3] नियमेन 1 ed. [4] प्राप्तावप्येक 1 ed. [5] भाषाभावा (D); ताभावा 1 ed. [6] कृष्टात्स्वरात्प्रकृ(?) तिकत्वात् तेषां 1 ed. [7] एवं वीणाद्वये स्वरानवस्थाप्य यस्यां (A), (B).



सा ध्रुववीणा । श्रुतिनिश्चयार्थं चलवीणायां यत्कर्तव्यं तदाह––**चलवीणेति । तस्यामिति––तस्यां** चलवीणायां **तन्त्रीः सारयेद्** अपकर्षयेत् । प्रथमसारणाप्रकारमाह––**स्वोपान्त्येति ।** तस्यां चलवीणायां सप्तापि स्वरा यत्र स्थापिताः ता अन्त्यास्तन्त्र्यः, तत्समीपवर्तिन्योऽपकृष्टा उपान्त्याः, तासु सप्त स्वरा **आनेयाः** स्थापनीयाः ।

एवं प्रथमसारणायां कृतायां किं स्यात्? तदाह––**ध्रुववीणेति । अस्यां चलायां** चलवीणायां **ते** षड्जादयः **स्वरा** ध्रुववीणास्वरेभ्यः तदपेक्षया **एकश्रुत्या अपकृष्टाः स्युः** । एवमेव द्वितीयतृतीयचतुर्थ्यः **सारणाः** कर्तव्या इत्याह––**एवमिति ।** प्रतिसारणं स्वराणां ततोऽपि पुनरेकैकश्रुत्यपकर्षः कर्तव्यः ।। १७-१९- ।।

**श्रुतिद्वयलयादस्यां चलवीणागतो गनी ।। १९ ।।**

**ध्रुववीणोपगतयो रिधयोर्विशतः क्रमात् ।**
**तृतीयस्यां सारणायां विशतः सपयो रिधौ ।। २० ।।**

**निगमेषु चतुर्थ्यां तु विशन्ति समपाः क्रमात् ।**
**श्रुतिद्वाविंशतावेवं सारणानां चतुष्टयात्[1] ।। २१ ।।**

**ध्रुवाश्रुतिषु लीनायामियत्ता ज्ञायते स्फुटम् ।**
**अतः परं तु रक्तिघ्नं न कार्यमपकर्षणम् ।। २२ ।।**

(क०) द्वितीयादिषु सारणासु ज्ञेये दर्शयति––**श्रुतिद्वयेत्यादिना । अस्यां,** द्वितीयसारणायाम् । **चलवीणागतौ,** चलवीणायां [2]स्वस्वोपान्त्यतन्त्रीस्थितौ, **गनी,** गांधारनिषादौ, **ध्रुववीणोपगतयोः,** ध्रुववीणायां स्वस्वाधारश्रुतिस्थयोः **रिधयोः,** ऋष-

[1] चतुष्टयम् 1 ed. [2] स्वस्योपान्त्य 1 ed.

भधैवतयोः, **क्रमाद्,** ऋषभे गांधारः, धैवते निषादश्च श्रुतिद्वय-लयात् प्रातिस्विकश्रुतिद्वयपरित्यागाद् विशतो लीनौ भवतः। ध्वनिसाम्यादेकाकारतां भजत इति यावत्। एवं तृतीयचतुर्थ-सारणयोरपि स्वरान्तरप्रवेशो द्रष्टव्यः।

ननु चतुर्थसारणायां मन्द्रषड्जस्य निषादे प्रवेश उच्यते; तत्कथमुपपद्यते? 'कार्या मन्द्रतमध्वाना' (अत्रैव. श्लो. १२-) इति षड्जादिमश्रुतेरारम्भात् तत्पूर्वध्वन्यसंभवेन उपान्त्यतन्त्यभावात्। [1]सत्यम्--ध्वन्यसंभवात् तन्त्यभावः; तथापि मन्द्रस्वरसप्तकस्या-वृत्तौ षड्जनिषादयोः संनिधानात् निषादाधारश्रुतेः उपान्त्यत्वं कल्पयित्वा प्रवेशः पर्यवस्यतीत्युपपन्नम्। अथवा, स्थानान्तरावृत्तस्य तस्यैव षड्जस्य पूर्वं निषादसंभवात् तस्मिन् प्रवेशो द्रष्टव्यः।

सारणानां फलमाह--**श्रुतिद्वाविंशता**[2]विति। यद्येवं स्याद् तदनावृ**त्तिमतानुसारेण** सारणापञ्चकेनापि सप्तानामपि[3] स्वरा-णाम् एकोनत्रिंशच्छ्रुतीयत्तानिश्चयः कर्तुं शक्यत इति। नैवम्[4]। स्वरास्तावत् श्रुत्यनुरणनात्मकाः, ते च षड्जादयो लोके, शास्त्रे च चतुर्थ्यादिश्रुतिषु मयूरादिस्वरसंवादित्वेनाभिव्यक्ताः सिद्धाः। तेषां तदुक्तरीत्योत्कर्षणेन[5] पञ्चम्यादिषु श्रुतिषु प्रापणे कृते तादृ-शानुरणनाभावात् मन्द्रमध्ययोः उत्तरोत्तरस्थानाक्रमणे[6] तारमन्द्र-व्यवस्थितेरपायाच्च, यतो रक्तिघातः, अतः सारणान्तरं न कर्त-व्यमित्यभिसंधायोक्तम्--**अतः परं त्विति** ॥ -१९-२२ ॥

(सु०) द्वितीयसारणायां कृतायां यत्सिध्यति तदाह--**श्रुति-द्वयेति। अस्यां** चलवीणायां द्वितीयसारणायां कृतायां श्रुतिद्वयस्य

[1] सप्तध्वन्य 1 ed. [2] **श्रुतिर्द्वादशता** (D). [3] सप्तानामेव 1 ed. [4] मैवम् (D). [5] त्कर्षेण (D). [6] क्रमणेन 1 ed.



[1]लयादपकर्षात् चलवीणायां[2] वर्तमानौ गांधारनिषादौ **ध्रुववीणोपगतयोः** धैवतयोः प्रविशतः। **क्रमादिति।** गांधार[3] ऋषभं, निषादो धैवतमित्यर्थः। तयोः प्रविशत इति तत्समाननादौ भवत इत्यर्थः।

तृतीयसारणायां सिद्धं कथयति--**तृतीयस्यामिति। सपयोः,** षड्जपञ्चमयोः **रिधौ,** ऋषभधैवतौ विशतः। ऋषभः षड्जं प्रविशति, धैवतः पञ्चमं प्रविशति। चतुर्थ्यां तु सारणायां मध्यषड्जो मन्द्रनिषादं प्रविशति, मध्यमो गांधारं प्रविशति, पञ्चमो मध्यमं प्रविशति। उपसं-हरति--**श्रुतिद्वाविंशताविति।**

एवं सारणाचतुष्टयात् श्रुतिद्वा**विंशतौ** ध्रुवाश्रुतिषु लीनायां सत्यां द्वाविंशतिरेव श्रुतय इतीयत्तैतावत्संख्याकत्वं ज्ञायते। द्वितीयसारणायां श्रुतिचतुष्टयलाभः, तृतीयायां[4] षट्श्रुतिलाभः, चतुर्थ्यां द्वादशश्रुतिलाभः। ननु--पुनरप्यपकर्षणं कर्तव्यम्? [5]नेत्याह--**अतः परमिति। अतः परमप-कर्षणं न कार्यम्।** कुतः? यतो **रक्तिघ्नमिति।** अतः परमपकर्षणे **कृते** स्वराणां रञ्जकत्वाभावात् स्वरत्वमेव नश्यति, 'स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते' इति वक्ष्यमाणत्वात् ॥ -१९-२२ ॥

**श्रुतिभ्यः स्युः स्वराः षड्जर्षभगांधारमध्यमाः।**
**पञ्चमो धैवतश्चाथ निषाद इति सप्त ते ॥ २३ ॥**
**तेषां संज्ञाः सरिगमपधनीत्यपरा मताः।**

(क०) इत्थमियत्तया निश्चिताभ्यः श्रुतिभ्यः स्वराणां निष्पत्तिमाह--**श्रुतिभ्यः स्युः स्वरा** इति। चतसृभ्यस्तिसृभ्यो

[1] चलादप (A). [2] वीणावत् (A). [3] गान्धारो (B). [4] तृतीय-सारणायां (B). [5] नवेत्याह (B); नेत्यत आह (A).

द्वाभ्यां च यथायोगं[1] द्वाविंशतेः श्रुतिभ्यः सप्त स्वरा भवन्तीत्यर्थः । अत्र पञ्च पक्षाः संभवन्ति——श्रवणैकेन्द्रियग्राह्यत्वाद् विशेषस्पर्श–शून्ययोः स्वरश्रुत्योः जातिव्यक्त्योरिव तादात्म्यमिति **प्रथमः** पक्षः । दर्पणे मुखविवर्तवत् श्रुतिषु स्वरा विवर्तन्त इति **द्वितीयः ।** यथा घटस्य मृत्पिण्ड[2]दण्डादिकार्यत्वं, तथा स्वराणां श्रुतिकार्यत्वमिति **तृतीयः ।** क्षीरं दधिरूपेणेव श्रुतयः स्वररूपेण [3]विपरिणमन्त इति **चतुर्थः ।** प्रदीपाद् अन्धकारस्थितघटाद्यभिव्यक्तिवत् श्रुतिभ्यः स्वराणामभिव्यक्तिरिति **पञ्चमः ।**

नाद्यः, स्वरश्रुत्योर्भिन्नबुद्धिग्राह्यत्वाद् आश्रयाश्रयित्वभेदाच्च जातिव्यक्त्योरपि 'निर्विशेषं न सामान्यम्' इति **न्यायेन** भेदस्य सिद्धत्वाच्च । न द्वितीयः, विवर्तत्वे हि स्वराणां भ्रान्तत्वं स्यात्; न च तथा, तेषामबाधितप्रयोगहेतुत्वदर्शनात् । **तृतीयो** ऽपि न परीक्षाक्षमः । स्वरव्यतिरेकेन श्रुतिसद्भावे प्रमाणाभाव इति[4] वक्तुं हि न युक्तम्, 'स्वरस्य हि श्रूयमाणम् अनुरणनात्मकत्वं रणनमन्तरेण नोपपद्यते' इत्यर्थापत्त्या वा, 'अयं स्वरो रणनपूर्वकः, अनुरणनात्मकत्वाद् दण्डाहतजयघण्टानुरणनशब्दवत्' इत्यनुमानेन वा तत्सिद्धेः ।

सत्यम्——यद्यपि स्फुटपौर्वापर्येण कार्यकारणभावप्रतीतिरस्ति, तथापि अपादानस्य मृत्पिण्डादेः यथा घटादिकार्यनिष्पत्तौ भेदेनानुपलब्धिः न [5]तथा इह स्वरनिष्पत्तौ श्रुतीनामनुपलम्भ इति तासामकारणत्वात्[6] । चतुर्थपञ्चमावदुष्टत्वेन[7] **मतङ्गादिसं**-

[1] ग. योग्यं fn. 1 ed. [2] दण्डकार्यत्वं 1 ed. [3] परिणमन्त 1 ed. [4] भावादिति 1 ed. [5] तथाऽत्र (C). [6] त्वान्न तृतीयः 1 ed. [7] दुष्टत्वे 1 ed.



तत्वाद् ग्राह्यौ । अथ शुद्धस्वरान् अन्वर्थतया प्रसिद्धैर्नामभिः परिगणयति——**षड्जेति ।** षड्जादिनाम्नामन्वर्थता **मतङ्गादि**-भिरुक्ता । तद्यथा——

"षण्णां स्वराणां जनकः षड्भिर्वा जन्यते स्वरैः ।
षड्भ्यो वा जायते ऽङ्गेभ्यः षड्ज इत्यभिधीयते ।।" इति ।

षडपि स्वरान् जनयति प्रकाशयतीति जनेः अन्तर्भावितण्यर्थात् "अन्येष्वपि दृश्यते" इति डप्रत्यये टिलोपे च सति षड्ज इति रूपम् । षड्भिः स्वरैः अङ्गभावेन प्रविष्टैः जन्यते प्रकाश्यत इति वा षड्जः । पूर्ववद् रूपसिद्धिः । षड्भ्यो नासाकण्ठोरस्तालुजिह्वा[1]दन्तस्थानेभ्यो जायत इति वा "पञ्चम्यामजातौ" इति डप्रत्यये षड्ज इति ।

"प्राप्नोति हृदयं शीघ्रमन्यस्मादृषभः स्मृतः ।
स्त्रीगवीषु यथा तिष्ठन् विभाति ऋषभो महान् ।।
स्वरग्रामे समुत्पन्नः स्वरोऽयमृषभस्तथा ।" इति ।

ऋषति गच्छति हृदयमन्यस्वरेभ्य इति 'ऋष गतौ" इत्यस्माद् धातोः औणादिके [2]अभच्प्रत्यये ऋषभ इति रूपम् । यथा गोसमूहे बलीवर्दः, तथा स्वरसमूहे राशौ द्वितीयो बलवान् । ऋषभवन्नदतीति वा ऋषभः ।

"वाचं गानात्मिकां धत्त इति गांधारसंज्ञकः" इति ।

गां गानात्मिकां वाचं धत्त इति 'धृ धारणे' इत्यस्माद्धातोः गोशब्दे कर्मण्युपपदे अण्प्रत्यये पृषोदरादित्वाद् बहुलग्रहणाद्वा अलुकि गांधार इति रूपम् । गान्धर्वसुखहेतुत्वाद्वा गांधारः ।

[1] रन्ध्रस्थाने 1 ed. [2] भक्प्रत्यय.

"स्वराणां मध्यमत्वाच्च मध्यमः स्वर [1]इष्यते ।" इति ।

सप्तानां स्वराणां चतुर्थो यः स्वरः तस्य मध्यस्थत्वात् 'मध्यान्मः' इति [2]भवार्थे मप्रत्यये मध्यम इति रूपम् । अथवा मद्धियोऽमो रोग इति [3]मद्धचमः । यद्वा मम धियो रोग इति [4]मद्धचमशब्देन, सप्तानां स्वराणां श्रूयमाणो रुचिरत्वाशङ्कया पीडयतीत्यर्थः ।

"स्वरान्तराणां विस्तारं यो मिमीते स पञ्चमः ।
पाठक्रमेण गणने संख्यया पञ्चमोऽथवा ॥" इति ।

"पचि विस्तारे" इत्यस्माद्धातोर्भावे धञि पञ्चं विस्तारं मिमीत इति "आतो ऽनुपसर्गे कः" इति कप्रत्यये पञ्चम इति रूपम् । "ह्वावामश्च" इत्यण्युक् च संज्ञात्वा[5]दुपेक्ष्येते । यद्वा––पृषोदरादित्वाद्युगभाव [6]आलोपश्च । स्वराणां क्रमेण गणने पञ्चमत्वाद्वा पञ्चमस्थानसंभूतत्वाद्वा पञ्चमः ।

"धीरस्यास्तीति[7] धीवांस्तत्संबन्धी धैवतः स्मृतः ।" इति ।

यद्वा, "षष्ठस्थाने धृतो यस्मात्ततो ऽसौ धैवतो मतः ।" इति च । **धीरस्यास्तीति धीवान्,** तत्संबन्धित्वेन "तस्येदम्" इत्यणि धैवत इति रूपम् । संबन्धित्वं च अनेकप्रकारं निरूप्यनिरूपकलक्षणम्, आस्वाद्यास्वादकलक्षणं, जन्यजनकलक्षणं चेति । तत्र उत्तरस्वरेण

[1] उच्यते 1 ed. [2] भवे म 1 ed; भावे म (D). [3] मध्यमः 1 ed. [4] मध्यम 1 ed. [5] इत्यण पुष्कसंज्ञात्वा (ण्तु युक्सत्त्वा) 1 ed; ग. इत्यणयुक्तसंज्ञात्वा fn. 1 ed, (C). [6] कित् आल्लो (D); कित् अल्लो (C) [7] धीर्यस्यास्ति स 1 ed.



संसृष्ट[1]श्रुतित्वात् स्थूलमतीनां दुर्विवेकत्वाद् धीमतः सूक्ष्ममतेरेव निरूप्यत्वाद् धैवतः । षष्ठस्थाने ललाटस्थाने धृतत्वाद्वा धैवतः ।

"निषीदन्ति स्वराः सर्वे निषादस्तेन कथ्यते ।" इति ।

'षद्लृ विशरणे' इत्यस्माद्धातोः, निषीदन्ति पर्यवस्यन्ति अस्मिन् स्वरा इति "अकर्तरि च"; इति सूत्रेण घञि निषाद इति रूपम्; इत्युक्तप्रकारेण ते स्वराः सप्तैवेति नियमे सप्तधात्वाश्रितत्वं [2]सप्तचक्राश्रितत्वं वा निमित्तं **मतङ्गोक्त**मनुसंधेयम् । प्रयोगसौकर्यार्थं तेषाम् आद्याक्षराण्युद्धृत्य **संज्ञान्तरा**ण्याह––**तेषां संज्ञा** इति ।

सरिगादीनां मतङ्गाभिमत उद्धारक्रम उच्यते––अत्र अकचटतपयशा अष्टौ [3]वर्गाः । तत्र अष्टमस्य तृतीयं हरिबीजयुक्तम् आद्यस्वरमुद्धरेत्; हरिबीजमकारः । सप्तमस्य द्वितीयं कामबीजयुक्तं द्वितीयस्वरमुद्धरेत्; कामबीजमिकारः । द्वितीयस्य तृतीयं हरिबीजयुक्तं तृतीयस्वरमुद्धरेत् । षष्ठस्य पञ्चमम् अकारयुक्तं [4]चतुर्थस्वरमुद्धरेत् । षष्ठस्य प्रथमम् अकारयुक्तं पञ्चमस्वरमुद्धरेत् । पञ्चमस्य चतुर्थम् अकारयुक्तं षष्ठस्वरमुद्धरेत् । पञ्चमस्य पञ्चमं कामबीजयुक्तं सप्तमस्वरमुद्धरेत् । [5]अत्र सरिगादिषु आद्याक्षराणां व्यञ्जनत्वात् कथं स्वरत्वमित्याक्षिप्य **आचार्यपरिभाषया** संकेतमात्रमेतदिति प्रत्याह **मतङ्गः** ॥ २३, २४- ॥

(सु०) एवं श्रुतीर्निरूप्य स्वरान् निरूपयति––**श्रुतिभ्य** इति । षड्जर्ष[6]भेत्यादीनाम् आद्याक्षरैः व्यवहारार्थं संज्ञान्तराणि कथयति––**तेषा-**

[1] संबद्ध (C). [2] ग. पुस्तकेऽस्मात्पूर्वं 'सप्तद्वयाश्रितत्वम्' [ 'सप्तद्वीपाश्रितत्वम्' (D)] इत्यधिकं वर्तते fn. 1 ed. [3] क. वर्णाः fn. 1 ed. [4] मध्यमस्वरं समुद्धरेत् 1 ed. [5] कामबीजमिकारः । अत्र 1 ed. [6] भेत्यादिना । लाघवेनव्यलहा (B).

**मिति** । सरिगमपधनीत्येताः[1] प्रथमं[2] स्वरोपा[3]दानात् तेषां पूर्वाभ्योऽपराः संज्ञाः । यद्यपि ष ऋगमपधनीति संज्ञाघोषणं युक्तं, तथापि सरिगेत्यपभ्रंशः पाठः ।। २३, २४- ।।

**श्रुत्यनन्तरभावी यः स्निग्धो ऽनुरणनात्मकः ।। २४ ।।**
**स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ।**
**ननु श्रुतिश्चतुर्थ्यादिरस्त्वेवं[4] स्वरकारणम् ।। २५ ।।**

(क०) स्वराणां सामान्यलक्षणं स्वरशब्दस्य निरुक्तिं चाह---**श्रुत्यनन्तरेति । श्रुत्यनन्तरभावी,** श्रुतेः चतुर्थ्यादेः मारुताद्याहत्युत्पन्नप्रथमध्वनेरनन्तरं[5] भाव्याविर्भवनशीलः, **स्निग्धः** अरूक्षः सन् दूरसंश्राव्यः, **अनुरणनात्मकः,** अनुस्वानरूपः,[6] **स्वतः,** सहकारिकारणनिरपेक्षं **श्रोतृचित्तं रञ्जयति** अनुरक्तं करोति । स्वतःशब्दोपपदात् "रञ्ज रागे" इत्यस्माद्धातोः "अन्येभ्योऽपि दृश्यते" इति डप्रत्यये टिलोपे पूर्वपदस्थ[7]तकारादेः पृषोदरादित्वात् लोपे च स्वर इति रूपसिद्धिः ।। -२४, २५ ।।

(सु०) स्वरस्य लक्षणं निर्वचनं च कथयति---**श्रुत्यनन्तरेति ।** श्रुतेरनन्तरं भवतीति **श्रुत्यनन्तरभावी ।** प्रथमतन्त्र्यामाहतायां यो ध्वनिः अनुरणनशून्य उत्पद्यते स श्रुतिः, **यस्तु** ततोऽनन्तरम् **अनुरण**नरूपः श्रूयते **स स्वरः** । कथं तस्य स्वरत्वमित्यत आह---**स्वत** इति । **स्वतः,** अन्यानपेक्षतया यस्मात् **श्रोतृचित्तं रञ्जयति,** तस्मात् स्वर इति निरुक्तिः । कथं तस्य रञ्जकत्वम्? अतो हेतुगर्भं विशेषणं **स्निग्ध** इति । यद्यपि स्निग्धत्वमपामेव धर्मः, 'स्नेहोऽपां विशेषगुणः' **इत्युक्तत्वात्,** न तस्य श्रवणेन्द्रिय-

[1] नीत्यादिकाः (A). [2] प्रथमे (A). [3] दानात्पूर्वाः संज्ञाः (A). [4] रस्त्येवं (D). [5] रनन्तरमनु (D). [6] स्वाररूपः 1 ed. [7] पदस्य 1 ed.



गम्यता; तथापि औपचारिकं स्निग्धत्वं स्वरेषु गृह्यते । अत्र बहुधा विप्रतिपत्तिः---केचित् स्वरश्रुत्योः तादात्म्यं वर्णयन्ति । **यदाहुः---**

"विशेषस्पर्शशून्यत्वात् श्रवणेन्द्रियगम्ययोः[1] ।
स्वरश्रुत्योस्तु तादात्म्यं जातिव्यक्त्योरिवानयोः ।। ३२ ।।" इति ।

केचित् स्वरश्रुत्यो[2] विवर्त्यविवर्तकतामाचक्षते । **यदाहुः---**

"नराणां तु मुखं यद्वद् दर्पणेषु विवर्तते[3] ।
प्रतिभान्ति स्वरा[4]स्तद्वच्छ्रुतिष्वेव विवर्तिनः ।। ३३ ।।" इति ।

केचित् स्वरश्रुत्योः कार्यकारणभावं वदन्ति । **यदाहुः---**

"स्वराणां[5] श्रुतिकार्यत्वमिति केचिद् वदन्ति हि ।
मृत्पिण्ड[6]दण्डकार्यत्वं घटस्येह[7] यथा भवेत् ।। ३४ ।।" इति ।

केचित् परिणामपक्षमाद्रियन्ते । **यदाहुः---**

"श्रुतयः स्वररूपेण परिणामं व्रजन्ति हि[8] ।
परीणमेद्यथा[9] क्षीरं दधिरूपेण सर्वथा[10] ।। ३५ ।।" इति ।

केचित् पुनः अभिव्यक्तिपक्षमङ्गीकुर्वते । **यदाह---**

"षड्जादयः स्वराः सप्त व्यज्यन्ते श्रुतिभिः सदा ।
अन्धकारस्थिता यद्वत् प्रदीपेन घटादयः ।। ३६ ।।" इति ।

एतेषु पक्षेषु परिणामाभिव्यक्तिपक्षावेव स्वीकृतौ मतङ्गेन । **यदाहुः---**

"भेदः [11]स्वलक्षणानां सामान्येनान्यवस्तुवत् सिद्धः ।
तद्धि विशेषैः शून्यंभवति नभःपुष्पसंकाशम् ।। ३८ ।।
नानाबुद्धि[12]गृहीतत्वात् स्वरश्रुत्योस्तु भिन्नता ।
आश्रयाश्रयिभेदाच्च तादात्म्यं केन[13] सिध्यति ।। ३९ ।।

[1] ग्राह्यता (व); गम्यता (B). [2] विवर्तकता (A); विवर्तकभावना (B). [3] तु विवर्तितम् (B). [4] भाति स्वर (बृ). [5] श्रुतीनां (बृ). [6] पिण्डं (A). [7] धटश्चैव (A); घटस्येव (B). [8] यं (A); व्रजत्यथ (B); परिणमति न संशयः (बृ). [9] परिणामो यथा (A), (B); परिणमेत यथा (बृ). [10] सर्वदा (A), (B). [11] स्वरलक्ष (बृ). [12] प्रसाध्यत्वात् (बृ). [13] नैव (बृ).

यदभाणि विवर्तत्वं[1] स्वराणां[2] तदसंगतम् ।
विवर्तत्वे[3] स्वराणां हि भ्रान्तिज्ञानं प्रसज्यते ।। ४० ।।
तथा च[4] कारणत्वं च श्रुतीनां नैव संभवेत् ।। ४३ ।।
कार्येषु विद्यमानेषु कारण[5]स्योपलम्भनात् ।
घटादौ विद्यमाने हि[6] मृत्पिण्डो नोपलभ्यते ।। ४४ ।।
परिणामो ऽप्यभिव्यक्तिर्न्याय्यः[7] पक्षः सतां मतः ।। ४५- ।। इति ।

**मतङ्गेन** तु अन्यथा स्वरशब्दो व्युत्पादितः । यदाह--

"राजृ दीप्तावस्य धातोः स्वशब्दपूर्वकस्य च ।
स्वयं हि[8] राजते यस्मात् [9]तस्मात् स्वर इति स्मृतः ।।" इति ।

षड्जादीनां निरुक्तिरुक्ता **संगीतसमयसारकारेण--**

"नासा कण्ठ उरस्तालुजिह्वादन्तास्तथैव च[10] ।
षड्भिः[11] संजायते यस्मात् तस्मात् षड्ज इति स्मृतः ।।
नाभेः समुत्थितो[12] वायुः कण्ठशीर्षसमाहतः ।
[13]नदत्यृषभवद् यस्मात् तस्मादृषभ ईरितः ।।
नाभेः समुत्थितो[14] वायुः कण्ठशीर्षसमाहतः ।
गन्धर्वसुखहेतुः स्याद्[15] गांधारस्तेन[16] हेतुना ।।
वायुः समुत्थितो[17] नाभेः हृदये च समाहतः ।
मध्यस्थानोद्भवत्वात्तु[18] मध्यमत्वेन[19] कीर्तितः ।।

[1] विवृत्तत्वं (B). [2] श्रुतीनां (बृ). [3] बिवर्ततः (A), (B). [4] तथापि (B); (बृ). [5] कारणे (fn. बृ). [6] तु (बृ). [7] ऽभिव्यक्तिस्तु न्याय्यः (बृ). [8] यो (बृ). [9] तस्मादेष स्वरः स्मृतः (बृ). [10] नासां कण्ठमुरस्तालुं जिह्वां दन्तांश्च संस्पृशन् (सं). [11] षड्भ्यः (सं). [12] समुदितो (B). [13] वृषवन्नदते (A); ऋषभं वदते (B). [14] समुदितो (B). [15] हेतुत्वात् (A). [16] गांधार इति (B). [17] समुदितो (B). [18] द्भवच्छब्दो (B); द्भवत्वाच्च (A). [19] मध्यमस्तेन (A), (B).



वायुः समुत्थितो[1] नाभेरोष्ठकण्ठशिरोहृदि ।
पञ्चस्थानसमुद्भूतः पञ्चमस्तेन[2]कीर्तितः ।।
नाभेः समुत्थितो[3] वायुः कण्ठतालु[4]शिरोहृदि ।
तत्तत्स्थानधृतो[5] यस्मात् ततोऽसौ धैवतो मतः ।।
नाभेः समुत्थिते वायौ[6] कण्ठतालुशिरोहते[7] ।
निषीदन्ति स्वराः सर्वे निषादस्तेन [8]कथ्यते ।।"

इति ।। -२४, २५ ।।

**त्र्यादीनां तत्र पूर्वासां श्रुतीनां हेतुता कथम् ।**
**ब्रूमस्तुर्यातृतीयादिः श्रुतिः पूर्वाभिकाङ्क्षया ।। २६ ।।**

**निर्धार्यतेऽतः श्रुतयः पूर्वा अप्यत्र हेतवः ।**
**दीप्तायता च करुणा मृदुर्मध्येति जातयः ।। २७ ।।**

**श्रुतीनां पञ्च तासां च स्वरेष्वेवं व्यवस्थितिः ।**
**दीप्तायता मृदुर्मध्या षड्जे स्यादृषभे पुनः ।। २८ ।।**

**संस्थिता करुणा मध्या मृदुर्गांधारके पुनः ।**
**दीप्तायते मध्यमे ते मृदुमध्ये च संस्थिते ।। २९ ।।**

**मृदुर्मध्यायताख्या च[9] करुणा पञ्चमे स्थिता ।**
**करुणा चायता मध्या धैवते सप्तमे पुनः ।। ३० ।।**

**दीप्ता मध्येति तासां च जातीनां ब्रूमहे भिदाः ।**
**तीव्रा रौद्री वज्रिकोग्रेत्युक्ता दीप्ता चतुर्विधा ।। ३१ ।।**

[1] समुच्छ्रितो (B). [2] संमतः (B). [3] समुच्छ्रितो (B). [4] तालुकण्ठ (A), (B). [5] स्थाने (B). [6] स्थितो वायुः (A), (B). [7] हतः (A), (B). [8] हेतुना (B). [9] ख. ऽऽख्या ऽत्र; घ. ऽऽख्या या fn. 1 ed.

**[1]कुमुद्वत्यायता यास्याः[2] क्रोधा चाथ प्रसारिणी ।**
**[3]संदीपनी रोहिणी च भेदाः पञ्चेति कीर्तिताः ।। ३२ ।।**
**दयावती तथालापिन्यथ प्रोक्ता मदन्तिका ।**
**त्रयस्ते करुणाभेदा मृदोर्भेदचतुष्टयम् ।। ३३ ।।**
**मन्दा च रतिका प्रीतिः क्षितिर्मध्या[4] तु षड्विधा[5] ।**
**छन्दोवती रञ्जनी च मार्जनी रक्तिका तथा ।। ३४ ।।**
**रम्या च क्षोभिणीत्यासामथ ब्रूमः स्वरस्थितिम् ।**
**तीव्राकुमुद्वतीमन्दाच्छन्दोवत्यस्तु षड्जगाः ।। ३५ ।।**
**दयावती [6]रञ्जनी च रक्तिका चर्षभे स्थिताः ।**
**रौद्री क्रोधा च गांधारे वज्रिकाथ प्रसारिणी ।। ३६ ।।**
**प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः[7] ।**
**क्षिती रक्ता च [8]संदीपन्यालापिन्यपि पञ्चमे ।। ३७ ।।**
**मदन्ती रोहिणी रम्येत्येतास्तिस्रस्तु धैवते ।**
**उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ।। ३८ ।।**

(क०) यद्येवं चतुर्थ्यादिरेव श्रुतेः स्वरकारणत्वमस्तु, न पूर्वपूर्वासामित्याक्षिपति––**नन्विति । त्र्यादीनामिति ।** तृतीयादीनामित्यर्थः । अत्र वृत्तौ तीयप्रत्ययान्तस्य "प्रत्ययलोपेऽपि तदर्थग्रहणम्" इति त्र्यादीनामिति निर्देशोपपत्तिः । समाधत्ते–– **ब्रूम** इति । **तुर्यातृतीयादिः** षड्जमध्यमपञ्चमानां तुर्या, ऋषभधैवतयोस्तृतीया, आदिशब्देन गांधारनिषादयोर्द्वितीया च श्रुतिः,

[1] कुमुद्वत्यायतायाः स्यात् C. E. [2] या स्यात् 1 ed. [3] संदीपिनी 1 ed. [4] क्षमेति मध्या 1 ed. [5] षड्भिदा 1 ed. [6] क. घ. रञ्जिनी fn. 1 ed. [7] मश्रिताः 1 ed. [8] संदीपिन्या 1 ed.



पूर्वाभिकाङ्क्षया, आदिशब्दसामर्थ्यात् पूर्वेत्यस्य वीप्सा कर्तव्या पूर्वपूर्वाभिकाङ्क्षयेति[1] । उत्तरोत्तरतारूपेण[2] लक्षणेन स्वोत्पत्तौ संख्यया तुर्यादिव्यपदेशे च पूर्वपूर्वस्यां साकाङ्क्षतया यतो **निर्धार्यते**, अत इत्यर्थः । श्रुतीनामन्योन्यम् असंकीर्णतया स्वरूपपरिज्ञानाय क्वचित् तासां [3]साजात्येन संगत्या रक्तिलाभाय च अवान्तरभेदसहितानां जातीनां [4]स्वरेषु व्यवस्थानं दर्शयति–– **दीप्तायतेत्यादिना ।** स्वरविनियोगानन्तरम् उद्दिष्टानामपि श्रुतिजातीनामिह निरूपणं श्रुतिस्वरविवेचनरूपार्थसंगतिवशादुपपन्नम् । व्युत्क्रमेण उद्देशस्तु क्वचित् क्रमस्याविवक्षितत्व[5]ज्ञापनार्थम् । एतेन 'कुलानि जातयः––' इत्यादिक्रमस्तु अविवक्षित[6] इति मन्तव्यम् ।। २६-३८ ।।

(सु०) **श्रुतिभ्यः[7] स्युः स्वराः,[8]** (अत्रैव. श्लो. २३) इत्युक्तम्; तत्र श्रुतिभ्य इति पञ्चम्या, "जनिकर्तुः प्रकृतिः" । इत्यनेन श्रुतीनां स्वरान् प्रति कारणत्वं प्रतीयते; [9]अयं स्वरश्चतुश्रुतिः, अयं स्वरः त्रिश्रुतिः, अयं स्वरः द्विश्रुतिरित्युक्तत्वाच्च सर्वासामपि कारणत्वं प्रतीयते:–– तदाक्षिपति––**नन्विति** । ननु––यस्यां श्रुतौ स्वरः स्थाप्यते, सा चतुर्थ्यादिः **श्रुतिः**, चतुर्थी सप्तमी नवमी त्रयोदशी सप्तदशी विंशी[10] द्वाविंशी च[11] श्रुतिरभिव्यञ्जकत्वेन परिणामकत्वेन वा स्वराणां षड्जादीनां **कारण**मस्तु [12]नाम; **पूर्वासां त्र्यादीनां श्रुतीनां** स्वरं प्रति **कथं** हेतुत्वम्?

[1] काङ्क्षया (D). [2] उच्चोच्चतरता 1 ed. [3] जात्येव संगत्या 1 ed. [4] स्वरेव्यवस्थानं 1 ed स्वरेष्ववस्थानं (D). [5] तत्वात् (C). [6] विवक्षित 1 ed. [7] सिद्धान्तस्तु, **श्रा** (B). [8] . . सप्त ते (B). [9] एतावता स्वरं प्रति श्रुतीनां का (B). [10] विंशतितमा (A); विंशतितमी (B). [11] द्वाविंशतीरत्र (B). [12] न (B).

त्यादीनामित्यत्र आदिशब्देन षड्जमध्यमपञ्चमेषु तिसृणां तिसृणामृषभ-धैवतयोः द्वयोर्द्वयोः गाधारनिषादयोः एकस्या एकस्याः पूर्वावस्थितायाः श्रुत्याः[1] स्वरं प्रति क उपयोगः?

परिहरति—**ब्रूम** इति। [2]**तुरीयातृतीयादिः श्रुतिः**, पूर्वापेक्षया निर्धार्यते; इयं श्रुतिः चतुर्थी, इयं तृतीया इयं द्वितीयेति पूर्वाः श्रुतीरपेक्ष्यायं[3] व्यवहारः। यदि पूर्वाः श्रुतयो न स्युः, तर्हि किमपेक्ष्या अयं[4] चतुर्थ्यादि-व्यवहारः स्यात्? ; अतः चतुर्थीत्वादि[5]निर्धारणार्थं पूर्वासामपि श्रुतीनां हेतुत्वसिद्धिः। अधुना श्रुतिजातीर्विभजते[6]—**दीप्तायतेति। श्रुतीनां पञ्च जातयो** भवन्ति—**दीप्ता, आयता, करुणा, मृदुः, मध्या** इति।

तासु का जातिः कस्मिन् स्वरे निवसतीत्यपेक्षायामाह—**तासां चेति। षड्जे** दीप्तादयश्चतस्त्रः श्रुतिजातयः, प्रथमा **श्रुतिः दीप्ता,** द्वितीया **आयता,** तृतीया **मृदुः,** चतुर्थी **मध्या, ऋषभे** तु प्रथमा श्रुतिः **करुणा,** द्वितीया **मध्या** तृतीया **मृदुः। गांधारे** प्रथमा **श्रुतिः दीप्ता,** द्वितीया **आयता। मध्यमे ते** द्वे दीप्तायते मृदुमध्ये च [7]संस्थिते। ततश्च मध्यमस्य प्रथमाश्रुतिः **दीप्ता,** द्वितीया, **आयता,** तृतीया **मृदुः,** चतुर्थी **मध्या। पञ्चमे** प्रथमा श्रुतिः **मृदुः** द्वितीया **मध्या,** तृतीया **आयता,** चतुर्थी **करुणा। धैवते** प्रथमा श्रुतिः **करुणा.** द्वितीया **आयता,** तृतीया **मध्या। सप्तमे निषाद** प्रथमा श्रुतिः **दीप्ता,** द्वितीया **मध्येति।**

तासामपि जातीनाम् अवान्तरजातीः प्रतिज्ञाय कथयति—**तासां चेति। दीप्ता चतुर्विधा—तीव्रा, रौद्री, वज्रिका, उग्रेति। आयतायाः** पञ्च भेदाः—**कुमुद्वती क्रोधा प्रसारिणी संदीपनी**[8] **रोहिणी चेति। करुणायाः** भेदत्रयम्—**दयावती, आलापिनी** [9]**मदन्तिका इति। मृदोश्चत्वारा** भेदाः—**मन्दा,**[10] **रतिः, प्रीतिः, क्षितिरिति। मध्या तु षड्विधा** षट्प्रकारा

[1] श्रुतेः (A), (B). [2] तुरीय (B). [3] रपेक्ष्योयं (B). [4] पेक्ष्योऽयं (B). [5] र्थीत्यादि (A). [6] जातयो भवन्ति (A). [7] व्यवस्थितिः (B). [8] संदीपिनां (A). [9] नन्दिनी इति (B). [10] नन्दा (B).



**च्छन्दोवती, रञ्जनी, मार्जनी, रक्तिका, रम्या,** [1]**क्षोभिणीति। तुशब्देन** पूर्वाभ्य अधिकभेदत्वं सूचितम्।

एतासां[2] जातीनां **स्वरस्थितिं** प्रतिज्ञाय कथयति—**आसामथेति**[3]**। आसां,** श्रुतिजातीनां **षड्जगाः** षड्जे वर्तमानाश्चतस्रो जातयः तीव्रादयः। ततश्च षड्जे[4] प्रथमा [5]श्रुतिः तीव्राजात्याक्रान्ता **दीप्ता**; द्वितीया **कुमुद्वती** जातिका **आयता**; तृतीया **मन्दा**जातिका **मृदुः,** चतुर्थी **च्छन्दोवती**जातिका **मध्या।** [6]**ऋषभे** प्रथमा श्रुतिः **दयावती**जातिका **करुणा**; द्वितीया **रञ्जनी**-जातिका **मध्या**; तृतीया **रति**जातिका **मृदुः।**

**गांधारे** प्रथमा श्रुतिः **रौद्री**जातिका दीप्ता; द्वितीया **क्रोधा**-जातिका **आयता। मध्यमे** प्रथमा श्रुति**र्वज्रिका**जातिका **दीप्ता**; द्वितीया **प्रसारिणी**जातिका **आयता**; तृतोया **प्रीति**जातिका मृदुः; चतुर्थी **मार्जनी**-जातिका मध्या। पञ्चमे प्रथमा श्रुतिः **क्षिति**जातिका **मृदुः**; द्वितीया **रक्ता**जातिका **मध्या**; तृतीया [7]**संदीपनी**जातिका आयता; चतुर्थी **आलापिनी**जातिका करुणा।

**धैवते** प्रथमा श्रुति**र्मदन्ती**जातिका **करुणा**; द्वितीया **रोहिणी**-जातिका **णायता**; तृतीया **रम्या**जातिका **मध्या। निषादे** प्रथमाश्रुतिः **उग्रा**जातिका **दीप्ता**; द्वितीया **क्षोभिणी**जातिका **मध्येति।** ननु—किं श्रुतिजातिनिरूपणेन प्रयोजनम्? उच्यते—तत्तज्जातिकां[8] श्रुतिं श्रुत्वा, मनसो नामसाम्येन [9]तथा तथा विकार उत्पद्यत इति सूचयितुं श्रुतिजाति-निरूपणम्। ततश्च दीप्तां श्रुतिमाकर्ण्य मनसो दीप्तत्वमिव भवति;[10]

[1] क्षोभणी (B). [2] एतासामपि (B). [3] आसाम पीति (A). [4] षड्जस्य (A), (B). [5] स्तीव्रा वज्राद्याक्रान्ता (A); तीव्रत्वजात्याक्रान्ता (B). [6] ऋषभस्य (A), (B). [7] संदीपिनी (A). [8] तज्जातिगं (B). [9] तथा विकार (A). [10] रवति (B).

आयतां श्रुतिमाकर्ण्य आयतत्वमिव[1]; एवं करुणत्वमृदुत्वमध्यत्वतीव्रत्वादि ज्ञातव्यम् ।। २५-३८ ।।

**ते मन्द्रमध्यताराख्यस्थानभेदात् त्रिधा मताः ।**
**त एव विकृतावस्था द्वादश प्रतिपादिताः ।। ३९ ।।**

**च्युतोऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेत् ।**
**साधारणे काकलीत्वे निषादस्य च दृश्यते ।। ४० ।।**

**साधारणे श्रुतिं षाड्जीमृषभः संश्रितो यदा ।**
**चतुःश्रुतित्वमायाति तदैको विकृतो भवेत् ।। ४१ ।।**

**साधारणे त्रिश्रुतिः स्यादन्तरत्वे चतुःश्रुतिः ।**
**गांधार इति तद्भेदौ द्वौ निःशङ्केन कीर्तितौ ।। ४२ ।।**

**मध्यमः षड्जवद् द्वेधान्तरसाधारणाश्रयात् ।**
**पञ्चमो मध्यमग्रामे त्रिश्रुतिः कैशिके पुनः ।। ४३ ।।**

**मध्यमस्य श्रुतिं प्राप्य चतुःश्रुतिरिति द्विधा ।**
**धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ।। ४४ ।।**

**कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ।**
**प्राप्नोति विकृतौ भेदौ द्वाविति द्वादश स्मृताः ।। ४५ ।।**

[2]**ते शुद्धैः सप्तभिः सार्धं भवन्त्येकोनविंशतिः ।**

(क०) प्रसङ्गात् श्रुतिजातीरुक्त्वा प्रकृतस्वरपरामर्शपूर्वकं स्थानभेदात् तेषां त्रैविध्यमाह——**ते मन्द्रेति** । ननु——च्युतादयः पृथक्स्वराः स्युः; किं तेषामवस्थान्तरापन्नषड्जादित्व-

[1] मिति (B). [2] तैः 1 ed.



कल्पनयेत्यत आह——**त एवेति** । **द्वादशेति** । षड्जमध्यमग्रामद्वयापेक्षया क्रमप्राप्तान् विकृतस्वरान् लक्षयति—**च्युतो ऽच्युत**इत्यादिना । चतुःश्रुतिः **षड्जः, द्विश्रुतिः विकृतः** [1]सन् **च्युतो ऽच्युत** इति **द्विधा भवेत्** । [2]स च **साधारणे** [3]स्वसाधारणे च्युतः, **निषादस्य काकलीत्वे** अच्युत इति **दृश्यते** । **साधारणे त्रिश्रुतिः स्यादित्यत्र** मध्यमसाधारण इत्यर्थः । **अन्तरत्वे चतुःश्रुतिरित्यत्र** स्वस्यान्तरत्व इति विशेषणीयम् । **मध्यमः षड्जवदिति** । अत्र षड्जवदिति षड्जो यथा द्विश्रुतिर्विकृतः च्युतत्वाच्युतत्वभेदभिन्नः तथा मध्यमोऽपीति[4] वतेरर्थः । **कैशिके काकलीत्वे चेत्यत्र** कैशिके षड्जसाधारणे **त्रिश्रुतिः**, [5]स्वस्य काकलीत्वे **चतुःश्रुतिरिति** ।। ३९-४६- ।।

(सु०) एवं **श्रुतीः** श्रुतिजातीः, [6]श्रुतिजातिभ्यः स्वरोत्पत्तिं च कथयित्वा स्वरभेदान् निरूपयति——**त** इति । **ते** षड्जादयः स्वराः **त्रिधा** त्रिप्रकाराः । कुतः त्रिप्रकारत्वम्? अत आह——**मन्द्रमध्यताराख्यस्थानभेदादिति** । ततश्च तात्त्विको भेदो नास्ति, किं तु स्थानकल्पितो भेदः । यथा एक एव देवदत्तः त्रिभूमिके प्रासादे प्रथमभूमिकायां द्वितीयभूमिकायां तृतीयभूमिकायां च तिष्ठन् अन्य इव [7]भासते, तथा स्वरा अपि स्थानविशेषेणेत्यर्थः ।

ननु——यथा षड्जादीनां सप्तानां स्वराणां स्थानविशेषेणैव भेदः तात्त्विकः प्रतीयते, तथा मन्द्रमध्यतारस्थानस्थितानां षड्जादीनामपीति कथमत्रैव काल्पनिकत्वमङ्गीक्रियते? ब्रूमः; प्रत्यभिज्ञानात् स्थानत्रयेऽपि

[1] स च च्युतोऽच्युत (C). [2] साधारणे (C). [3] च्युतनिषादस्य (D). [4] ऽपि तथेति 1 ed. [5] स्वस्वकाकली 1 ed. [6] श्रुतिभ्यः (A), (B). [7] प्रतिभाति (B).

**त एव** स्वरा इति [1]प्रतीयते । य एव मन्द्रस्थः षड्जः, स एवायं मध्यस्थाने, तारस्थाने च प्रतीयत इति सकललोकसाक्षिका प्रत्यभिज्ञा नावज्ञातुं शक्यते । नैवं षड्जर्षभादिषु सप्तसु प्रत्यभिज्ञालेशोऽप्यस्तीति महान् विशेषः ।

एवं शुद्धान् सप्त स्वरान् निरूप्य, द्वादश विकृतान् स्वरान् विभज्य निरूपयति––**त एवेति** । ते शुद्धाः सप्त स्वरा **एव** [2]**विकृतावस्था विकारं** प्राप्ताः **द्वादशसंख्याका** भवन्ति ।। तमेव विकारं दर्शयति––**च्युत** इति । [3]**द्विश्रुतिः षड्जो द्विधा विकृतो** भवतीति **च्युतश्चाच्युत**श्चेत्युच्यते । [4]तत्र च्युतो यस्यां चतुर्थ्यां श्रुतौ स्थापितः तस्याः सकाशात् प्रच्युतः, अच्युतस्तु तस्यामेव श्रुताववस्थितः पूर्वश्रुतिहीनतया विकृतो भवति । कदा तस्यैवंविधं विकृतत्वम् ?

तदाह––**साधारण** इति । **साधारणे** [5]स्वरसाधारणे; **निषादस्य च काकलीत्वे** उभयविधं विकृतत्वम् ।

'निषादो यदि षड्जस्य श्रुतिमाद्यां समाश्रयेत् ।
ऋषभस्त्वन्तिमां प्रोक्तं षड्जसाधारणं तदा ।।'

(अत्रैव ५ प्र. श्लो. ७)

इति वक्ष्यमाणे [6]षड्जसाधारणे षड्जः स्वस्थानात् चतुर्थश्रुतेः[7] प्रच्युतः तृतीयश्रुता[8]ववस्थितो विकृतो भवति ।

'श्रुतिद्वयं चेत् षड्जस्य निषादः संश्रयेत् तदा ।
स काकली मध्मस्य गांधारस्त्वन्तरः स्वरः ।।'

(अत्रैव ४ प्र. श्लो. १७)

इति वक्ष्यमाणे निषादस्य काकलीत्वे पूर्वश्रुतिद्वयहीनत्वाद् अच्युतः स्वस्थाने चतुर्थश्रुतौ स्थित एव विकृतो भवति ।

[1] प्रतीयन्ते (**य एव** स्वरा इति प्रतीयन्ते) (A). [2] अवस्था विकारं (B). [3] षड्जो द्विद्विर्विकृतो (B). [4] च्युत इति यस्यां चतुर्थ्यां श्रु (B). [5] षड्ज साधारणे (A). [6] स्वरषाड्जसाधा (B). [7] चतुर्थः श्रुतेः (A). [8] वा-स्थितो (A).



ननु––स्वस्थानस्थितस्य पूर्वश्रुतिद्वयहीनत्वेऽपि ध्वनिविकाराभावात्कथं विकृतत्वम् ?––

उच्यते––यद्यपि पूर्वश्रुतिविहीनत्वे तत्स्थानस्थितत्वाद् ध्वनिविकारो नास्ति, तथापि निषादस्य स्वस्थानस्थितत्वे चतुः श्रुतित्वात् [1]षड्जस्य आयतत्वं भवति। यदा काकलीत्वे निषादः षड्जस्य द्वितीयश्रुतौ तिष्ठति, तदा द्विश्रुतित्वाद् अनायतः प्रतीयते । तस्माद् भवत्येव विकृतः ऋषभस्य विकृतत्वं कथयति––साधारण इति । **साधारणे** षड्जसाधारणे, षड्जस्य आन्तिमां श्रुतिमृषभो गृह्णाति, तदा चतुःश्रुतिः सन् विकृतो भवति ।

गांधारस्य द्वौ भेदौ विकृतौ कथयति––**साधारण** इति । **साधारणे** मध्यम[2]साधारणे, मध्यमस्य प्रथमां श्रुतिं गांधारो गृह्णाति । तदा, त्रि[3]श्रुतिर्विकृतो भवति। [4]अन्तरस्तु गांधारो मध्यमस्य आद्यं श्रुतिद्वयं गृह्णाति । तदा चतुः श्रुतिः [5]सन् विकृतो भवति ।। ४२ ।। मध्यमस्य द्वौ विकृतौ भेदौ कथयति––मध्यम इति । षड्जो यथा [6]च्युतत्वेन, अच्युतत्वेन च द्वेधा विकृतः कथितः [7]स्वसाधारणे निषादस्य च काकलीत्वे तद्वत् अमध्यमसाधारणे गांधारस्यान्तरत्वे च मध्यमोऽपि द्वेधा विकृतो भवति ।

'मध्यमस्यापि गपयोरेवं साधारणं मतम् ।'

(अत्रैव ५ प्र. श्लो. ६-) इति,

'. . . . . मध्यमस्य गांधारस्त्वन्तरः स्वरः ।'

(अत्रैव ४ प्र. श्लो. -१७)

इति च मध्यमसाधारणं, गांधारस्यान्तरत्वं च वक्ष्यते ।

पञ्चमस्य द्वेधा विकृतत्वं कथयति––**पञ्चम** इति । पञ्चमे तृतीयश्रुतिसंस्थिते सति **मध्यमग्राम** इति वक्ष्यते । तस्मिन् **मध्यमग्रामे त्रिश्रुतिः पञ्चमो** विकृतो भवति । **पुनश्च कैशिके** मध्यमसाधारणे

[1] षड्जवदायतत्वं (B). [2] साधारणं (A). [3] श्रुतिः सन्विकृतो (B). [4] अन्तरस्वरस्तु (A), (B). [5] विकृतो (A). [6] च्युतत्वेन च (A); च्युताच्युतत्वे च (B). [7] साधारणे (A), (B).

**मध्यमस्य अन्तिमां श्रुतिं प्राप्यः चतुःश्रुतिः** सन् विकृतो भवति ।। ४३ ।। धैवतस्यैकधा[1] विकृतत्वं कथयति––**धैवत** इति । मध्यमग्रामे पञ्चमस्य तृतीयश्रुतावस्थितत्वादन्तिमा पञ्चमस्य श्रुतिर्धैवतं प्रविशति । स तदा **चतुःश्रुति**र्विकृतो भवति ।

निषादस्य द्विधा विकृतत्वं कथयति––**कैशिक** इति । **कैशिके** षड्जसाधारणे निषादः षड्जस्य प्रथमश्रुतौ यदा तिष्ठति, तदा त्रिश्रुतिः सन् विकृतः; यदा तु काकली भवन्षड्जस्य श्रुतिद्वयं गृहीत्वा **चतुः-श्रुति**[2]र्भवति, तदापि विकृतः । एवं **द्वादश** विकृतभेदाः । विकृतानां [4]शुद्धाना[3]मपि एकोनविंशतिर्भेदा भवन्तीत्याह––**तैरिति** ।। ३९-४५- ।।

**मयूरचातकच्छाग[5]क्रौञ्चकोकिलदर्दुराः ।। ४६ ।।**

**गजश्च सप्त षड्जादीन् क्रमादुच्चारयन्त्यमी ।**
**चतुर्विधाः स्वरा वादी [6]संवादी च विवाद्यपि ।। ४७ ।।**

**अनुवादी च वादी तु प्रयोगे बहुलः स्वरः ।**
**श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः ।। ४८ ।।**

**मिथः संवादिनौ तौ स्तो निगा[7]वन्यविवादिनौ ।**
**रिधयोरेव वा स्यातां तौ तयोर्वा रिधावपि ।। ४९ ।।**

**शेषाणामनुवादित्वं वादी राजात्र गीयते ।**
**संवादी त्वनुसारित्वादस्यामात्योऽभिधीयते ।। ५० ।।**

**विवादी विपरीतत्वाद्धीरैरुक्तो रिपूपमः ।**

[1] स्यैकया (B). [2] प्रथमश्रुतिद्वयं (B). [3] सन्विकृतो भवति । (B). [4] मथैक्य एकोनविंशति भेदा (B). [5] घ. ङ. क्रोञ्च fn. 1 ed. [6] ङ. संवाद्यथ वि fn. 1 ed. [7] वस्य वि (D).



**नृपामात्यानुसारित्वादनुवादी तु भृत्यवत्* ।। ५१ ।।**

(क०) लोकतोऽपि षड्जादिस्वरूपपरिज्ञानाय मयूरादि-प्राणिविशेषध्वनिं निदर्शनाभिप्रायेणाह––**मयूरेति ।** स्वराणा-मन्योऽन्यं स्वरूपकृतं भेदमुक्त्वा प्रसङ्गात् प्रयोगार्थं प्रकारभेदेन तेषां चातुर्विध्यं दर्शयति––**चतुर्विधा** इति । वदनाद् **वादी ।** ननु––वदनादिकं प्राणिधर्मः कथम् अचेतनानां स्वराणां संभवति? सत्यम्––वदनं हि नाम रागप्रतिपादकत्वं विवक्षितम्, **न** वचनमित्य-दोषः । संवदनात् **संवादी**; संवदनं नाम यद्वादिना स्वरेण रागस्य रागत्वं जनितं, तन्निर्वाहकत्वम् । विवदनाद् **विवादी**; विवदनं नाम वाद्यादिभिः स्वरैरुत्पाद्यमानाया रक्तेर्विनाशकत्वम् । अनु-वदनाद् **अनुवादी**; अनुवदनं नाम वादिसंवादिसंपादितरक्त्यनु-कूलत्वम् ।

क्रमेण तान् लक्षयति––**वादी त्वित्यादिना** । **प्रयोगे**; जात्यादौ, **बहुलः** ग्रहत्वन्यासत्वादिभेदेन पुनः पुनरावृत्तः । संवादिलक्षणपरिज्ञानार्थम् आदौ मण्डलप्रस्तारं, वीणाप्रस्तारं वा लिखेत् ।

तत्र मण्डलप्रस्तारो यथा––षडूर्ध्वरेखाः लिखित्वा, तदूर्ध्वाधः किंचिदग्राण्यवशेष्य, मध्ये पञ्च तिर्यग्रेखाः किंचिदग्रावशेषं

* एतच्छ्लोकादनन्तरं "वादिमण्डलयोर्लक्षणो यथा––

यत्रोर्ध्वं तिर्यगष्टौ च सप्तरेखाः क्रमाल्लिखेत् ।
तासु प्रान्तेषु कोष्ठेषु लेख्या वाद्यादयः स्वराः ।।

वाद्यादि संनिधिं प्राप्ता ग्रामयोश्च यथा श्रुतिः ।
तदुवाचेति निःशङ्करामो वाद्यादिमण्डलम् ।। इति श्लोकद्वयं वर्तते ।

लिखेत्। तदा परितो रेखाग्राणि द्वाविंशतिर्भवन्ति। वीणाप्रस्तारस्तु—तिर्यग्रेखा एव द्वाविंशतिं लिखेत्। तत्र वामतो दक्षिणतो वा रेखाग्राणि द्वाविंशतिर्भवन्ति। तत्रैकस्मिन् श्रुतिमण्डले [1]शुद्धान्, विकृतान् वा षड्जादीन् स्वस्वश्रुतिसंख्यया विलिखेत्। तेषु **ययोः** स्वरयोः **अन्तरगोचराः** स्वाधारश्रुतीः विहाय, मध्यवर्तिन्यः **श्रुतयो द्वादशाष्टौ वा** दृश्यन्ते। **तौ**[2] **मिथः संवादिनौ** भवत इति ज्ञातव्यम्। **निगावन्यविवादिनाविति**—अन्येषां पञ्चानां विवादिनौ विरोधिनौ।

ननु—निगयोः इतरान् पञ्चापि स्वरान् प्रति विवादित्वमुक्तम्; तदनुपपन्नम्, शुद्धयोः मध्यमनिषादयोः परस्परं संवादित्वदर्शनादित्यपरितोषेण पक्षान्तरमाह—**रिधयोरेव** वेति। प्रथमम् अन्यविवादिनाविति अविशेण कथनं तु समश्रुतिकयोरेव संवाद इति मतानुसारेण। अतो द्वादशाष्टश्रुत्यन्तरितत्वमात्रमेव संवादिलक्षणमिति सिद्धं भवति। **तौ तयोर्वेति। तौ,** रिधौ, **तयोः,** निगयोः विवादिनौ स्तः। एतेन एकश्रुत्यन्तरितौ परस्परं विवादिनाविति लक्षणं सूचितं भवति। "द्व्यन्तरत्वाद्विवादित्वमुक्तम्" इति **मतङ्गो**क्तस्यापि द्वयोः एकस्वराधारश्रुत्या सह द्व्यन्तरत्वस्य विवक्षितत्वात् एकश्रुत्यन्तरितत्वमेवार्थः। एवम् "त्रयोदशनवान्तरम्" इति **मतङ्गो**[3]क्तस्य संवादिलक्षणस्यापि द्वादशाष्टान्तरत्वमेवार्थः। अतः शुद्धावस्थायां रिगयोः धन्योश्च यथा परस्परं

[1] रेखाग्रेषु शुद्धत्वे विकृतत्वे वा 1 ed. [2] तदा **तौ** 1 ed. [3] क्तस्यापि द्वयोरेकस्वराधारश्रुत्या संवादि 1 ed.



विवादः, तथा विकृतावस्थायां गमयोः निधयोश्च विवादो द्रष्टव्यः। अयमभिप्रायः—वादिसंवाद्यनुवादिनां [1]परस्परं स्थानव्यत्ययेन प्रयोगेऽपि जातिरागहानिर्न भवति; विवादिनस्तु प्रयोगे जातिरागहानिर्भवेदिति। **शेषाणां** वाद्यादिलक्षणरहितानाम्। अथ प्रयोगे वाद्यादीनां प्रधानोपसर्जनभावेन तारतम्यं सदृष्टान्तं दर्शयति—**वादी राजेत्यादिना**॥ -४६-५१॥

(सु०) एतेषां स्वराणां स्वरूपज्ञानार्थम् असाधारणानुच्चारयितॄन् कथयति—**मयूरेति। मयूरः** षड्जमुच्चारयति, **चातकः** ऋषभम्, **छागः** गांधारम्, [2]**क्रौञ्चः** मध्यमम्, **कोकिलः** पञ्चमम्, **दर्दुरः** धैवतम्, **गजः** निषादमिति।

स्वराणां चातुर्विध्यं कथयति—**चतुर्विधा** इति। वादिनो लक्षणं कथयति—**वादी त्विति**। **प्रयोगे** जातिरागादौ [3]**बहुलः**; बाहुल्येन य उच्चार्यते सः, अंशस्वरापरपर्यायो **वादी**। ननु—वदतीति वादी; वदनं च प्राणिधर्मः, कथमचेतनानां स्वराणां संभवति? सत्यम्—वदनं हि नामात्र रागप्रतिपादकत्वं विवक्षितम्; ततश्च [4]रागाणां रागत्वं वदन्ति प्रतिपादयन्तीति वादिनः।

संवादिलक्षणं कथयति—**श्रुतय** इति। **द्वादशाष्टौ** [5]**वा श्रुतयो** [6]**ययोरन्तरे** वर्तन्ते **तौ, मिथः** परस्परं संवादिनौ भवतः। ननु—**मतङ्गेन** त्रयोदशनवश्रुत्यन्तरत्वेन संवादित्वमुक्तम्; यदाह—"संवादिनस्तु पुनः समश्रुतिकत्वे सति त्रयोदशनवान्त[7]रत्वे वान्यो अन्यं बोद्धव्याः" इति। **दत्तिले**नाप्युक्तम्—

[1] परस्परस्थान (C). [2] चक्रवाको (B). [3] **च बहुलः** (B). [4] रागं स्वरागं वदन्ति (A). [5] भवति तदा **श्रुत** (B). [6] यथोत्तरं (A). [7] रत्वे चान्योऽन्यं बोद्धव्यम् (A); रत्वेनावबोद्धव्याः (ब).

"मिथः संवादिनौ ज्ञेयौ त्रयोदशनवान्तरौ ।"

इति; तत्कथमुच्यते 'श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः' इति?

उच्यते––ययोः श्रुत्योः स्वराववस्थितौ ते श्रुती विहाय मध्यस्थाः श्रुतयो द्वादशाष्टौ वा [1]यदि भवन्ति, तदा तयोः संवादित्वमित्यनेनाभिप्रायेणैवमुक्तम् । **मतङ्गादिभिस्तु**—यो यस्य संवादी, तस्यावस्थानश्रुतिमपि मध्ये गणयित्वा त्रयोदशनवान्तरत्वमुक्तमिति न कश्चिद्विसंवादः । ततः षड्जस्य मध्यमपञ्चमौ संवादिनौ, ऋषभस्य धैवतः, गांधारस्य निषादः, मध्यमस्य षड्जः, पञ्चमस्य षड्जः, धैवतस्यर्षभः, निषादस्य गांधार इति ।

ननु––संवादित्वेन क[2] उपयोगः? ब्रूमः––यस्मिन् [3]गीते यः अंशत्वेन परिकल्पितः [4]षड्जः, तस्य स्थाने मध्यमः क्रियमाणो [5]जातिरागनाशको न भवति; यस्मिन् [6]वा अंशत्वेन मूर्च्छनावशान्मध्यमः प्रयुक्तः, [7]तस्य स्थाने षड्जः प्रयुज्यमानो जातिरागनाशको न भवति; षड्जपञ्चमयोः स्थाने पञ्चमषड्जौ प्रयुज्यमानौ जातिरागहानिकरौ न भवतः; एवम् ऋषभधैवतयोः स्थाने धैवतर्षभौ प्रयुज्यमानौ जातिरागविनाशकरौ न भवतः; गांधारनिषादयोः स्थाने निषादगांधारौ प्रयुज्यमानौ जातिरागहानिं न कुरुत इति ।

अथ विवादिलक्षणमाह––**निगाविति** । निषादगांधारौ अन्येषां सर्वेषां स्वराणां विवादिनौ । पक्षान्तरमाह––**रिधयोरिति** । **तौ**, निषादगांधारौ ऋषभधैवतयोरेव विवादिनाविति । तृतीयं पक्षमाह––**तयोरिति** । **तयोः** निषादगांधारयोः ऋषभधैवतौ विवादिनाविति । **मतङ्गेन** तु––

[1] यद्यन्तरा संभवन्ति तदा (B). [2] कुत्र (B). [3] रागे अंशत्वेन (B). [4] षड्जः तत्स्थाने (A); षड्जश्रितस्थाने (B). [5] रागहा न भवेत् (A). [6] वा आस्थाने मूर्च्छना (A); स्थाने मूर्च्छना (B). [7] तत्स्थाने (A); तस्मिन् स्थाने (B).



द्विश्रुत्यन्तरितत्वेन विवादित्वमुक्तम्; यदाह 'द्व्यन्तरौ तु स्वरौ विवादिनौ' इति । ननु––किमिदं विवादित्वम्? ब्रूमः––'वाद्यादिभिः स्वरैः यद्रागस्य वादित्वं संवादित्वमनुवादित्वं वा[1] प्राप्तं तद्विनाशकत्वं नाम विवादित्वम्' । ततश्च ऋषभस्थाने यदा गांधारः प्रयुज्यते गांधारस्थाने वा ऋषभः तदा जातिरागहानिर्भवति । अनुवादिलक्षणं कथयति––**शेषाणामिति** । येषां परस्परं संवादित्वं, विवादित्वं वा[2] नास्ति तेषामनुवादित्वम् ।

**मतङ्गेन** तु––"एकश्रुत्यन्तरहीनत्वेन अनुवादित्वमुक्तम् । ननु––अनुवादिस्वरः किमनुवदति? यत् संवादिना रागस्य रागत्वं [3]संपादितं, तत्प्रतिपादकत्वं नाम अनुवादित्वम् । ततश्च षड्जस्था ऋषभः प्रयुज्यमानः, ऋषभस्थाने च षड्जः प्रयुज्यमानो जातिरागविनाशकरो न भवति; पञ्चमस्थाने धैवतः प्रयुज्यमानः धैवतस्थाने च पञ्चमः प्रयुज्यमानः जातिरा[4]गविनाशकरो न भवति; षड्जस्थाने [5]धैवतः प्रयुज्यमानः[6], धैवतस्थाने च षड्जः प्रयुज्यमानः जातिरागविनाशकरो न भवति; तथा पञ्चमस्थाने ऋषभः प्रयुज्यमानः, ऋषभस्थाने च पञ्चमः प्रयुज्यमानः, [7]जातिरागविनाशकरो न भवति; [8]मध्यमस्थान ऋषभः, ऋषभस्थाने च मध्यमः, तथा धैवतस्थाने मध्यमः, मध्यमस्थाने च धैवतः प्रयुज्यमानः जातिरागनाशकरो न भवतीति । ऋषभगांधारयोश्च एकश्रुत्यन्तरहीनत्वेन अनुवादित्वे प्राप्ते द्व्यन्तरत्वाद् विवादित्वम् । एवं षड्जग्रामे वादिसंवादिविवाद्यनुवादिविचारः । एवमेव मध्यमग्रामेऽपि पञ्चमस्य तृतीयश्रुत्यवस्थितत्वात् क्वचिद्विकृतः, अयमेव विचारो बोद्धव्यः ।

तत्र षड्जस्य संवादी मध्यमः[9]; ऋषभस्य धैवतपञ्चमौ; गांधारस्य निषादः; मध्यमस्य [10]षड्जनिषादौ; पञ्चमस्यर्षभः; धैवत-

[1] च (A). [2] च (A). [3] संवादितं (A). [4] रागौ न नाशयति (A); रागौ न नाशयतः (B). [5] धैवतोऽपि (A), (B). [6] मानस्तथा । पञ्चमस्थान (B). [7] जाति रागौ न नाशयति (A), (B). [8] तथा मध्यम (B). [9] वादी मध्यमः (A); संवादिनौ मध्यमपञ्चमौ (B). [10] षड्जः (A).

स्यर्षभः; निषादस्य [1]गांधारमध्यमाविति । विवादित्वं ग्रामद्वयेऽपि समानमेव । षड्जस्य पञ्चमधैवतर्षभा अनुवादिनः; **ऋषभस्य** षड्जमध्यमौ; गांधारनिषादयोः सर्वविवादित्वाद् अनुवादित्वं[2] नास्ति; मध्यमस्यर्षभधैवतौ[3]; पञ्चमस्य मध्यमधैवतौ; धैवतस्य मध्यमपञ्चमाविति ज्ञातव्यम् । एतेषां वाद्यादीनां प्रधानगुणभावमाह—**वादी राजेति** । यथा राजा मुख्यः तथा वादी, अन्येषां [4]तदनुसारित्वात् । **संवादी** तु अस्य वादिनः प्रधानपुरुषतुल्यः; कुतः? **अनुसारित्वात्** सहवृत्तेः, अत एव अमा सह वसतीत्य**मात्य** इति अमात्यशब्देना**भिधीयते** । **विवादी** तु रिपुतुल्यो **विपरीतत्वात्**; अननुसारित्वादित्यर्थः । **अनुवादी** सेवकवत्; नृपो वादी, अमात्यः, संवादी, तदनुसारित्वात् । भृत्योऽपि उभयानुसारी भवति ॥ -४६-५१ ॥

**गीर्वाणकुलसंभूताः षड्जगांधारमध्यमाः ।**
**पञ्चमः पितृवंशोत्थो रिधावृषिकुलोद्भवौ ॥ ५२ ॥**

**निषादो ऽसुरवंशोत्थो ब्राह्मणाः समपञ्चमाः ।**
**रिधौ तु क्षत्रियौ ज्ञेयौ वैश्यजाती निगौ मतौ ॥ ५३ ॥**

**शूद्रावन्तरकाकल्यौ स्वरौ वर्णास्त्विमे क्रमात् ।**
**पद्माभः पिञ्जरः स्वर्णवर्णः कुन्दप्रभो[5]ऽसितः ॥ ५४ ॥**

**पीतः कर्बुर इत्येषां जन्मभूमीरथ[6] ब्रुवे ।**
**जम्बूशाककुशक्रौञ्चशाल्मलीश्वेतनामसु ॥ ५५ ॥**

**द्वीपेषु पुष्करे [7]चैते जाताः षड्जादयः क्रमात् ।**
**वह्निर्वेधाः शशाङ्कश्च लक्ष्मीकान्तश्च नारदः ॥ ५६ ॥**

[1] गान्धारः (A). [2] अनुवादी (A), (B). [3] षड्जर्षभधैवताः (A), (B). [4] तु तदनु (B). [5] हरित् (D). [6] भूमिमथ (D). [7] वै ते 1 ed.



**ऋषयो ददृशुः पञ्च षड्जादींस्तुम्बुरुर्धनी ।**
**वह्निब्रह्मसरस्वत्यः [1]शर्वश्रीशगणेश्वराः ॥ ५७ ॥**

**सहस्रांशुरिति प्रोक्ताः क्रमात् षड्जादिदेवताः ।**
**क्रमादनुष्टुब् गायत्री त्रिष्टुप् च बृहती ततः ॥ ५८ ॥**

**पङ्क्तिरुष्णिक् च जगतीत्याहुश्छन्दांसि सादिषु[2] ।**
**सरी वीरे ऽद्भुते रौद्रे धो बीभत्से भयानके ॥ ५९ ॥**

**कार्यौ गनी तु करुणे हास्यशृङ्गारयोर्मपौ ।**

(क०) ज्ञात्वा प्रयोगेऽदृष्टातिशयोऽप्यस्तीति स्वराणां कुलादीन्युद्देशक्रमेणाह—**गीर्वाणकुले**त्यादिना ॥ ५२-६०- ॥

**इति श्रीचतुरकल्लिनाथविरचितायां संगीतरत्नाकरव्याख्यायां कलानिधौ नादस्थानश्रुतिस्वरजातिकुलदैवतर्षिच्छन्दोरसप्रकरणं तृतीयम् ॥ ३ ॥**

(सु०) इदानीं षड्जादीनां स्वराणां कुलानि कथयति—**गीर्वाणेति** । **षड्जगांधारमध्यमास्त्रयः** [3]सुरवंशसमुत्पन्नाः; **पञ्चमः** पितृवंशोद्भवः; **ऋषभधैवतौ ऋषिवंशोद्भवौ; निषादोऽसुरवंश्यः** । इदानीं ब्राह्मणत्वादिवर्णविशेषं कथयति—**ब्राह्मणा इति** । षड्जमध्यमपञ्चमाः **ब्राह्मणाः**; ऋषभधैवतौ **क्षत्रियौ**; निषादगांधारौ **वैश्यौ; अन्तरकाकल्यौ शूद्रौ** । तयोस्तु लक्षणं मूर्च्छनाप्रकरणे वक्ष्यति ॥ ५१-५४- ॥

अधुना तु सितादिवर्णविशेषं कथयति—**पद्माभ** इति । **पद्माभः** रक्तवर्णः षड्जः; ऋषभस्तु **पिञ्जर** ईषत्पीतवर्णः; गांधारः **स्वर्णवर्णः** अतिपीतवर्णः; मध्यमः **कुन्दवर्णः** शुभ्रः; पञ्चमोऽ**सितः कृष्णवर्णः**; धैवतः **पीतवर्णः**; निषादः **कर्बुरो** विचित्रवर्णः । अधुना अमूनां स्वराणां

[1] श्रीशशर्व 1 ed. [2] जगत्याहुश्छन्दांसि सरिगादिषु (D). [3] देववंशे (A).

जन्मभूमीः प्रतिज्ञाय कथयति––**एषां जन्मभूमीरिति**। **जम्बूद्वीपे** षड्जस्योत्पत्तिः; **शाकद्वीपे** ऋषभस्य; **कुशद्वीपे** गांधारस्य; **क्रौञ्चद्वीपे** मध्यमस्य; [1]शाल्मलीद्वीपे पञ्चमस्य; **श्वेतद्वीपे** धैवतस्य; **पुष्करद्वीपे** निषादस्य।

ननु––इदं द्वीपोत्पत्तिकथनं कुत्रोपयुज्यते? स्वराणां सप्तत्वनिश्चय इति ब्रूमः। तथा चोक्तं **मतङ्गेन**––"ननु कथं सप्त स्वरा इति नियमः? उच्यते––यथा सप्तधात्वाश्रितत्वेन सप्तैव धातवो रसादयो ज्ञेयाः; तथा चाह सुश्रुतः––

"त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लानि[2] धातवः। इति;

तथा सप्तचक्राश्रितत्वेन सप्त[3]द्वीपाश्रितत्वेन वा सप्तैव स्वराः" इति।

ननु––काकल्यन्तरयोरपि स्वरान्तरयोः सद्भावात् कथं, सप्तैव स्वरा इति नियमः सिध्यति? नव स्वरा इति हि वक्तव्यम्; मैवम्; अनंशत्वादनयोः स्वरान्तरत्वं नास्ति; विकृतनिषादस्यैव काकलीत्वं, विकृतगांधारस्यैवान्तरत्वम्। तथा चोक्तां **दत्तिलेन**––

"निषादः काकलीसंज्ञो द्विश्रुत्युत्कर्षणाद् भवेत्।
गांधारस्तद्वदेव[4] स्यादन्तरस्वरसंज्ञितः[5] ॥
अनंशत्वात्तु[6] भेदेन स्वरत्वं[7] नोच्यते तयोः।
अतो निषादगांधारावेतावाद्यैरुदाहृतौ[8] ॥"

इति।

[1] शाल्मल (A). [2] शुक्राणि (B). [3] द्वीपाश्रयादिति (B); स्थाने (A).
[4] द्वदैव (A). [5] संज्ञकः (A). [6] त्वाच्च (B). [7] स्वरता (A).
[8] वाप्तैरुदाहृतौ (A).



अथ स्वराणां द्रष्टॄन् ऋषीन् कथयति––**वह्निरिति**। षड्जस्य ऋषिः, **वह्निः**; ऋषभस्य **ब्रह्मा**; गांधारस्य **चन्द्रः**; मध्यमस्य **विष्णुः**; पञ्चमस्य **नारदः**; धैवतनिषादयोः **तुम्बुरुः**। देवताः कथयति––**वह्नीति**––। **छन्दांसि** कथयति––**क्रमादनुष्टुबिति**। ननु––स्वराणाम् **'पद्माभः'** इत्यादि वर्णनिरूपणम्, ऋषिदैवतच्छन्दोनिरूपणं च कुत्रोपयुज्यते? स्वरोपासनायामित्यवेहि। यदा [1]स्वराणां बीजैः, षड्जादयः स्वरा उपास्यन्ते, तदा तेषाम् ऋषिदेवताच्छन्दांसि स्मर्तव्यानि वर्णाश्च ध्येयाः। अत एव स्वराणां बीजान्युक्तानि[2] **मतङ्गेन**। यथा––

"वर्गाष्टकं तु संप्राप्य अकारादि यशान्तकम्।
वर्णमाल[3]समायुक्तमुद्धरेत् स्वरसप्तकम् ॥
अष्टमस्य तृतीयं तु हरिबीजसमन्वितम्।
[4]आद्यं स्वरं स्वरज्ञस्तु उद्धरेत् स[5] प्रयत्नतः ॥
सप्तमस्य द्वितीयं तु कामबीजसमन्वितम्[6]।
द्वितीयं तु स्वरं विद्धि ब्रह्मस्थानसमुद्भवम् ॥
[7]उद्धरेत्तु स्वरं नित्यं [8]सौरभेयं मनोहरम्।
द्वितीयस्य तृतीयं तु हरिबीजसमन्वितम्।
समुद्धरेत् तृतीयं तं सरसं स्वरमुत्तमम् ॥
षष्ठस्यापि हि वर्गस्य अन्तिमं चादिसंयुतम्।
अविनष्टं विजानीयान्मध्यम[9]स्वरमुत्तमम् ॥
तदादि[10] प्रथमोपेतं स्वरं संविद्धि शोभनम्।
व्योमसंख्यासमायुक्तमोष्ठस्थानसमुद्भवम् ॥

[1] षड्जादि (B). [2] बीजानीत्युक्तं (B). [3] मात्रां (A), (B).
[4] आद्यस्वरं (A), (B). [5] उद्धरेत्तु (A), (B). [6] बीजेन संयुतम् (A), (B).
[7] उद्धरेच्च (बृ). [8] स्वरभेद् (बृ). [9] न्मध्यमं (B). [10] तदा हि (A); तदापि (B), तथादि (बृ).

पञ्चमस्यापि[1] वर्गस्य [2]चतुर्थं [3]चादिभूषितम् ।
[4]कोदण्डद्वयसंभूत[5]मुद्धरेत् स्वरमुत्तमम् ।।
अकारान्तान्तसंभिन्नं[6] पञ्चमान्तं समुद्धरेत् ।
ब्रह्मस्थानसमुद्भूतं सुतार[7]ध्वनिसंयुतम् ।।
आगमस्थः स्वरोद्धार एवं [8]तावत् प्रदर्शितः ।"

इति ।। ५९- ।। अथ स्वराणां रसव्यञ्जक[9]नियममाह—सरी इति । षड्जर्षभौ वीराद्भूतरौद्रेषु; धैवतो बीभत्सभयानकयोः; गांधारनिषादौ करुणे; मध्यमपञ्चमौ हास्यशृङ्गारयोरिति ।। ५६-५९- ।।

**इति श्रीसिंहभूपालविरचितायां संगीतरत्नाकरव्याख्यायां नादस्थानश्रुतिस्वरजातिकुलदैवतर्षिच्छन्दोरस-प्रकरणं तृतीयम्**

---

[1] मस्य च (A). [2] चतुर्थादियुतं ततः (B). [3] चापिभू (A), (B), चादि संयुतम् (बृ). [4] चतुर्थान्तमिकारान्तं कोदण्डद्वयसंयुतं (B). [5] मुद्धारस्वर (A). [6] अकारान्तं च (A), (B). [7] सुरतं (A). [8] सादिप्रदर्शयेत् (B). [9] व्यञ्जन (A), (B).

## ४. ग्राम-मूर्छना-क्रम-तान-प्रकरणम्

**ग्रामः स्वरसमूहः स्यान्मूर्च्छनादेः[1] समाश्रयः ।**
**तौ द्वौ धरातले तत्र स्यात् षड्जग्राम आदिमः ।। १ ।।**
**द्वितीयो मध्यमग्रामस्तयोर्लक्षणमुच्यते ।**
**षड्जग्रामः पञ्चमे स्वचतुर्थश्रुतिसंस्थिते[2] ।। २ ।।**
**स्वोपान्त्यश्रुतिसंस्थे ऽस्मिन् मध्यमग्राम इष्यते ।**
**यद्वा धस्त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ।। ३ ।।**
**रिमयोः श्रुतिमेकैकां गांधारश्चेत् समाश्रितः ।**
**पश्रुतिं धो निषादस्तु धश्रुतिं सश्रुतिं श्रितः ।। ४ ।।**
**गांधारग्राममाचष्टे[3] तदा तं नारदो मुनिः ।**
**प्रवर्तते स्वर्गलोके ग्रामो ऽसौ न महीतले ।। ५ ।।**

(क०) एवं स्वरान् निरूप्य व्यस्तानां तेषां दृष्टादृष्टफलोपयोगित्वं नास्तीति तत्सिद्धये नियतसमस्तस्वरसंनिवेशरूपान् मूर्च्छनादीन् निरूपयिष्यन् तदाश्रयत्वाद् व्यवस्थापकत्वाच्च ग्रामयोः प्रसक्तयोः तत्सामान्यलक्षणं तावदाह—**ग्राम** इति । ग्रामवद् ग्रामः । यथा लोके जनसमूहो ग्राम इत्युच्यते, एवमत्र **स्वरसमूहो ग्राम** इति विवक्षितः । स्वरसमूहो ग्राम इत्येतावत्युच्यमाने लौकिकवैदिकवाक्येष्वपि स्वरसमूहत्व[4]संभवात् तत्रातिव्याप्तिः

[1] न्मूच्छनादि (D). [2] स्थितः (D). [3] चष्ट (D). [4] समूहस्य 1 ed.

स्याल्लक्षणस्य। तद्व्यावृत्त्यर्थं **मूर्च्छनादेः समाश्रय** इति विशेषणम्। अत्रादिशब्देन क्रमतानवर्णालंकारजात्यादयो गृह्यन्ते । सामान्यलक्षणे ग्राम इति जातावेकत्वनिर्देशाद् अविशेषण सप्तानामपि स्वराणां ग्रामविशेषणत्वे प्राप्ते, त्रयाणामेव तद्विशेषणत्वमवगमयन् ग्रामविशेषलक्षणानि लोकव्यवस्थापूर्वकमाह—**तौ द्वावित्यादिना**।

ननु—समूहित्वाविशेषेण सप्तानामपि ग्रामव्यपदेशकत्वसंभवे कथं **धरातले द्वा**वित्यवधारणमिति चेत्, तत्रोच्यते—शुद्धविकृतरूपेण द्विविधस्वरप्रयोगवशात् ।

"द्वौ ग्रामौ विश्रुतौ लोके षड्जमध्यमसंज्ञकौ[1] ।। ९३- ।।

इति **मुनिवचनाच्च** शुद्धाश्रयत्वात् षड्जग्राम आदिमो विकृताश्रयत्वाद् **द्वितीयो मध्यमग्राम** इत्युपपद्यत इति । **स्वचतुर्थश्रुतिसंस्थित** इति । स्वकीयचतुर्थश्रुतौ करुणाजातिभेद आलापिन्याम् आदितः सप्तदश्यां स्थिते सति षड्जग्रामः । **स्वोपान्त्यश्रुतिसंस्थ** इति । स्वोपान्त्यश्रुतौ आयताभेदे संदीपन्यां षोडश्यां संतिष्ठत इति संस्थः, तस्मिन् । अत्र चतुर्थश्रुतिसंस्थित इत्युपान्त्यश्रुतिसंस्थ इति चैतावत्युक्ते, मध्यमग्रामे मध्यमसाधारणे पञ्चमस्य चतुःश्रुतिकत्वेन [2]स्वतृतीयश्रुतिसंस्थस्यापि मध्यमान्तिमश्रुतिसाहित्येन चतुर्थश्रुतिसंस्थत्वम्, तस्यामवस्थायां स्वद्वितीयश्रुतेः उपान्त्यत्वेन उपान्त्यश्रुतिसंस्थत्वं च संभवतीति तन्निवृत्त्यर्थमुभयत्र **स्व**शब्दोपादानं कृतम्, तयोः तृतीयद्वितीययोः श्रुत्योः स्वकीयत्वेन रूपेण चतुर्थत्वोपान्त्यत्वाभावात् । **यद्वेति**

[1] संज्ञितौ (बृ). [2] स्वकीयश्रु[?] (D).



अभ्युच्चयपक्षः । कुतः? पञ्चमभेदायत्तत्वेन ग्रामभेदे सिद्धे ग्रामभेदाश्रयणेन धैवतभेदकथनात्, धैवतस्य पञ्चमसंनिधानं विना स्वगतभेदाप्रतीतेः स्वतो ग्रामभेदकत्वाभावाच्च । भेदकत्वकथनं तु धैवतः पञ्चमान्त्यश्रुतिलाभात् चतुःश्रुतिर्विकृतः सन् तदलाभे शुद्धश्च सन् साक्षाल्लक्षणस्य पञ्चमस्य क्रमात् त्रिश्रुतित्वं चतुःश्रुतित्वं चावगमयन् ग्रामयोरुपलक्षणं भवतीति ।। १-५ ।।

(सु०) ग्रामनिरूपणार्थमाह—**ग्रामः स्वरसमूह** इति । स्वराणां समूहः ग्रामशब्देनोच्यते । ननु—कथं स्वरसमूहस्य ग्रामशब्दवाच्यत्वम्? उच्यते—यतो **मूर्च्छनादेः समाश्रय**भूतः, अतः **स्वरसमूहो ग्रामः**। लोकाश्रयभूतो हि ग्राम इत्युच्यते । तदुक्तं **मतङ्गेन**—

"यथा कुटुम्बिनः सर्वे एकीभूता वसन्ति हि ।
[1]सर्वलोकस्य स ग्रामो यत्र नित्यं व्यवस्थितिः[2] ।। ९० ।।"

इति । अथवा स्वरसमूहस्य ग्रामत्वेऽव्यवस्थया उच्चारितस्यापि, स्वरसमूहस्य ग्रामत्वं स्यात्, तन्निवृत्त्यर्थमुक्तं **मूर्च्छनादेः समाश्रय**[3] इति । यस्तु मूर्च्छनादीनामाश्रयः स्वरसमूहः, स एव ग्रामशब्देनोच्यते, नाव्यवस्थया उच्चारितः स्वरसमूह इत्यर्थः । तथा चोक्तं **संगीतसमयसारकारेण**—

"स्वराणां मूर्च्छनातानजातिजात्यंशकात्मनाम् ।
व्यवस्थितश्रुतीनां[4] हि समूहो ग्राम इष्यते ।।"

इति । तस्य भेदावाह—**तौ द्वाविति** । ननु—त्रयो ग्रामा इति प्रसिद्धिः; कथं द्वावित्युच्यते? अत आह—**धरातल** इति । तत्र [5]तयोर्मध्ये **षड्जग्राम आदिमो** मुख्यः । **द्वितीयो मध्यमग्रामः**। अत एव **मतङ्गेनोक्तम्**—

[1] सर्वलोकेषु (बृ). [2] व्यवस्थिक्षः (बृ). [3] मूर्च्छनातानादीनां समाश्रयः स्वरसमूहः (B). [4] स्थितः श्रुती (A). [5] ग्रामत्रयमध्ये (B).

"उभयोर्ग्रामयोर्मध्ये मुख्यत्वं कस्य गण्यते ।
[1]षड्जस्यैव हि मुख्यत्वं [2]गण्यते वचनान्मुनेः[3]" ।।

इति । तयोर्लक्षणं प्रतिज्ञाय कथयति—**तयोरिति ।** पञ्चमे स्वरे स्वकीया या चतुर्थी श्रुतिः यस्यामसौ स्थापितः तत्स्थेऽविकृते षड्जग्रामः । यद्यपि षड्जग्रामे अन्येषामपि षड्जादिनां स्वराणामविकृतत्वम्, तथापि पञ्चमस्यैवाविकृतत्वकथनं मध्यमग्रामे पञ्चमस्य विकृतत्वात् तद्वैलक्षण्यप्रतिपादनार्थम् ।

मध्यमग्रामलक्षणं कथयति—**स्वोपान्त्येति ।** स्वस्योपान्त्या अन्त्यायाः श्रुतेः समीपे वर्तमाना या तृतीया **श्रुतिः** तत्र **संस्थितेऽस्मिन् पञ्चमे मध्यमग्रामो** भवति । यद्यपि धैवतस्य प्रथमा श्रुतिः पञ्चमस्यान्त्यश्रुतेः समीपवर्तिनी भवति, तथापि सा स्वकीया न भवतीति तन्निवृत्त्यर्थं स्वेत्युक्तम् । इदमेव लक्षणं प्रकारान्तरेण कथयति—**यद्वेति** । **धः** धैवतः **षड्जग्रामे त्रिश्रुतिः, मध्यमग्रामे तु** पञ्चमस्यान्तिमां श्रुतिं लब्ध्वा **चतुःश्रुतिः** । अर्थस्तु स एव । किं तु पूर्वं पञ्चमस्वरप्राधान्येन उभयोर्लक्षणमुक्तम्,, [4]इदं तु धैवतप्राधा[5]न्येन । [6]धैवतप्राधान्यनिरूपणाद् यत्पूर्वोक्तं लक्षणमसंमतमिव भाति तत्परमते, न तु स्वमते । अत एव पञ्चमरहितानां कूटतानानां भेदकपञ्चमाभावादेव पौनरुक्त्यं वक्ष्यति, न धैवताभावेन पौनरुक्त्यमिति ।

गांधारग्रामस्य क्षितितले ऽनुपयोगे ऽपि शास्त्रस्य सर्वविषयत्वात् तल्लक्षणं कथयति—**रिमयोरिति । गांधार** ऋषभस्यान्तिमां श्रुतिं मध्यमस्य चादिमां श्रुति**माश्रितः** सन् चतुःश्रुतिर्भवति । **धैवतस्तु पञ्चमस्यान्तिमां श्रुतिमाश्रयति**[7] । **निषादस्तु** धैवतस्यान्तिमां **श्रुतिं** गृहीत्वा षड्जस्य

[1] षड्जवाहि च मुख्य (बृ). [2] गम्यते (बृ). [3] नात्पुनः (A).
[4] इदानीं (B). [5] न्येन च। (A), न्यनिरूपणं चासंमतम् । परमतत्वेन न तु स्वमतत्वेन. [6] धैवतप्राधान्यनिरूपणं च संमतं परमतत्वेन, न तु स्वमतत्वेन (A).
[7] आश्रितः सन् चतुःश्रुतिर्भवति (B).



चादिमां **श्रुतिं** समाश्रितः सन् चतुःश्रुतिर्भवति । तदा तं गांधारग्रामं **नारदो मुनि**राचष्ट । नारदकथनं प्राशस्त्यार्थम्, न तु स्वमतेऽन्यथात्वप्रकटनार्थम् ।। १-५ ।।

**षड्जः प्रधानमाद्यत्वादमात्याधिक्यतस्तथा ।**
**ग्रामे स्यादविलोपित्वान्मध्यमस्तु पुरःसरः ।। ६ ।।**
**एतत् कुलप्रसूतत्वाद् गांधारो ऽप्यग्रणीर्दिवि ।**
**क्रमाद् ग्रामत्रये देवा ब्रह्मविष्णुमहेश्वराः ।। ७ ।।**
**हेमन्तग्रीष्मवर्षासु गातव्यास्ते[1] यथाक्रमम् ।**
**पूर्वाह्णकाले मध्याह्ने ऽपराह्णे ऽभ्युदयार्थिभिः ।। ८ ।।**

(क०) ननु—स्वरप्रयोगवशादिह द्वावेव ग्रामौ स्याताम्; स्वरान्तरेषु सत्सु किं तयोः षड्जमध्यमविशेषणेनेत्याशङ्क्य तत्रोपपत्तिमाह—**षड्जः प्रधानमिति । अमात्याधिक्यतः**, संवादिस्वरबाहुल्यादित्यर्थः । **ग्रामे प्रधानं स्या**दित्यन्वयः । **अविलोपित्वादिति ।** मध्यमस्याविलोपित्वं च अधस्तनानां सरिगाणाम् उपरितनानां पधनीनां च यथासंख्यं द्वयोर्द्वयोरेकत्र तन्व्यां संवदनं संवाद इति मतानुसारेण एकाकिनो मध्यमस्य अन्येन संवादाभावात्, परिशेषादवधिभूतस्य तस्य लोपो नेष्यत इति केषांचिन्मतम् । अन्येषां तु—शुद्धतानलक्षणावसरे षड्जर्षभनिषादपञ्चमहीनाः चत्वारस्ताना इत्यादिना **भरतादिभिः** मध्यमव्यतिरिक्तानामेव षाडवौडुवकारित्वेन लोपविधानात् मध्यमस्याविनाशित्वमिति ।। ६-८ ।।

(सु०) ननु—कथं षड्जमध्यमगांधाराणामेव ग्रामत्वव्यपदेशः, नान्येषां स्वराणामत आह—**षड्ज** इति । **षड्जः** सर्वेषां स्वराणा**माद्यः**,

[1] °व्यास्तु C. E.

तस्मात् **प्रधानं** मुख्यः। अन्यदपि प्राधान्ये कारणमाह—**अमात्याधिक्यत** इति। अमात्याः संवादिनः, तेषामाधिक्यम् अन्यस्वरापेक्षया। अन्येषां स्वराणामेकैक एव स्वरः संवादी; षड्जस्य तु मध्यमपञ्चमौ द्वौ संवादिनौ। **मध्यमो**ऽपि ग्रामे **पुरःसर आद्यः**; ग्रामव्यपदेश[1]भाग्भवतीति यावत्। कारणमाह—**अविलोपित्वादिति**। षाडवितत्वे औडुवितत्वे च मध्यमस्य लोपो नास्ति। तस्मात् सोऽपि[2] प्रधानम्। एतयोः षड्जमध्यमयोः कुले देवकुल उत्पन्नत्वाद् गान्धारोऽपि स्वर्गलोके स्वराणामग्रणीः आद्यो ग्रामव्यपदेशभाक्। अत एवोक्तं **मतङ्गेन**—"ननु—कथं षड्जमध्यमस्वराभ्यां ग्रामव्यपदेशः? उच्यते—असाधारणत्वेन ताभ्यां ग्रामव्यपदेशः। असाधारणत्वं च देवकुलोत्पन्न[3]त्वेन।" इति। मध्यम**स्याविलो[4]पित्वमु**क्तं **दत्तिलेन**—

'पञ्चमं मध्यमग्रामे षड्जग्रामे तु धैवतम्।
अलोपिनं विजानीयात् सर्वत्रैव तु मध्यमम्॥

इति। ग्रामत्रये ऽप्यधिष्ठातॄन् देवान् कथयति—**क्रमादिति**। गान ऋतुनियमं कथयति—**हेमन्तेति**। ऋतुविशेषेष्वपि[5] पूर्वाह्णादिकालविशेषं गाने[6] नियमयति—**पूर्वाह्णेति**। अभ्युदयार्थिभिरिति फलस्य कथितत्वान्नियमे[7] फलम्, अनिय[8]मे न दोषः। ग्रामनिरूपणप्रयोजनमुक्तं **मतङ्गेन**—"स्वरश्रुतिमूर्च्छनातानजातिरागाणां व्यवस्थापकत्वं नाम प्रयोजनम्" इति॥ ६-८॥

**क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्।**
**मूर्च्छनेत्युच्यते ग्रामद्वये ताः सप्त सप्त च॥ ९॥**

[1] भागीति यावत् (A), (B). [2] तस्मान्मध्यमोपि (B). [3] त्वम्। देवकुलोत्पन्नत्वेन मध्यम षड्जमध्यमयो (B). [4] पित्वात् तथा चोक्तं (B). [5] विशेषमपि (A); विशेषेपि (B). [6] विशेषगानं (A); विशेषेण गानक्रियामाह (B). [7] मेन (B). [8] मेन दोषः इति (A), (B).



**षड्जे तूत्तरमन्द्रादौ रजनी चोत्तरायता।**
**शुद्धषड्जा [1]मत्सरीकृदश्वक्रान्ताभिरुद्गता॥ १०॥**
**मध्यमे स्यात्तु सौवीरी [2]हारिणाश्वा ततः परम्[3]।**
**स्यात् कलोपनता शुद्धमध्या मार्गी च पौरवी॥ ११॥**
**हृष्यकेत्यथ तासां तु लक्षणं प्रतिपाद्यते।**
**मध्यस्थान[4]स्थषड्जेन मूर्च्छनारभ्यते ऽग्रिमा॥ १२॥**

(क०) ग्रामलक्षणे तदाधेयत्वेन प्रथमोपात्तानां मूर्च्छनानां सामान्यलक्षणमाह—**क्रमात् स्वराणामिति**। क्रमादिति कूटतानव्यावृत्त्यर्थम्। सप्तानां स्वराणामिति शुद्धतानव्यावृत्त्यर्थम्। आरोहश्चावरोहणमिति आरोह्यवरोहिद्विविधवर्णालंकारनिवृत्त्यर्थम्। **मूर्च्छनेति**। यया करणभूतया रागो मूर्च्छ्यते व्याप्यत इति, श्रोता मूर्च्छ्यते मोह्यत इति वा 'मुर्छा मोहसमुच्छ्राययोः' इति धातोर्ण्यन्ताद्युचि प्रत्यये [5]मूर्च्छनेति रूपम्। यदि **पुनः मतङ्गनन्दिकेश्वरादिभिः** प्रयोगे स्थानत्रयव्याप्तिसिद्ध्यर्थं लक्ष्यानुरोधेन द्वादशस्वरमूर्च्छना अप्युक्ताः, एवमपि लक्ष्ये प्रायेण ग्रामद्वयसंसृष्टप्रयोगदर्शनात् तेनैव स्थानत्रयव्याप्तिः सेत्स्यतीत्यभिप्रायेण न पृथगुक्ताः। तद्विशेषान् ग्रामद्वयेऽपि व्यवहारार्थं नामतो रूपतश्च संख्यापूर्वकं दर्शयति—**ग्रामद्वय** इत्यादिना। **मूर्च्छनेति** जातिविवक्षयैकत्वे प्रकृतेऽपि **ता** इति बहुवचनेन परामर्शो वक्ष्यमाणतद्विशेषापेक्षयेत्युपपद्यते। **मध्यस्थानस्थषड्जेनाग्रिमा मूर्च्छनोत्तरमन्द्रारभ्यते**। कुतोऽयं नियमः? भरतादिनियमितत्वात्तासाम्।

[1] मत्सरीकृताऽश्वक्रान्ता (सु). [2] हरिणाश्वा (D). [3] परा (D). [4] स्थिते षड्जे (D). [5] मूर्च्छा इति (D).

यथाह **भरतः**––"मध्यमस्वरेण वैणवेन मूर्च्छनानिर्देशः" इति; **मतङ्गोऽपि**––"मध्यसप्तकेन मूर्च्छनानिर्देशः कार्यो मन्द्रतार-सिद्धयर्थम्" इति ।। ६-१२ ।।

(सु०) मूर्च्छनां निरूपयति––**क्रमादिति । सप्तानां स्वराणामारोहश्चावरोहणं च मूर्च्छनेत्युच्यते ।** आरोहावरोहणशब्देन तद्युक्ताः स्वरा उच्यन्ते । ततश्चारूढा अवरूढाश्च क्रमतः सप्त स्वरा मूर्च्छनाशब्दवाच्याः । मूर्च्छनाशब्दव्युत्पत्तिः कथिता **मतङ्गेन**––

"मूर्च्छनाशब्दनिष्पत्तिर्मूर्छा मोहे समुच्छ्रये ।। ६५- ।।
[1]मूर्च्छते येन रागो हि मूर्च्छनेत्यभिसंज्ञिता ।। ६४- ।।"

इति । स्वराणामेव मूर्च्छनात्वम् न त्वारोहणावरोहणरूपायाः क्रियाया इत्यप्युक्तं तेनैव––

"आरोहणावरोहणक्रमेण स्वरसप्तकम् ।। -६४ ।।
मूर्च्छनाशब्दवाच्यं हि विज्ञेयं तद्विचक्षणैः ।। ६५- ।।"

इति । सप्तानां स्वराणामित्युपलक्षणम्, द्वादशस्वराणामपि मूर्च्छनानां **मतङ्गेन** प्रतिपादितत्वात् । तासां भेदान् कथयति––**ग्रामद्वय** इति । षड्जग्रामे **सप्त** मूर्च्छनाः, मध्यमग्रामे च **सप्त** भवन्ति । तासां नामानि कथयति––**षड्ज** इति । षड्जग्रामे प्रथमा मूर्च्छना **उत्तरमन्द्रा,** द्वितीया **रजनी,** तृतीया **उत्तरायता,** चतुर्थी **शुद्धषड्जा,** पञ्चमी **मत्सरीकृता,** षष्ठी **अश्वक्रान्ता,** सप्तमी **अभिरुद्गता । मध्यम**ग्रामे प्रथमा, **सौवीरी,** द्वितीया, [2]**हारिणाश्वा,** तृतीया **कलोपनता,** चतुर्थी **शुद्धमध्या,** पञ्चमी **मार्गी,** षष्ठी **पौरवी,** सप्तमी **हृष्यकेति** ।। ६-१२ ।।

**अधस्तनैर्निषादाद्यैः षडन्या मूर्च्छनाः क्रमात् ।**
**मध्यमध्यममारभ्य सौवीरी मूर्च्छना भवेत् ।। १३ ।।**

[1] मूर्च्छते (बृ). [2] हरिणाश्वा (A).



**षडन्यास्तदधोऽधःस्थस्वरानारभ्य तु क्रमात् ।**
**षड्जस्थानस्थितैर्न्याद्यै रजन्याद्याः परे विदुः[1] ।। १४ ।।**
**हारिणाश्वादिका गाद्यैर्मध्यमस्थानसंस्थितैः[2] ।**

(क०) **अधस्तनैः** मन्द्रस्थानभवैः । **तदधोऽधःस्थस्वरान्,** तस्य **मध्य**स्थानस्थित**मध्यम**स्याधोऽधःस्था गांधारर्षभादयः स्वराः, तान् । **क्रमाद्** अवरोहक्रमेण । लक्ष्यानुरोधेन पक्षान्तरमाह–– **षड्जस्थानस्थितैरि**ति । मध्यस्थानस्थितषड्जस्थानगतैरिति प्रकरणादवगन्तव्यम् । सरिगमपधनीति उत्तरमन्द्रास्वरस्थानेष्वेव निसरिगमपधेति **रजनी**स्वरानुच्चारयेदित्यर्थः ।। **हारिणाश्वादिका** इति । अत्रापि मध्यस्थानस्थित[3]मध्यममारभ्य मपधनिसरिगेति **सौवीरी**स्वरस्थानेष्वेव गमपधनिसरीति **हारिणाश्वा**स्वरानुच्चारयेदित्यर्थः । उभयत्रापि आदिशब्देन षड्जमध्यमस्थानयोरेव तत्तन्मूर्च्छनादिमस्वरारम्भो द्रष्टव्यः ।। -१३-१५- ।।

(सु०) श्रोत्रवधानार्थं वैषम्यद्योतनाय[4] चैतासां लक्षणं प्रतिज्ञाय कथयति––**अथ तासामिति । मध्यस्थानस्थितेन षड्जेनाग्रिमा**षड्जग्रामे प्रथमा **मूर्च्छनोत्तर**मन्द्रा**रभ्यते ।** षड्जमारभ्य सप्तमस्वरपर्यन्तमारोहः, निषादमारभ्य षड्जपर्यन्तं चावरोहः कार्यः । **अन्यास्तु** षड्जन्यादयो **मूर्च्छनाः** तस्मान्मध्यस्थानस्थितात् षड्जादधो ऽपकृष्टस्थाने स्थिता ये मन्द्रनिषादधैवतादयो मन्द्रर्षभपर्यन्ताः **षट् तानारभ्य** कर्तव्याः ।

मध्यमग्राममूर्च्छनां लक्षयति––**मध्यमध्यममिति । मध्य**स्थानस्थितं **मध्यममारभ्य सौवीरी** मध्यमग्रामे प्रथमा **मूर्च्छना** भवेत् । **अन्यास्तु षड्**

[1] ख. जगुः fn. 1 ed. [2] ङ. संश्रितैः fn. 1 ed. [3] स्थानस्थ 1 ed.
[4] द्योतनार्थं (B).

**हरिणाश्वादयः** तस्य मध्यस्थानस्थमध्यमस्या**धोऽधो**ऽपकृष्टे स्थाने स्थिताः **स्वराः,** ये गांधारर्षभादयः मन्द्रपञ्चमपर्यन्ताः, तानारभ्य कर्तव्याः। ततश्चैवं मूर्च्छनास्वरूपं भवति–लिपौ बिन्दुशिरा मन्द्रो ज्ञातव्यः, ऊर्ध्वरेखाशिरास्तु तारः, '**मन्द्रो बिन्दुशिरा भवेत्। ऊर्ध्वरेखाशिरास्तारो लिपौ**' (अत्रैव ६ प्र. श्लो. ८) इति वक्ष्यमाणत्वात्। तत्र तु आरोहक्रम एव लिख्यते। अवरोहक्रमस्तु अन्तिमस्वरात् ज्ञातव्यः।

सरिगमपधनि––**उत्तरमन्द्रा** ॥ १ ॥ निसरिगमपध––**रजनी** ॥ २ ॥ धंनिसरिगमप––**उत्तरायता** ॥ ३ ॥ पंधंनिसरिगम––**शुद्धषड्जा** ॥ ४ ॥ मंपंधंनिसरिग––**मत्सरीकृता** ॥ ५ ॥ गंमंपंधंनिसरि––**अश्वक्रान्ता** ॥ ६ ॥ रिंगंमंपंधंनिस––**अभिरुद्गता** ॥ ७ ॥

मपधनिसरिग––**सौवीरी** ॥ १ ॥ गमपधनिसरि––**हारिणाश्वा** ॥ २ ॥ रिगमपधनिस––**कलोपनता** ॥ ३ ॥ सरिगमपधनि––**शुद्धमध्या** ॥ ४ ॥ उत्तरमन्द्रायां तु पञ्चमश्चतुःश्रुतिः, अस्यां तु त्रिश्रुतिरित्यनयोर्भेदः। निसरिगमपध––**मार्गी** ॥ ५ ॥ अस्या रजन्याश्च पूर्ववत्पञ्चमेन भेदः। धंनिसरिगमप––**पौरवी** ॥ ६ ॥ अस्या उत्तरायतायाश्च पूर्ववत्पञ्चमेन भेदः। पंधंनिसरिगम––**हृष्यका** ॥ ७ ॥ अस्याः शुद्धषड्जायाश्चापि पूर्ववत्पञ्चमेन भेदः।

मतान्तरेणान्यथैतासां लक्षणमाह––**षड्जस्थानेति। निषादाद्यैः** स्वरैः **षड्जस्थानस्थितै रजन्याद्या** भवन्ति। षड्जस्य स्थाने निषादे स्थाप्यमाने **रजनी** ॥ २ ॥ धैवते स्थाप्यमान **उत्तरायता** ॥ ३ ॥ पञ्चमे स्थाप्यमाने **शुद्धषड्जा** ॥ ४ ॥ मध्यमे **मत्सरीकृता** ॥ ५ ॥ गांधारे **ऽश्वक्रान्ता** ॥ ६ ॥ ऋषभे **ऽभिरुद्गता** ॥ ७ ॥ एवं मध्यमस्य स्थाने स्थाप्यमानैर्गांधारा**द्यैर्हारिणाश्वादयो** भवन्ति। मध्यमस्य स्थाने गांधारे स्थाप्यमाने **हारिणाश्वा** ॥ २ ॥ ऋषभे स्थाप्यमाने **कलोपनता** ॥ ३ ॥ षड्जे स्थाप्यमाने **शुद्धमध्या** ॥ ४ ॥ निषादे **मार्गी** ॥ ५ ॥ धैवते **पौरवी** ॥ ६ ॥ पञ्चमे **हृष्यका** ॥ ७ ॥ इति ॥ -१३-१५- ॥



**[1]षड्जादीन् मध्यमादींश्च [2]तदूर्ध्वं सारयेत् क्रमात् ॥१५॥**
**चतुर्धा ताः पृथक् शुद्धाः [3]काकलीकलितास्तथा।**
**सान्तरास्तद्द्वयोपेताः षट्पञ्चाशदितीरिताः[4] ॥ १६ ॥**

(क०) ननु षड्जमध्यमस्थानयोरेव निषादगांधारादिप्रयोगे सति षड्जग्राम उत्तरमन्द्रारजन्यादीनां कथं परस्परं भेदो मध्यमग्रामे च सौवीरीहारिणाश्वादिकानां च कथमन्योन्यं भेद इत्याशङ्क्य परिहरिष्यन्नाह––**षड्जादीन्मध्यमादीं**श्चेति। **तदूर्ध्वमिति**। रजन्यादिकायां षड्जस्थानस्थापितनिषादादेर्हारिणाश्वादिकायां मध्यमस्थानस्थापितगांधारादेश्च परं[5] **षड्जादीन्मध्यमादींश्च** स्वरान् **सारयेत्**; स्वस्वश्रुति[6]संख्यापर्यालोचनया श्रुत्यन्तराणि प्रापयेदित्यर्थः। **क्रमादिति**। उत्तरायतायां षड्जस्थाने धैवते[7] स्थापिते तदूर्ध्वं निषादं कलोपनतायां मध्यमस्थान ऋषभे स्थापिते तदूर्ध्वं गांधारं चेत्यादिः क्रमः। तस्मात् मूर्च्छनानां[8] शुद्धादिभेदेन प्रत्येकं चातुर्विध्यं दर्शयति––**चतुर्धे**ति। ग्रामयोरुक्ताश्चतुर्दश मूर्च्छनास्ता इति परामृश्यन्ते। शुद्धाः षड्जग्रामे सर्वस्वरविकाररहिताः; मध्यमग्रामे तु ग्रामस्वरूपभेदनिर्वर्तकं पञ्चमं तदुपलक्षकं धैवतं च विहाय इतरस्वरविकाररहिताः। तत्र पञ्चमधैवतयोः तादवस्थ्यमेव शुद्धत्वं विवक्षितमिति मन्तव्यम्।

[1] षड्जादिम 1 ed. [2] क. ख. ग. घ. तदोर्ध्वं fn. 1 ed. [3] काकलीसहिता (सु). [4] ङ. शदुदीरिताः fn. 1 ed. [5] ग. देरपरं fn. 1 ed. [6] संस्थापर्या 1 ed. [7] ग. धैवतेऽपि fn 1 ed. [8] ग. र्च्छनादीनां fn. 1 ed.

ननु––विकृतस्वरेषु **यद्यपि पञ्चमस्य ग्रामभेदकत्वेनैव** चरितार्थत्वेऽपि, **ऋषभधैवतयोश्च षड्जपञ्चमविकारायत्तवि-कारयोः स्वतो भेदकत्वाभावेऽपि, षड्जमध्यमसाधारणद्वयाश्रय-णेनापि प्रकारान्तरेषु संभवत्सु केवलं काकल्यन्तराश्रयणेनैव चतुर्धेति निश्चयः कथमिति चेत्। सत्यम्; षड्जमध्यमयोः साधा-रणीकृतयोः स्वरूपेण भेदकत्वे संभवत्यपि काकल्यन्तरयोः साधा रणयोः अन्तर्भूतत्वेन तयोः पृथग्भेदकत्वम्** ।

तथा चाह **मतङ्गः**––"साधारणस्वरौ निषादगांधारवन्तौ तदादिविकृतास्तत्रैवान्तर्भूताः" इति । किं च ग्रामद्वये मूर्च्छना-साधारणप्रकारभेदनिरूपणावसरे प्रतिनियतग्रामवर्तिनोः षड्ज-मध्यमसाधारणयोः अनुपयोगाच्च । यथोक्तं **भरतेन**––"षड्जग्रामे षड्जसाधारणं मध्यमग्रामे मध्यमसाधारणम्" इति । अतश्चतु-र्धेत्युपपद्यत **इत्याचार्यरहस्यं** संप्रदायविदुषां दुर्ग्रहम् ।

श्रुतिस्वरप्रमाणज्ञः कल्लिनाथः कलानिधिः ।
चातुर्विध्यं मूर्च्छनानामत्रैवं निरदीधरत् ।। १५, १६ ।।

(सु०) ननु––षड्जस्थाने, मध्यमस्थाने च यदि निषादादयो गांधारादयश्च स्थापिताः, तदा षड्जमध्यमयोः कुत्रावस्थानमत आह–– **षड्जादीनि**ति । षड्जर्षभगांधारादीन् मध्यमपञ्चमधैवतादींश्चोर्ध्वं सारयेद्, उत्कृष्टेषु स्वरेषु स्थापयेत्। यदा निषादः षड्जस्थाने स्थापितः, तदा षड्ज ऋषभस्थान ऋषभो गांधारस्थान इत्यादि। यदा धैवतःषड्ज-स्थाने, तदा निषाद ऋषभस्थाने षड्जो गांधारस्थान इत्यादि स्वयमूह्यम् ।

ननु––कथमन्यस्य स्वरस्यान्यस्वरस्थानेऽवस्थानम्? ब्रूमः; नायं मुख्यो व्यवहारः, किं तु औपचारिकोऽयं व्यवहारः। अथवा, **दत्तिलादिभिः**



अङ्गीकृतत्वादेवमुच्यते। **दत्तिलो** हि––स्वेच्छया यस्यां कस्यामपि श्रुतौ षड्जं स्थापयेत् तदपेक्षया च श्रुतिनियमेन अन्यान् स्वरान् स्थापयेदित्यु-क्तवान् । यदाह––

"षड्जत्वेन गृहीतो यः षड्ज[1]ग्रामे ध्वनिर्भवेत् ।
तत ऊर्ध्वं तृतीयः स्यादृषभो नात्र संशयः ।।
ततो द्वितीयो गांधारश्चतुर्थो मध्यमस्ततः ।
मध्यमात् पञ्चमस्तद्वत् तृतीयो धैवतस्ततः ।।
निषादोऽतो [2]द्वितीयः स्यात् ततः षड्जश्चतुर्थकः ।"

इति ।

विवृतं चैतत् **प्रयोगस्तवकाख्यायां दत्तिलटीकायाम्**––"षड्जत्वेन षड्जस्वरभावेन गृहीतः परिकल्पितो बुद्धया व्यवस्थापितो यः कश्चिद् ध्वनिविशेषः षड्जाख्ये ग्रामे भवेत्, तस्माद् ध्वनिविशेषादूर्ध्वं तृतीयः स्यादृषभः" इति ।

अनेनैवाभिप्रायेण **दत्तिलः** षड्जग्राममूर्च्छनानां, मध्यमग्राममूर्च्छ-नानां च किंचिद्विकारेणैक्यमुक्तवान् । यदाह––

"गांधारं धैवतीकुर्याद् द्विश्रुत्युत्कर्षणाद्यदि[3] ।
तद्वशान्मध्यमादींश्च निषादादीन् यथा स्थितान् ।।
ततो ऽभूद्यावतिथ्येषा षड्जग्रामस्य मूर्च्छना ।
जायते तावतिथ्येव मध्यमग्राममूर्च्छना ।।
श्रुतिद्वयापकर्षेण गांधारीकृत्य[4] धैवतम् ।
पूर्ववन्मध्यमाद्याश्च भावयेत् षड्जमूर्च्छनाः[5] ।।"

इति । स्वेच्छया षड्[6]जावस्थापनमङ्गीकृत्यैव **दत्तिलदक्षप्रजापत्यादयो-**ऽवधानं गांधर्वाङ्गत्वेनाङ्गचकार्षुः । यदाह **दत्तिलः––**

[1] ग्रामध्वनि (A). [2] द्वितीयस्तु (A). [3] त्कर्षणादपि (A).
[4] गान्धारीकृत (A). [5] मूर्च्छना (A). [6] जादिस्थापन (A).

"पदस्थः स्वरसंघातस्तालेन [1]सुमितस्तथा ।
प्रयुक्तश्चावधानेन गांधर्वमभिधीयते ॥"

इति । **दक्षप्रजापतिरपि**—

"अवधानानि गांधर्वं पश्चात् स्वरपदादयः ।
अवधानातिरेकेण त्रिविधं नोपपद्यते ॥"

इत्याह । अवधानं नाम मनोबुद्धिस्मृतीन्द्रियाणामैकाग्र्यम् । षड्जो यत्र स्थापितः, तदपेक्षयैव अन्येषां स्वराणामुच्चारणमिति यावत् । यदि स्वरा स्वेच्छया नावस्थाप्यन्ते, तदा अवधानं नोपयुज्येत ।

**शार्ङ्गदेवेनापि**—चलवीणायां सारणानिरूपणेन अयं पक्षः किंचित् स्वीकृत एव, 'स्वोपान्त्यतन्त्रीमानेयास्तस्यां सप्त स्वरा बुधैः' इत्युक्तत्वात् । लोके च वैणिकाः स्वेच्छया स्वरानवस्थापयन्तो दृश्यन्त इत्यास्तां विस्तरः । **मतङ्गेन** तु—द्वादशस्वरमूर्च्छना उक्ताः—

"इदानीं संप्रवक्ष्यामि द्वादशस्वरमूर्च्छनाः[2] ॥ -११८ ॥"

इति । अत्र मूर्च्छनानिर्देशः स्थानत्रितयप्राप्त्यर्थमिति **वचनात्** द्वादशस्वरसंपन्ना मूर्च्छना द्रष्टव्याः[3] । **नन्दिकेश्वरेणाप्युक्तम्**—

"द्वादशस्वरसंपन्ना ज्ञातव्या मूर्च्छना बुधैः ।
[4]जातिभाषादिसिद्ध्यर्थं तारमन्द्रादिसिद्धये[5] ॥"

इति ।

ताश्चैवम्—धनिसरिगमपधनि सरिग—**उत्तरमन्द्रा** ॥ १ ॥ निसरिगमपधनि सरिगम—**रजनी** ॥ २ ॥ सरिगमपधनि सरिगमप—**उत्तरायता** ॥ ३ ॥ रिगमपधनि सरिगमपध—**शुद्धषड्जा** ॥ ४ ॥ गमपधनि

[1] च समन्वितः (A). [2] नाम् (बृ). [3] द्रष्टव्या (A). [4] परिभाषादि 1 ed (A). [5] सिद्धयः (A).



सरिगमपधनि—**मत्सरीकृता** ॥ ५ ॥ मपधनि सरिगमपधनिस—**अश्वक्रान्ता** ॥ ६ ॥ पधनि सरिगमपधनिसरि—**अभिरुद्गता** ॥ ७ ॥ इति षड्जग्रामे ॥

मध्यमग्रामे ऽप्येवमेव । [1]सरिगमपधनिसरिगमप—**सौवीरी** ॥ १ ॥ रिगमपधनिसरिगमपध—**हारिणाश्वा** ॥ २ ॥ गमपधनिसरिगमपधनि—**कलोपनता** ॥ ३ ॥ मपधनिसरिगमपधनिस—**शुद्धमध्या** ॥ ४ ॥ पधनिसरिगमपधनिसरि—**मार्गी** ॥ ५ ॥ धनिसरिगमपधनिसरिग—**पौरवी** ॥ ६ ॥ निसरिगमपधनिसरिगम—**हृष्यका** ॥ ७ ॥ इति । चतुर्दशानामपि मूर्च्छनानां चातुर्विध्यं प्रतिपादयति—**चतुर्धेति । ताः**, चतुर्दश मूर्च्छनाः **पृथक्**प्रत्येकं **चतुर्विधाः शुद्धाः काकलीसहिताः सान्तराः**, काकल्यन्तरोपेताश्चेत्येवं **षट्पञ्चाशद्भवन्ति** ॥ १५-१६ ॥

**श्रुतिद्वयं [2]चेत् षड्जस्य निषादः संश्रयेत् तदा ।**
**स काकली मध्यमस्य गांधारस्त्वन्तरः स्वरः ॥ १७ ॥**

(क०) मूर्च्छनाभेदकत्वेन प्रसक्तयोः काकल्यन्तरयोः स्वरूपमाह—**श्रुतिद्वयं चेदिति । मध्यमस्येति** । अत्रापि श्रुतिद्वयं चेदित्याद्यनुषञ्जनीयम् । मूर्च्छनाभेदोपयोगिकाकल्यन्तरप्रसङ्गात् **मतङ्ग**प्रोक्तौ स्वराणां प्रवेशनिग्रहावुच्येते । तद्यथा—द्विविधस्तानप्रयोगः—प्रवेशेन, निग्रहेण च । प्रवेशो द्विविधः—पूर्वस्वरविप्रकर्षेण, उत्तरस्वरमार्दवेन च । तत्र ऋषभापेक्षया षड्ज[3]स्याधरीभूतस्य लोपनीयस्यापि विप्रकर्षः पीडनम्; ऋषभापादनमिति यावत् । तस्यैव षड्जस्य निषादापेक्षया उत्तरीभूतस्य मार्दवं शिथिलीकरणम्; निषादापादनमिति यावत् । निग्रहस्तु—

[1] निसरिगमपधनिसरिगम—सौवीरी ॥ १ ॥ इत्यादिः कोशान्तरपाठः (बृ). [2] च षड्जस्य निषादस्त्वाश्रयेद्यदा (D). [3] क. स्याचरी; ग. स्यावरी fn. 1 ed.

उत्तरस्वरस्य [1]परित्यागः; असंस्पर्श इति यावत् । तथा चाह **भरतः**—

"द्विधा तानक्रिया तन्त्र्यां प्रवेशान्निग्रहात्तथा ।

इति । तत्र प्रवेशो नाम अधरस्वरविप्रकर्षात्, उत्तरस्वरमार्दवाद्वा । निग्रहश्चासंस्पर्शः" इति । **दत्तिलेनाप्युक्तम्**—

"तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात् तथा ।
प्रवेशो ध्वनिसादृश्यमसंस्पर्शस्तु निग्रहः ॥"

इति ॥ १७ ॥

(सु०) काकलीसहिताः सान्तरा इत्युक्तम्; तत्र कोऽयं काकल्यन्तरो वेत्यपेक्षायामाह—**श्रुतिद्वयमिति । निषादः षड्जस्य श्रुतिद्वयं संश्रयेच्चेत्**, षड्जस्य द्वितीयश्रुतौ तिष्ठन् चतुःश्रुतिर्भवति यदि, **तदा काकलीत्**युच्यते । **गांधारश्च मध्यमस्य** श्रुतिद्वयं गृह्णन् चतुःश्रुतिः **सन् अन्तर** इत्युच्यते । निषादगांधारावेव काकल्यन्तरस्वरौ, न तयोः स्वरान्तरत्वमित्युक्तं प्राक् ॥ १७ ॥

**यस्यां यावतिथौ षड्जमध्यमौ ग्रामयोः क्रमात् ।**
**मूर्च्छना तावतिथ्येव सा निःशङ्केन कीर्तिता ॥ १८ ॥**
**प्रथमादिस्वरारम्भादेकैका सप्तधा भवेत् ।**
**तासूच्चार्यान्त्यस्वरांस्तान् पूर्वानुच्चारयेत् क्रमात् ॥१९॥**
**ते क्रमास्तेषु संख्या स्याद् द्वानवत्या शतत्रयम् ।**
**यक्षरक्षोनारदाब्जभवनागाशिवपाशिनः ॥ २० ॥**

[1] ग. परित्यागप्रसङ्गार्थं इति fn. 1 ed.



**षड्जग्रामे मूर्च्छनानामेताः स्युर्देवताः क्रमात् ।**
**ब्रह्मेन्द्रवायुगन्धर्वसिद्धद्रुहिणभानवः ॥ २१ ॥**

**स्युरिमा मध्यमग्राममूर्च्छनादेवताः क्रमात् ।**
**तासामन्यानि नामानि नारदो मुनिरब्रवीत् ॥ २२ ॥**

**मूर्च्छनोत्तरवर्णाद्या षड्जग्रामे ऽभिरुद्गता ।**
**अश्वक्रान्ता च सौवीरी हृष्यका चोत्तरायता ॥ २३ ॥**

**रजनीति समाख्याता ऋषीणां सप्त मूर्च्छनाः ।**
**[1]आप्यायनी विश्वकृता[2] चन्द्रा हेमा कपर्दिनी ॥ २४ ॥**

**मैत्री [3]चान्द्रमसी पित्र्या मध्यमे मूर्च्छना इमाः ।**
**[4]नन्दा [5]विशाला सुमुखी चित्रा [6]चित्रावती सुखा ॥ २५ ॥**

**[7]आलापा चेति गांधारग्रामे स्युः सप्त मूर्च्छनाः ।**
**ताश्च स्वर्गे प्रयोक्तव्या विशेषात्तेन नोदिता ॥ २६ ॥**

(क०) मूर्च्छनासु प्रथमादिसंख्यापरिज्ञानोपायमाह—**यस्यामिति । यावतिथाविति** । याव[8]च्छब्दात् पूरणेऽर्थे डटि "वतोरिथुक्" इति [9]वत्वन्तस्येथुगागमे कृते यावतिथ इति रूपम् । **ग्रामयोः** यस्यां मूर्च्छनायां षड्जमध्यमौ **यावतिथौ सा मूर्च्छना तावतिथी** । अत्र "टिड्ढाणञ्—" इत्यादिना ङीप् ।

[1] क. आप्यायिनी fn. 1 ed. [2] ङ. भृता fn. 1 ed, हृता 1 ed. [3] चन्द्रावती 1 ed. [4] घ. मन्दा fn. 1 ed. [5] ख. विशाखा fn. 1 ed. [6] चित्रवती (D). [7] आलापी C, E. [8] च्छब्देन पूरणे 1 ed. [9] वतिप्रत्ययस्य (D), डट्प्रत्ययस्ये थुगागमे कृते यावच्छब्दस्य टिलोपे कृते च (?) याव 1 ed.

अथ मूर्च्छनाप्रसङ्गेन केवलारोहवत्तया तदेकदशरूपान् क्रमान् प्रस्तारे कूटतानोपयोगार्थं प्रतिमूर्च्छनमियत्तया अवधार्य लक्षयति——**प्रथमादी**त्यादिना । **प्रथमादिस्वरारम्भात्,** यस्यां मूर्च्छनायां यः प्रथमः स्वरः, स आदिर्येषां त इतरे षट् स्वराः, तद्गुणसंविज्ञानात् प्रथमश्चेति प्रथमादयः सप्त स्वराः, तेषामारम्भः क्रमाद् आदिमत्वेनोच्चारणम्, तस्मात् । **एकैकेति ।** शुद्धादिभेदेनोक्तासु षट्पञ्चाशन्मूर्च्छनासु प्रत्येकमित्यर्थः । **तास्वन्त्यस्वरान् क्रमादुच्चार्य** पूर्वान् स्वरान् क्रमादुच्चारयेदिति क्रमादित्यस्य आवृत्त्यान्वयः कर्तव्यः । पूर्वानारब्धस्वरादधस्तनान् । इह सप्तस्वरात्मकेषु क्रमेषु **पूर्वानुच्चारयेदिति** लक्षणांशः प्रतिमूर्च्छनं प्रथमक्रमेष्वसंभाव्योऽपि द्वितीयादिक्रमेषु संभवत्स्वरविषयो द्रष्टव्यः ।

तद्यथा——उत्तरमन्द्रायां सरिगमपधनीति प्रथमः क्रमः । निसरिगमपधेति द्वितीयः । धनिसरिगमपेति तृतीयः । पधनिसरिगमेति चतुर्थः । मपधनिसरिगेति पञ्चमः । गमपधनिसरीति षष्ठः । रिगमपधनिसेति सप्तमः । एवं क्रमेणोच्चारितत्वादेषां क्रमसंज्ञा ।। **यक्षरक्ष** इत्यादिः स्पष्टार्थः ।। १८-२६ ।।

(सु०) मूर्च्छनासंख्यापरिज्ञानार्थं सुगममुपायमाह——**यस्यामिति ।** उभयोः ग्रामयोः मध्ये षड्जमध्यमौ स्वरौ **यावतिथौ** यावत्संख्यापूरणौ, **तावतिथी** तावत्संख्यापूरणी मूर्च्छना **निःशङ्केन** निःशङ्क इति बिरुदविराजितेन **शार्ङ्गदेवेन** कथिता । षड्जग्राममूर्च्छनासु यदि षड्जः प्रथमः तर्हि प्रथमा मूर्च्छना, यदि षड्जो द्वितीयः तर्हि द्वितीया; यदि तृतीयः तृतीया, यदि चतुर्थः चतुर्थी, यदि पञ्चमः पञ्चमी, यदि षष्ठः षष्ठी, यदि सप्तमः



सप्तमीति । एवं मध्यमग्राममूर्च्छनासु——यदि मध्यमः प्रथमः तर्हि प्रथमा मूर्च्छना, यदि द्वितीयो द्वितीया, यदि तृतीयस्तृतीयेत्यादि ।। १८ ।।

षट्पञ्चाशत् (५६) संख्यानां मूर्च्छनानां प्रत्येकं सप्तविधत्वं दर्शयति——**प्रथमादीति । एकैका** मूर्च्छना **सप्तधा** भवति, प्रथमद्वितीयतृतीयतुरीयपञ्चमषष्ठसप्तमस्वरारम्भात् । ननु——द्वितीयादिस्वरारम्भे कथं सप्तस्वरत्वम्? अत आह——तास्विति । **तासु** मूर्च्छनासु **अन्त्यस्वर**पर्यन्त**मुच्चार्य पूर्वान्** स्वरानु**च्चारयेत्** । ननु——तर्हि क्रमादारोहावरोहाभावान् मूर्च्छनात्वं व्याहन्येत; अत आह——**क्रमादिति ।** यद्यपि आरोहावरोहयोः क्रमो नास्ति तथापि [1]स्वरक्रमस्य सद्भावात् मूर्च्छनात्वम् ।। १९ ।।

**ते** मूर्च्छनाभेदाः क्रमशब्देनोच्यन्ते । तेषां **संख्या द्वानवत्य**धिकं **शतत्रयं** (३९२) ज्ञातव्यम् । **मतङ्गदत्तिलौ** तु——मूर्च्छनानामन्यथा चातुर्विध्यमवादिष्टाम् । यदाह **मतङ्गः**——'तत्र सप्तस्वरा मूर्च्छना चतुर्विधा——पूर्णा, षाडवी, औडुविता, साधारणी चेति । तत्र सप्तभिः स्वरैर्या गीयते सा **पूर्णा ।** षड्भिः स्वरैर्या गीयते सा **षाडवा ।** पञ्चभिः स्वरैर्या गीयते सा **औडुविता ।** काकल्यन्तरैः स्वरैर्या[2] गीयते सा **साधारणी**[3] । इति । **दत्तिलो**ऽप्याह——

"स्वरौ यावतिथौ स्यातां ग्रामयोः षड्जमध्यमौ ।।
मूर्च्छना तावतिथ्येव तद्ग्रामद्वितये तथा ।।
"सर्वास्ताः पञ्चषट्[4]पूर्णसाधारणकृताः स्मृताः ।"

इति । मूर्च्छनानां षाडवत्वं वक्ष्यमाणषाडवतानप्रकारेणोक्तम्——औडुवत्वं वक्ष्यमाणौडुवतानप्रकारेणोक्तम्; ताभ्यां षाडवौडुवत्वम् ।।

मूर्च्छनातानयोश्च भेदः प्रतिपादितो **मतङ्गेन;** यदाह——'ननु मूर्च्छनातानयोः को भेदः? उच्यते । मूर्च्छनातानयोर्[5]र्थान्तरत्वम्' इति

[1] स्वरेक्र (A). [2] काकल्यैरन्तरस्वरैर्या (ब्). [3] साधारणा (A), (ब्).
[4] पूर्णा (A). [5] रनर्थान्त (A).

**विशाखिलः** । एतन्न संगतम्[1], संग्रहश्लोके मूर्च्छनातानयोर्भेदस्य प्रतिपादितत्वात् । [2]"ननु—कथं मूर्च्छनातानयोर्भेदः? ब्रूमः—आरोहावरोहक्रमयुक्तः स्वरसमुदायो मूर्च्छनेत्युच्यते; तानस्तु आरोहणक्रमेण भवतीति भेदः" इति ।। २०-।। मूर्च्छनानां देवताः कथयति—**यक्षेति । यक्षाः, रक्षांसि, नारदः, अब्जभवो** ब्रह्मा, **नागाः** सर्पाः, **अश्विनौ** दस्रौ, **पाशी** वरुणः ।। २०-२१ ।।

मध्यमग्राममूर्च्छनानां देवताः कथयति—**ब्रह्मेति** । देवताकथनं तु तया तया मूर्च्छनया गीतया सा सा देवता प्रीयत इत्येतमर्थं ज्ञापयितुम् । **नारदमतेन**—मूर्च्छनानामन्यथा नामानि कथयति—**तासामिति** । [3]**ऋषीणां समाख्याता** इति । ऋषिभिः समाख्याता इत्यर्थः । **नारदमतेन** गांधारग्राममूर्च्छनानामानि कथयति—**नन्देति** । ननु—गांधारग्राममूर्च्छनानां लक्षणं किमिति नोक्तम्? अत आह—**ताश्चेति** विशेषयति व्यावर्तयति सजातीयविजातीयेभ्य इति विशेषो लक्षणम् । ल्यब्लोपे पञ्चमी । लक्षणं कृत्वा नोक्ता इत्यर्थः ।। २१-२६ ।।

**तानाः स्युर्मूर्च्छनाः शुद्धाः षाडवौडुवितीकृताः[4] ।**
**षड्जगाः सप्त हीनाश्चेत् क्रमात् सरिपसप्तमैः ।। २७ ।।**
**तदाष्टाविंशतिस्ताना मध्यमे सरिगोज्झिताः ।**
**सप्त क्रमाद् यदा तानाः स्युस्तदा त्वेकविंशतिः ।। २८ ।।**
**एते चैकोनपञ्चाशदुभये षाडवा मताः[5] ।**
**सपाभ्यां द्विश्रुतिभ्यां च [6]रिपाभ्यां सप्त वर्जिताः ।।२९।।**
**षड्जग्रामे पृथक्ताना एकविंशतिरौडुवाः ।**
**रिधाभ्यां द्विश्रुतिभ्यां च मध्यमग्रामगास्तु ते ।। ३० ।।**

[1] एतच्चासंमतम् (A); एतच्चासंगतम् (बृ). [2] तत् कथं? मूर्च्छना आरोहक्रमेण तानोऽवरोहक्रमेण भवतीति भेदः (बृ). [3] ऋषिणा (A). [4] वौडुव भेदतः (D). [5] क. युताः fn. 1 ed. [6] रिधा (D).



**हीनाश्चतुर्दशैव स्युः [1]पञ्चत्रिंशत्तु ते युताः[2] ।**
**सर्वे चतुरशीतिः स्युर्मिलिताः षाडवौडुवाः ।। ३१ ।।**

(क०) प्रसङ्गात् क्रमानुक्त्वा मूर्च्छनैकदेशरूपत्वेन मूर्च्छनानन्तरमुद्दिष्टान् शुद्धतानान् लक्षयति—**तानाः स्युरिति** । तन्यते विस्तार्यत इति तनोतेर्धातोः "अकर्तरि च—" इत्यादिना सूत्रेण कर्मणि घञि तान इति रूपम्, दायो लाभ इतिवत् । **शुद्धा मूर्च्छनाः षाडवौडुवितीकृताः** सत्यः शुद्धास्**तानाः स्युरिति** शुद्धपदस्योभयत्र संबन्धः ।

यदि तानपदेनैव संबन्धः तदा मूर्च्छना इत्यविशेषेण प्रकृतत्वात् षट्पञ्चाशन्मूर्च्छनानामपि प्रसक्तौ तासां च प्रत्येकं वक्ष्यमाणप्रकारेण षाडवौडुवितत्वयोः कृतयोः [3]तदुत्थतानसंख्यायां षट्त्रिंशदुत्तरशतत्रयमितायां सत्याम् "तानाश्चतुरशीतिः स्युः" इति **भरतवचन**विरोधः स्यात् । किं च उत्तरवाक्ययोः "षड्जगाः सप्त" "मध्यमे सप्त" इति च संख्योपादानमनुपपन्नं स्यात् । अतः शुद्धा मूर्च्छना इत्यन्वयः कर्तव्यः ।

अथ यदि मूर्च्छनापदेनैव संबन्धः क्रियेत, तदा कूटतानानामपि लक्ष्यत्वं प्रतीयेत, तानपदस्य अविशेषेणोपादानात् । तन्मा भूदित्युभयत्रान्वयः कर्तव्यः । इह मूर्च्छनानां शुद्धत्वं नाम काकल्यन्तररहितत्वम्; तानानां तु शुद्धत्वं काकल्यन्तररहितत्वं व्युत्क्रमेणोच्चारितस्वररहितत्वं [4]चावगन्तव्यम् ।

[1] घ. पञ्चविंश fn. 1 ed. [2] स्मृताः (D). [3] स्तदूर्ध्वतान (D), क. स्तदुच्छन्नान fn. 1 ed; स्तदुच्छे(?) तान 1 ed. [4] घ. वाऽव fn. 1 ed.

**षाडवौडुवितीकृता** इति। सप्तसु नियतैकस्वरलोपात् षाडवाः। सप्तसु नियतस्वरद्वयलोपादौडुविताः। पूर्वमषाडवाः षाडवाः संपन्नाः षाडवीकृताः, पूर्वमनौडुविता औडुविताः संपन्ना औडुवितीकृताः। षाडवीकृताश्च औडुवीकृताश्चेति **समासः**। षाडवौडुवितीकृता इत्यनेन एकस्य द्वयोर्वा [1]स्वरयोः अविशेषेण लोपे प्राप्ते, **भरता**दिमतानुसारेण लोपं निगमयति--**षड्जगा** इत्यादिना। ननु--शुद्धतानेषु केषुचिद् भेदकपञ्चमलोपाद् ग्रामविवेकः कथमिति चेत्; उच्यते--ग्रामविशेषमधिकृत्यैव [2]तत्तत्स्वरविहीनतानाभिधानात् क्वचिद् भेदकपञ्चमाभावेऽपि, तानविशेषस्यैव ग्रामभेदकत्वमिति ।। २७-३१ ।।

(सु०) तानान् निरूपयति--**तानाः स्युरिति। शुद्धा मूर्च्छना स्युः**। किंविधा मूर्च्छनाः? विवक्षितैकस्वरापकर्षेण विवक्षितस्वरद्वयापकर्षेण च षट्स्वराः पञ्चस्वराश्चेति[3] कृताः। तमेव विवक्षितं स्वरापकर्षं कथयति--**षड्जगा** इति। षड्जग्रामस्था मूर्च्छना यदा षड्जेन हीनाः क्रियन्ते, तदा सप्त ताना भवन्ति। यदा ऋषभेण हीनास्तदा सप्त। यदा पञ्चमेन हीनास्तदा सप्त। यदा सप्तमेन निषादेन हीनास्तदा सप्त। एवं षड्जग्रामे षाडवा **अष्टाविंशतिस्ताना** भवन्ति। **मध्यग्रामे** सप्त मूर्च्छना यदा षड्जोज्झिता भवन्ति, तदा सप्त तानाः। यदा ऋषभोज्झितास्तदा सप्त। यदा गांधारोज्झितास्तदा सप्त। एवं मध्यमग्राम **एकविंशतिः** षाडवास्ताना भवन्ति। ग्रामद्वये मिलिताः षाडवास्ताना **एकोनपञ्चाशत्** ।। २७-२९- ।।

औडुवांस्तानान् निरूपयति--**सपाभ्यामिति**। षड्जग्राममूर्च्छनाः सपाभ्यां षड्जपञ्चमाभ्यां वर्जिता यदा भवन्ति, तदा सप्तौडुवास्तानाः।

[1] स्वरविशेषेण 1 ed. [2] तत्स्वर 1 ed. [3] स्वराश्च (A).



यदा **द्विःश्रुतिभ्यां** गांधारनिषादाभ्यां वर्जितास्तदा सप्त। यदा **रिपाभ्यामृ**षभपञ्चमाभ्यां हीनास्तदा सप्त। एवं **षड्जग्राम एकविंशतिस्ताना औडुवाः**। मध्यमग्रामे यदा सप्त मूर्च्छना **रिधाभ्यामृ**षभधैवताभ्यां हीना भवन्ति, तदा सप्त ताना **औडुवाः**। यदा **द्विश्रुतिभ्यां** गांधारनिषादाभ्यां हीनास्तदा सप्त। एवं मध्यमग्रामे औडुवास्तानाश्**चतुर्दश**। ग्रामद्वये मिलिता औडुवाः **पञ्चत्रिंशत्**; सर्वेऽपि **षाडवौडुवाश्चतुरशीतिः**।

तानानां प्रयोगस्तु द्विधा कथितो **मतङ्गेन**; यदाह--"कथमेषां तानानां प्रयोगः कार्य इति चेत्, उच्यते। द्विविधस्तानप्रयोगः; प्रवेशेन निग्रहेण च। प्रवेशो हि ऋषभापेक्षया षड्जस्याधरीभूतस्य लोपनीयस्य विप्रकर्षः पीडनम्,, ऋषभापादनमिति यावत्; इति विप्रकर्षेण प्रवेशः। मार्दवेनायं यथा--तस्यैव षड्जस्य निषादापेक्षया उत्तरीभूतस्य मार्दवं शिथिलीकरणम्, निषादापादनमिति यावत्; इति द्विविधः प्रवेशः। निग्रहस्तु उत्तरस्वरपरित्यागो ऽसंस्पर्शः। प्रयोगस्तु यथा--सासागरिपापामारी। तथा चाह **भरतः**--"द्विधा तानक्रियातन्त्र्यां प्रवेशो निग्रहास्तथा इति; अत्र प्रवेशो नाम अधरस्वरप्रकर्षणादुत्तरस्वरमार्दवाद्वा, निग्रहश्चाहासंस्पर्शः; कुतः मध्यमसप्तकस्य अविनाशित्वादित्यर्थः।" इति। **दत्तिलो**ऽप्याह--

'तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात्तथा।
प्रवेशो ध्वनिसादृश्यमसंस्पर्शस्तु निग्रहः ।।'

इति।

ननु--प्रथमायां सप्तम्यां च मूर्च्छनायां षड्जे लुप्ते रिगमपधनीत्येकमेव रूपं भवतीति तत्र को विशेषः? सत्यं भेदो नास्ति, परं तु मन्द्रतारकृतो भेदो विद्यत एव। ननु--मूर्च्छनास्तावत् जातिरागभाषादिषूपयोगिन्य इति युक्तं तासां कथनम्; तानास्तु कुत्रोपयुज्यन्ते? उच्यते। द्वयोर्ग्रामयोर्जातिरागान्यत्वप्रतिपादनार्थं प्रयोगस्तानानाम् इत्युक्तं **मतङ्गेन** ।। २९-३१ ।।

**असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारितस्वराः ।**
**मूर्च्छनाः कूटतानाः स्युस्तत्संख्यामभिदध्महे ।। ३२ ।।**
**पूर्णाः पञ्च सहस्राणि चत्वारिंशद्युतानि तु[1] ।**
**एकैकस्यां मूर्च्छनायां कूटतानाः [2]सह क्रमैः ।। ३३ ।।**
**षट्पञ्चाशन्मूर्च्छनास्थाः पूर्णाः कूटास्तु योजिताः ।**
**लक्षद्वयं सहस्राणि द्व्यशीतिर्द्वे शते तथा ।। ३४ ।।**
**चत्वारिंशच्च[3] संख्याता अथापूर्णान् प्रचक्ष्महे ।**
**एकैकान्त्यान्त्यविरहाद् भेदाः षट् षट्स्वरादयः ।। ३५ ।।**
**एकस्वरो ऽत्र निर्भेदो ऽप्युक्तो नष्टादिसिद्धये ।**
**[4]क्रमा अकूटतानत्वे ऽप्युक्तास्तेषूपयोगिनः ।। ३६ ।।**

(क०) क्रमप्राप्तान् कूटतानान् लक्षयति––**असंपूर्णाश्चेति** । मूर्च्छनाश्चतुर्विधा अपि, मूर्च्छनाः संपूर्णाः, असंपूर्णाश्च [5]व्युत्क्रमेण उच्चारितस्वराश्चेत् कूटतानाः स्युरित्यन्वयः । संपूर्णाः सप्तस्वरयुक्ताः, असंपूर्णा एकैकान्त्यान्त्यस्वरत्यागे सति, षट्स्वराद्येकस्वरान्ताः, चकारो विकल्पार्थः । **व्युत्क्रमोच्चारितस्वराः**, इत्यत्र स्वराणामानुपूर्व्यारोह एव क्रमः । तेष्वेकादिस्वरव्यत्यासो व्युत्क्रमः । अवरोहे सत्यामपि विपरीतानुपूर्व्यां क्रमत्वाभावेन कूटतानत्वमेव । कूटत्वं नाम व्युत्क्रमोच्चारितस्वरत्वम् ।

अथ षट्पञ्चा[6]शति मूर्च्छनासु एकैकस्याः संपूर्णादिसप्तभेदेषु प्रतिभेदं वक्ष्यमाणप्रस्तारवशादियत्तया कूटतानसंख्यां दर्शयितुं

[1] ख. च fn. 1 ed. [2] सहस्रशः (D). [3] शत्तु 1 ed. [4] क्रमाश्चाकूट 1 ed. [5] व्युत्क्रमोच्चारित 1 ed. [6] शन्मूच्छना 1 ed.



प्रतिज्ञापूर्वकमाह––**पूर्णाः पञ्च सहस्राणी**त्यादिना ।। **एकैकान्त्यान्त्यविरहादिति** । एकैकस्यां मूर्च्छनायाम् अन्त्यान्त्यविरहाद्, अन्त्यान्त्यस्वरपरित्यागात् । अन्त्यान्त्येति वीप्सया उत्तरमन्द्रायां संपूर्णक्रमेऽन्त्यो निषादः, तस्य परित्यागात् षट्स्वरः क्रमो भवति । तस्मिन् क्रमेऽन्त्यो धैवतः, तत्परित्यागात् पञ्चस्वरः क्रमो भवति ।

एवमसंपूर्णाः षड् भेदा द्रष्टव्याः । तद्यथा सरिगमपधेति षट्स्वरो भेदः; सरिगमपेति पञ्चस्वरः––सरिगमेति चतुःस्वरः; सरिगेति त्रिस्वरः; सरीति द्विस्वरः; सेत्येकस्वरः । एवमन्यास्वपि मूर्च्छनासु प्रत्येकं षड् भेदा द्रष्टव्याः । **निर्भेदः**, प्रस्ताराभावादवान्तरभेदरहितः । **नष्टादिसिद्धय** इति । आदिशब्देनोद्दिष्टस्य संख्यायाश्च ग्रहणम्; तेषु 'मौलैकाङ्कसमन्वितैः' इत्येकस्वरतानस्योपयोगात् तत्सिद्धिरिति, तस्यै । **तेषूपयोगिन** इति । तेषु कूटतानेषु मूलकारण[1]त्वेनोपयोगिनो यतोऽत उक्ताः । व्युत्क्रमस्य क्रमापेक्षित्वादिति भावः ।। ३२-३६ ।।

(सु०) कूटतानान् कथयति––**असंपूर्णा** इति । या **मूर्च्छना असंपूर्णाः, याश्च [2]संपूर्णाः**, तास्ता एव **व्युत्क्रमेणोच्चारितस्वराः** सत्यः **कूटताना** भवन्ति । प्रतिमूर्च्छनं पूर्णकूटतानसंख्यां प्रतिज्ञाय कथयति–– **तत्संख्यामिति** ।। ३२ ।।

एकैकस्यां मूर्च्छनायां **पूर्णाः** कूटतानाः चत्वारिंशदुत्तराणि पञ्च सहस्राणि (५०४०) भवन्ति । ननु **मतङ्गेन** त्रयस्त्रिंशदधिकानि पञ्च सहस्राणि (५०३३) प्रतिमूर्च्छनं कूटतानसंख्योक्ता; यदाह––

[1] क. त्वेन नोप fn. 1 ed. [2] संपूर्णास्ता एव (A).

"कूटतानानां सहस्राणि पञ्च त्रयस्त्रिंशदधिकानि निष्पद्यन्ते" इति। **दत्तिलेनाप्युक्तम्**—

"पूर्णाः पञ्च सहस्राणि त्रयस्त्रिंशच्च संख्यया।
कथयन्ति प्रतिग्राममुपायो गणने ऽधुना।।"

इति। तन्निरासार्थमाह—**सह क्रमैरिति।** प्रतिमूर्च्छनं प्रस्तारे क्रियमाणे सप्त क्रमाः संजायन्ते; तैः सह चत्वारिंशदुत्तराणि पञ्च सहस्राणि भवन्तीति तात्पर्यम्। **दत्तिलादिभिस्तु**—क्रमान् विहाय कूटतानसंख्यैव निर्दिष्टेत्यविरोधः।। ३३।।

प्रतिमूर्च्छनं कूटतानसंख्यामुक्त्वा सर्वासां मूर्च्छनानां कूटतानसंख्यां कथयति—**षट्पञ्चाशदिति।** चत्वारिंशदधिकानि पञ्च सहस्राणि (५०४०) षट्पञ्चाशता गुणनीयानि। एतावता लक्षद्वयं द्व्यशीतिः सहस्राणि शतद्वयं चत्वारिंशदधिकमितीयं संख्या (२८२२४०) निष्पद्यते। अपूर्णान् कूटतानान् प्रतिज्ञाय कथयति—**अथापूर्णानिति।** क्रमाणां कूटतानानां च षट्स्वरादयः षड् भेदा भवन्ति। कथं भवन्तीत्यपेक्षायामाह—**एकैकान्त्यान्त्यविरहादिति।** पूर्णा या मूर्च्छना ग्रामद्वये तासाम् एकैकान्त्यस्वरापकर्षेण; अन्त्यैकस्वरापकर्षेण षट्स्वरा भेदा भवन्ति, अन्त्यस्वरद्वयापकर्षेण पञ्चस्वराः, अन्त्यस्वरत्रयविरहेण चतुःस्वराः, अन्त्यस्वरचतुष्टयहान्या त्रिस्वराः, अन्त्यस्वरपञ्चकहान्या द्विस्वराः, अन्त्यस्वरषट्कहोनेनैकस्वरा इति।। ३४-३५।।

ननु—एकस्वराणां प्रस्ताराभावाद् भेदा न सन्ति; ते किमर्थमत्रोच्यन्ते? अत आह—**एकस्वर** इति। एकस्वरभेदा नष्टोद्दिष्टसिद्धय उक्ताः। एकस्वरपरित्यागेन[1] द्विस्वरादीनामपि निवेशने[2] खण्डमेरौ नष्टोद्दिष्टपरिज्ञानस्य अशक्यत्वाद् एकस्वरा अप्युक्ता इत्यर्थः। ननु—

[1] त्यागे तद् (A). [2] निवेशनेन (A).



तर्हि [1]क्रमाः कूटतानत्वाभावात् किमर्थमत्रोच्यन्ते? अत आह—**क्रमा** इति। क्रमाः यद्यपि कूटताना न भवन्ति, तथापि 'क्रमं न्यस्य स्वरः स्थाप्यः' इति वक्ष्यमाणे प्रस्तारे[2] ते कूटता[3]नेषूपयोगिनो भवन्ति, क्रमैर्विना कूटतानानामशक्यज्ञानत्वात्।। ३२-३६।।

**[4]स्युः षाडवानां विंशत्या सह सप्त शतानि तु।**
**औडुवानां तु विंशत्या सहितं शतमिष्यते।। ३७।।**

**चतुःस्वराणां कूटानां चतुर्विंशतिरीरिताः।**
**त्रिस्वराः षड् द्विस्वरौ द्वावेकस्त्वेकस्वरो मतः।। ३८।।**

**आर्चिको गाथिकश्चाथ सामिकोऽथ स्वरान्तरः।**
**एकस्वरादितानानां चतुर्णामभिधा इमाः।। ३९।।**

**[5]उक्ताः शुद्धादिभेदेन निगयुक्ताश्चतुर्विधाः।**
**तयोरेकैकहीनास्तु[6] द्वेधा मूलक्रमा मताः।। ४०।।**

(क०) **स्युः षाडवानामिति।** अत्र षाडवत्वं षट्स्वरवत्त्वमात्रेण विवक्षितम्, न तु [7]प्रयोगापादनसमर्थषट्स्वरवत्त्वम्[8]। **औडुवानामिति** अत्राप्येवमेव द्रष्टव्यम्। **आर्चिक** इति। यज्ञप्रयोगेषु ऋचामेकस्वराश्रयत्वात्, तत्संबन्धाद् आर्चिकः। तथा गाथासंबन्धाद् **गाथिकः** द्विस्वरः। सामसंबन्धात् त्रिस्वरस्तानः **सामिकः।** साम्नां तु त्रिस्वरत्वं सप्तस्वरवत्त्वेऽपि मन्द्रादिस्थानत्रयविवक्षया। चतुःस्वरतानस्य एकस्वरादिसप्तविधतानमध्यवर्तित्वात् **स्वरान्तर**

[1] क्रमकूट (A). [2] वक्ष्यमाणप्रस्तारे (A). [3] तानोपयोगि (A).
[4] षाडवानां तु (D). [5] उक्तशुद्धादि भेदेन 1 ed, (A). [6] हीनाश्च 1 ed.
[7] प्रयोगावनसमर्थ 1 ed. [8] स्वरत्वम् 1 ed.

इति संज्ञा ।। **उक्ताः शुद्धादिभेदेनेति** । अत्रादिशब्देन सकाकलिसान्तरतद्द्वयोपेता गृह्यन्ते ।। ३७-४० ।।

(सु०) षाडवानां कूटतानानां क्रमैः सह संख्यामाह---**स्युः षाडवानामिति** । षाडवस्य क्रमस्य प्रस्तारे क्रियमाणे विंशत्युत्तराणि सप्त शतानि (७२०) भेदाः संजायन्ते । **औडुवानां** प्रस्तारे प्रतिमूर्च्छनं विंशत्युत्तरशतम् (१२०) भेदा भवन्ति । **चतुःस्वराणां** प्रस्तारे चतुर्विंशितिः (२४) भेदा भवन्ति । त्रिस्वराणां प्रस्तारे षड् (६) भेदाः । द्विस्वराणां प्रस्तारे द्वौ (२) भेदौ । एकस्वरप्रस्तार एकः (१) ।। ३७-३८ ।।

एकस्वरादितानानां नामविशेषं कथयति---**आर्चिक** इति । एकस्वर **आर्चिक** इत्युच्यते । द्विस्वरः **गाथिकः** । त्रिस्वरः **सामिकः** । चतुःस्वरः **स्वरान्तरः** । पञ्चस्वरस्य औडुवत्वम्, षट्स्वरस्य षाडवत्वं च वक्ष्यति । सप्तस्वरः संपूर्णः, सप्तभ्यो ऽधिकस्वराभावात् । तथाचाह **नारदः**---

"आर्चिको गाथिकश्चैव सामिकश्च स्वरान्तरः ।
[1]औडुवः षाडवश्चैव संपूर्णश्चैव सप्तमः ।।
एकस्वरप्रयोगो हि आर्चिकस्त्वभिधीयते ।
गाथिको द्विस्वरो ज्ञेयस्त्रिस्वरश्चैव सामिकः ।।
चतुःस्वरप्रयोगो हि स्वरान्तरक उच्यते ।
[2]औडुवः पञ्चभिश्चैव षाडवः षट्स्वरो भवेत् ।।
संपूर्णः सप्तभिश्चैव विज्ञेयो गीतयोक्तृभिः ।"

इति ।। ३९ ।।

एवं षाडवादीनां [3]प्रतिक्रमं संख्यामुक्त्वा षाडवक्रमसंख्यार्थमाह---[4]**उक्ताः शुद्धादिभेदेनेति** । ग्रामद्वये चतुर्दश मूर्च्छना अन्त्यैकैकस्वरापकर्षेण

[1] औडव (A). [2] औडव (A). [3] प्रतिक्रमसंख्या (A). [4] उक्तशुद्धादिभेदेनेति (A).



यदा षाडवाः क्रियन्ते, तदा निषादगांधारयुक्ता भेदाः चतुर्विधा भवन्ति, शुद्धाः काकलीकलिताः सान्तराः तद्द्वयोपेता इति । **तयोः**, निषादगांधारयोः एकैकहीनास्तु द्वेधा निषादहीनौ शुद्धौ सान्तरौ, गांधारहीनौ शुद्धौ काकलीकलितौ ।। ३७-४० ।।

**षड्जाद्यौ मध्यमाद्यौ च चत्वारः स्युर्द्विधा द्विधा ।**
**चतुर्धान्ये दशेत्यष्टाचत्वारिंशदमी क्रमाः[1] ।। ४१ ।।**
**सविंशतिः सप्तशती प्रागुक्ता गुणिता क्रमैः[2] ।**
**चतुस्त्रिंशत्सहस्राणि षष्ट्या पञ्च शतानि च ।। ४२ ।।**
**इति षाडवसंख्या स्यादथ पञ्चस्वरान् ब्रुवे ।**
**गाद्यौ धाद्यौ निषादाद्यौ चतुर्भेदाः षडौडुवाः ।। ४३ ।।**
**अष्टावन्ये द्विधेत्येवं चत्वारिंशदिमे क्रमाः ।**
[3]**सविंशतौ शते तैश्च गुणितेऽष्टौ शतानि तु[4] ।। ४४ ।।**
**चत्वारि च सहस्राणि संख्या पञ्चस्वरेष्विति ।**
**चतुःस्वरेषु [5]न्याद्यौ द्वौ चतुर्धा द्वादशापरे ।। ४५ ।।**
**क्रमा द्विधेति द्वात्रिंशच्चतुर्विंशतिताडिता ।**
**शतानि सप्ताष्टषष्ट्या स्याच्चतुःस्वरसंमितिः ।। ४६ ।।**
**त्रिस्वरेषु तु माद्यौ द्वावभेदौ द्वादशापरे ।**
**द्विधा षड्विंशतिरिति क्रमास्ते षड्भिराहता[6] ।। ४७ ।।**
**षट्पञ्चाशच्छतं च स्युर्द्विस्वरेषु पुनर्द्विधा ।**
**रिगधन्यादयो ऽष्टौ स्युः [7]शुद्धास्तदितरे क्रमाः ।। ४८ ।।**
**द्वाविंशतिस्ते तु चतुश्चत्वारिंशद् द्विताडिताः ।**

[1] क्रमात् (D). [2] गुणितक्रमैः (D). [3] सविंशता (D). [4] च (D). [5] न्यादिद्वौ 1 ed. [6] राहता: 1 ed. [7] शुद्धाः षडितरे 1 ed.

(क०) **षड्जाद्यौ मध्यमाद्यौ चेति ।** षड्जग्राम औत्तरमन्द्रः क्रमः षड्जाद्यः, मध्यमग्रामे शौद्धमध्यमः[1] षड्जाद्यः, एतौ षड्जाद्यौ । मध्यमग्रामे सौवीरः क्रमो मध्यमाद्यः, षड्जग्रामे मात्सरीकृतः क्रमो मध्यमाद्यः, एतौ मध्यमाद्यौ । मिलित्वा [2]चत्वारो द्विधा द्विधा स्युः प्रत्येकं द्विधा भवन्ति; निगयोः एकैकहीनत्वादित्यर्थः । **अन्ये दश चतुर्धेति ।** निगयुक्तत्वादित्यर्थः । गाद्यौ धाद्यावित्यादिष्वप्येवं द्रष्टव्यम् ।। ४१-४६- ।।

(सु०) चतुर्दशसु के चतुर्धा के च द्वेधेत्यपेक्षायामाह—**षड्जाद्याविति ।** ग्रामद्वयमूर्च्छनासु षड्जाद्यौ द्वौ भेदौ निषादहीनत्वाद् द्विप्रकारौ शुद्धौ सान्तराविति । **मध्यमाद्यौ च** द्वौ भेदौ गांधारहीनत्वाद् द्विप्रकारौ शुद्धौ काकलीकलिताविति । **अन्ये** तु दश भेदाः **चतुर्धा** शुद्धाः सान्तराः काकलीकलिताः तद्द्वयोपेता इति । **एवमष्टाचत्वारिशत्** (४८) षाडवाः क्रमा भवन्ति । प्रतिक्रमं च विंशत्युत्तराणि सप्त शतानि (७२०)। तान्यष्टाचत्वारिंशता गुणितानि **चतुस्त्रिंसत्सहस्राणि** षष्टयधिकानि **पञ्च शतानि** च (३४५६०) क्रमैः सह षाडवकूटतानभेदा भवन्ति ।।४१-४२।।

पञ्चस्वरान् क्रमान् परिगणयति—**गाद्याविति ।** ग्रामद्वये गांधाराद्यौ द्वौ भेदौ, धैवताद्यौ द्वौ, निषादाद्यौ द्वौ। एवं [3]षडौडुवाः पञ्चस्वरा भेदाः निषादगांधारयुक्तत्वा[4]च्चतुःप्रकाराः । **अन्येऽष्टौ** भेदास्तु चत्वारो निषादहीनाश्चत्वारश्च गांधारहीनाः तस्मात् द्विप्रकाराः । **एवं चत्वारिंशत्** (४०) औडुवाः **क्रमा** भवन्ति । प्रतिक्रमं च विंशत्युत्तरं शतम् (१२०) भेदा भवन्ति । अतश्च विंशत्युत्तरे शते चत्वारिंशता गुणिते ऽष्टशताधिकानि चत्वारि सहस्राणि (४८००) पञ्चस्वराः कूटतानाः क्रमैः सह भवन्ति ।। ४३-४५- ।।

[1] क्रमः 1 ed. [2] चत्वारः । द्विधास्युः 1 ed. [3] षडौडवाः (B).
[4] श्चतुर्भेदाः (A).



चतुःस्वरान् [1]क्रमान् परिगणयति—**चतुःस्वरेष्विति ।** ग्रामद्वये चतुर्दशसु मूर्च्छनाभेदेषु मध्ये निषादाद्यौ द्वौ भेदौ चतुःस्वरौ निषादगांधारयुक्तत्वाच्चतुर्धा । **अपरे द्वादश** भेदा [2]एकैकयुक्तत्वाद् **द्विधा ।** एवं द्वात्रिंशत् (३२) चतुःस्वराः क्रमा भवन्ति । प्रतिक्रमं चतुर्विंशतिः (२४) भेदाः । अतश्चतुर्विंशत्या [3]गुणितायां [4]द्वात्रिंशत्यष्टषष्टयधिकानि सप्त शतानि (७६८) चतुःस्वराः कूटतानाः क्रमैः सह भवन्ति ।। -४५-४६ ।।

त्रिस्वरान् क्रमान् गणयति—**त्रिस्वरेष्विति ।** त्रिस्वराणां चतुर्दशानां क्रमाणां[5] मध्ये **माद्यौ** मध्यमाद्यौ **द्वौ** भेदौ निषादगांधारहीनत्वाद् **अभेदौ** भेदशून्यौ । **अपरे द्वादश** भेदा निषादगांधारयोरेकैकयुक्तत्वाद् द्विप्रकाराः । एवं **षड्विंशतिः** (२६) त्रिस्वराः **क्रमाः** संपद्यन्ते । प्रतिक्रमं च षड्(६) भेदाः । ततश्च [6]षड्भिर्गुणितायां षड्विंशतौ **षट्पञ्चाशदुत्तरं शतम्** (१५६) त्रिस्वराः कूटतानाः क्रमैः सह भवन्ति ।। ४७- ।।

द्विस्वरान् क्रमात् परिगणयति—**द्विस्वरेष्विति ।** ग्रामद्वये चतुर्दशानां (१४) द्विस्वराणां मध्य ऋषभाद्यौ द्वौ भेदौ, गांधाराद्यौ द्वौ, धैवताद्यौ द्वौ, निषादाद्यौ द्वौ । एव**मष्टौ** भेदा निषादगांधारयोरेकैकयुक्तत्वाद् द्विधा । अपरे तु षड् (६) भेदा उभयहीनत्वात् शुद्धाः सान्तरत्वादिभेदहीनाः । एवं द्विस्वराः (२) **द्वाविंशतिः** (२२) क्रमा भवन्ति । प्रतिक्रमं च भेदद्वयम् (२)। अतश्च ते द्वाविंशतिर्भेदा [7]द्वाभ्यां गुणितायां द्वाविंशतौ चतुश्चत्वारिंशद् (४४) द्विस्वराः कूटतानाः क्रमैः सह भवन्ति ।। ४८-४९- ।।

**एकस्वरास्त्वभेदत्वान्मौला एव चतुर्दश ।। ४९ ।।**

[1] स्वरात् क्रमान्परि (B); क्रमात्परि (A). [2] गान्धार निषादवोः एकैक (B). [3] गुणिते (A), (B). [4] द्वात्रिंशदधिके (A), द्वात्रिंशतौ अष्ट (B). [5] क्रमाद्यौ स्वराणां (A). [6] षड् भेदैर्गुणितायां (A). [7] द्विताडिताः द्विगुणिताः सन्तः चतुश्चत्यारिंशद् (A), द्वाभ्यां गुणिताः चतुश्चत्वारिंशद् (B).

**षड्जादेः शुद्धमध्याया भेदकं पञ्चमं विना ।**
**चतुःस्वरे क्रमद्वंद्वे[1] ऽष्टाचत्वारिंशदीरिताः ।। ५० ।।**
**तानास्त्रिस्वरयोस्त्वेते द्वादश द्विस्वरे द्वयम्[2] ।**
**एक [3]एकस्वरस्ते त्रिषष्टिरौत्तरमन्द्रकैः ।। ५१ ।।**
**पुनरुक्ता मतास्तानैर्न्यादिमार्गीक्रमाः पुनः ।**
**पञ्चस्वरा ये चत्वारस्तत्तानानां चतुःशती ।। ५२ ।।**
**अशीत्यभ्यधिका चातुःस्वरी षण्णवतिर्भवेत् ।**
**द्वादश त्रिस्वरद्वंद्वे चत्वारो द्विस्वरद्वये ।। ५३ ।।**
**एक एकस्वरस्तानस्तेषां[4] पञ्चशती [5]त्वियम् ।**
**त्रिनवत्या युता तानैरभिन्ना रजनीगतैः ।। ५४ ।।**

(क०) **एकस्वरास्त्विति** । तुशब्दो द्विस्वरादिक्रमवैषम्यद्योतनार्थः । वैषम्यं चात्र काकल्यन्तर[6]प्रयुक्तभेदराहित्यम् । **अभेदत्वात्** प्रस्तार[7]प्रयुक्तभेदरहितत्वात् । **मौला** मूले भवाः, शुद्धा इत्यर्थः । **चतुर्दशैव** अत्रान्ययोगव्यवच्छेदार्थमवधारणम् । अयमभिप्रायः—यद्यपि निगयोः काकल्यन्तरावस्थापत्त्या मूर्च्छनाभेदकत्वं,[8] तथाप्येकैकस्वरयोस्तयोः स्वरान्तरयोगमन्तरेण स्वगतसूक्ष्मभेदस्य अलक्ष्यमाणत्वात् शुद्धयोरेव गणना, न काकल्यन्तरयोरिति । यदा पुनः षड्जग्रामे मध्यस्थानस्थितषड्जस्थान एव निषादाद्यारम्भेण रजन्यादयो मूर्च्छना भवेयुरिति, तथा मध्यमग्रामे मध्यस्थानस्थितमध्यमस्थान एव गांधाराद्यारम्भेण हारिणाश्वा-

[1] क्रमाद् द्वंद्वे 1 ed. [2] स्वरद्वयम् (D). [3] एव स्वर 1 ed. [4] स्तानास्तेषां (D). [5] त्वयम् (D). [6] प्रयुक्तं भेद 1 ed. [7] कृतभेद 1 ed. [8] भेदकत्वेऽप्येकै 1 ed.



दयो मूर्च्छना भवेयुरिति च पक्षः, तदा ग्रामयोर्भेदकपञ्चमाभावेऽपि मूर्च्छनानां स्थानभेदस्य विद्यमानत्वात् कूटतानपौनरुक्त्याभाव एव ।

यदा पुनर्ग्रामयोर्मूर्च्छनानां तदधोऽधःस्थस्वरारम्भपक्षः, तदा तु मध्यमग्रामीणानां शुद्ध[1]मध्यामार्गीपौरवीगतानां तानानां षड्जग्रामीणैः उत्तरमन्द्रारजन्युत्तरायतागतैः यथायोगं षट्स्वरादिभिः तानैः सह स्थानभेदाभावाद् भेदकपञ्चमाभावेन पौनरुक्त्यं निश्चित्य, तत्र शुद्धाश्रयत्वेन प्रथमोक्तान् [2]षाड्जग्रामिकान् गणनायां संस्थाप्य तदपेक्षया पुनरुक्ताम् [3]माध्यमग्रामिकान् अपनेतुं तान् परिगणयति—**षड्जादेः शुद्धमध्याया** इत्यादिना । ननु—शुद्धमध्याया इत्यनेनैव षड्जादित्वे सिद्धे षड्जादेरिति विशेषणं व्यर्थमिति चेत्, न; अशुद्धमध्यायाः प्रथमादिस्वरारम्भक्रमात् क्रमसप्तकवत्त्वेन तावत्येवोक्तक्रमविषयः संदेहः स्यात्; तन्निवर्तकत्वेन विशेषणमर्थवदिति । एवं **न्यादिमार्गीत्यत्र** धैवतादेस्तु पौरव्या इत्यत्राप्यवगन्तव्यम् ।। -४९-५४ ।।

(सु०) एकस्वरास्तु भेदाभावाच्चतुर्दशैव भवन्ती[4]त्याह—**एकस्वरास्त्विति** । एवं क्रमैः पुनरुक्तैश्च सह लक्षत्रयं द्वाविंशतिः सहस्राणि पञ्च शतानि द्व्यशीतिश्च (३२२५८२) भेदा भवन्ति । एतेषु पृथक्कर्तुं पुनरुक्तान्कूटतानान् [5]कथयति—**षड्जादेरिति** । मध्यमग्रामे चतुर्थी मूर्च्छना षड्जादिः शुद्धमध्या । तस्याश्चतुःस्वरं क्रमद्वयं शुद्धं, सान्तरं च । तत्र ग्रामद्वयमूर्च्छनानां भेदकं चतुःश्रुतिकत्वेन त्रिश्रुतिकत्वेन च द्विविधं

[1] मध्यमार्गी 1 ed. [2] षड्ज 1 ed. [3] मध्यम 1 ed. [4] त्यत आह (B). [5] गणयति (A), (B).

पञ्चमं विना अष्टाचत्वारिंशद् (४८) भेदाः, पुनरुक्ताः ।। ४६-५० ।। त्रिस्वरयोस्तु द्वयोः क्रमयोः शुद्धसान्तरयोर्द्वादश (१२) भेदाः पुनरुक्ताः । द्विस्वरे निषादगांधारहीनत्वात् एकस्मिन् ग्रामे[1] भेदद्वयं पुनरुक्तम् । एकस्वरस्त्वेक एव पुनरुक्तः ।

एवं शुद्धमध्यायास्त्रिषष्टिः (६३) भेदाः । [2]औत्तरमन्द्रकैः[3] षड्जग्रामे प्रथमामूर्च्छना उत्तरमन्द्रा षड्जादिभिरेव तत्संबन्धिभिः कूटतानैः सह पुनरुक्ताः । अन्यानपि पुनरुक्तान् गणयति—**न्यादिमार्गी**ति । मध्यमग्रामे निषादादिर्हि पञ्चमी मूर्च्छना मार्गी । तस्यां पञ्चस्वराः चत्वारः क्रमा भवन्ति, निषादगांधारयुक्तत्वात् । तेषां भेदा अशीत्यभ्यधिकं शतचतुष्टयम् (४८०) । चतुःस्वरसंबन्धिनी **चातुःस्वरी षण्णवतिः** (९६) । कूटतानानां पुनरुक्ताश्चतुः स्वरा अपि निषादगांधारयुक्तत्वात् चत्वारः क्रमाः । प्रतिक्रमं चतुर्विंशतिर्भेदाः (२४) । अतः षण्णवतेः (९६) (१२) भेदाः । पौनरुक्त्यम् । त्रिस्वरं तु क्रमद्वयमेव, निषादयुक्तत्वात् । तत्र द्वादश द्विस्वरं क्रमद्वयं निषादयुक्तत्वात् । तस्य चत्वारो भेदाः । एकस्वर एक एव । यद्यपि निषादस्य शुद्धत्वेन, काकलीत्वेन च द्वैविध्यं संभवति, तथाप्येकस्वरस्य क्रमत्वे[4]नानुपेयत्वान्न भेदादरः । एवं त्रिनवत्या युता पञ्चशती (५९३) रजनीगतैस्तानैः सह पुनरुक्ताः । रजनी षड्जग्रामे द्वितीया मूर्च्छना निषादादिः ।। ५१-५४ ।।

**धैवतादेस्तु पौरव्याश्चत्वारः षट्स्वराः क्रमात् ।**
**तत्तानानां तु साशीतिः शताष्टाविंशतिर्मता ।। ५५ ।।**

**औडुवानां चतुर्णां प्रागुक्ता संख्या चतुःस्वरौ[5] ।**
**त्रिस्वरौ द्विस्वरावेकस्वरः प्रागुक्तसंख्यकाः ।। ५६ ।।**

[1] क्रमे (A). [2] उत्तर (A). [3] कैः सह (B). [4] नापनेयत्वा (B).
[5] स्वराः (D).



**पञ्चविंशतिसंयुक्ता चतुस्त्रिंशच्छती त्वियम् ।**
**तानानां सदृशाकारा स्यात् तानैरौत्तरायतैः ।। ५७ ।।**

(क०) **धैवतादेस्तु पौरव्या** इति । अत्र धैवतस्य ग्रामभेदकत्वं नाशङ्कनीयम्, तस्योपलक्षणतया पूर्वमभेदकत्वप्रतिपादनात् ।। ५५-५७ ।।

(सु०) पुनरपि पुनरुक्तान् गणयति—**धैवतादेरिति** । मध्यमग्रामे षष्ठी मूर्च्छना धैवतादिः पौरवी । तस्या निषादगांधारयुक्तत्वात् षट्स्वराः चत्वारः क्रमा भवन्ति । प्रतिक्रमं च सप्त शतानि विंशत्युत्तराणि । (७२०) । [1]चतुर्णां क्रमाणामशीत्यभ्यधिकान्यष्टाविंशतिः शतानि (२८८०) भेदाः पुनरुक्ताः । सर्वत्र भेदकं पञ्चमं विनेत्यनुषङ्गो योज्यः । तस्या एव पौरव्या औडुवाः[2] पञ्चस्वरा निषादगांधारयुक्तत्वात् चत्वारः **क्रमाः**। तेषां **प्रागुक्ता संख्या** अशीत्यभ्यधिका चतुःशती (४८०) । चतुःस्वरौ द्वौ क्रमौ निषादयुक्तत्वात् । तयोरष्टाचत्वारिंशद् (४८) भेदा भवन्ति, त्रिस्वरौ [3]निषादयुक्तत्वाद् द्वौ क्रमौ । तयोर्द्वादश (१२) भेदाः । द्विस्वरावपि निषादयुक्तत्वाद् द्वौ क्रमौ । तयोश्चत्वारो भेदाः । एकस्वरस्त्वेक एव । एवं पञ्चविंशतिसंयुक्तानि चतुस्त्रिंशच्छतानि (३४२५) सदृशाकाराणि पुनरुक्तानि भवति । कैः सह पौनरुक्त्यम्? अत आह—**औत्तरायतैरिति** । उत्तरायता षड्जग्रामे तृतीया मूर्च्छना धैवतादिः । तत्संबन्धिभिः, कूटतानैः सह पौनरुक्त्यमित्यर्थः ।। ५५-५७ ।।

**इत्येकाशीतिसंयुक्तं सहस्राणां चतुष्टयम् ।**
**तानानां पुनरुक्तानां पूर्णापूर्णैः सह क्रमैः ।। ५८ ।।**

[1] विंशत्युत्तरे सप्तशते चतुर्भिगुणिते अशीत्यधिकान्यष्टाविंशति शतानि (B).
[2] औडवाः (B). [3] द्वौ कूटताना निषाद (B).

**अपनीयेत चेदेषा कूटतानमितिर्भवेत् ।**
**[1]लक्षत्रयं सप्तदश सहस्राणि शतानि च ।। ५९ ।।**
**नवत्रिंशद्युतानीति ज्ञानोपायो ऽत्र कथ्यते ।**

(क०) **पूर्णापूर्णैः सह क्रमैरिति ।** तत्र पूर्णाः क्रमाः प्रथमादिस्वरारम्भादित्यादिना लक्षणेन निष्पन्ना द्वानवतियुतशतत्रयसंख्याकाः (३९२)। अपूर्णा द्व्यशीत्युत्तरशतसंख्याकाः (१९१)। उभये चतुःसप्तत्यधिकपञ्चशतसंख्याकाः (५७४)। ननु––एतैः क्रमैः सहिते पुनरुक्ततानानाम् एकाशीतियुक्तसहस्रचतुष्टये (४०९१) द्व्यशीत्युत्तरपञ्चशताधिकद्वाविंशतिसहस्रसहितलक्षत्रयमितात्तानराशेः अपनीते सति अवशिष्टकूटतानसंख्या लक्षत्रयं सप्तदश सहस्राणि नव शतानि सप्तविंशतिश्चेति (३१७९२७) दृश्यते। अत्र त्रिंशद्युतानीति कथमुपपद्यत इति चेत्; ब्रूमः––अत्रैकस्वरतानानां चतुर्दशानां मध्ये शुद्धमध्यामार्गीपौरवीगतेषु त्रिष्वेकस्वरतानेषु पुनरुक्तत्वेन अपनीतेषु एकादशैव, इतरेषु एषां क्रमत्वाभावेऽपि कूटतानत्वाभावाद् अपनेयत्वेन क्रमराशौ निवेशिताः, त्रयस्तु न निवेशिता इति तैः सह त्रिंशद्युतानीत्युपपद्यत इति। एवं तर्हि शुद्धमध्यादिष्वेव द्विस्वरादिषु एकत्रिंशत्क्रमेषु पुनरुक्ततानत्वेन अपनीतेषु तेषामपि क्रमराशौ अननुप्रवेशाद् एकषष्टियुक्तानीति पठितव्यं स्यादिति चेत्––सत्यम्।

अत्रोच्यते––पुनरुक्ततानत्वाकारेण अपनीतानामपि तेषां, क्रमत्वसंभवात् क्रमराशावनुप्रविष्टानां क्रमत्वप्रयुक्त्यापि पुनरप-

[1] लक्षद्वयं (D).



नेयत्वम् आकारद्वयवशाद् **बृहस्पतिसवानुष्ठानव**दुपपद्यते। यथैकस्यापि बृहस्पतिसवस्य अश्वमेधाङ्गत्वेन प्राधान्येन [1]चानुष्ठेयत्वम्, लोके च यथैकस्यापि देवदत्तस्य पाठक[2]त्वपाचकत्वोपाधिवशाद्भेदेन परिगणनात्[3] कार्यान्तरान्वयः, तद्वत् त्रयाणामेकस्वराणामनुक्रमत्वाभावेन आकारद्वयासंभवान्न पुनरपनेयत्वम्, द्विस्वरादीनाम् एकत्रिंशत्ताना[4]नाम् आकारद्वयसंभवात् पुनरपनेयत्वमेव; अन्यथा तु दोषः स्यादिति मत्वा त्रिंशद्युतानीति सुष्ठूक्तं **निःशङ्कशार्ङ्गदेवेन ।**

ये तु मन्यन्ते––

'त्यक्तानां न सकृत्त्यागः कथमप्युपपद्यते'।

इति निर्णीय,

'सहस्रैः सप्तदशभिर्युतं[5] लक्षत्रयं तथा।
शतानि नव षष्टिश्च सैका कूटाः [6]समासते।।'

इति, ते [7]प्रष्टव्याः––अथैकत्रिंशत्तानानां सकृत्त्यागः पुनरुक्तत्वेन वा क्रमत्वेन वा? यदि पुनरुक्तत्वेनैव [8]त्यज्येरन्, तदा तेषां क्रमत्वेन त्याज्येष्वपरिगणनात् केवलकूटतानपरिगणनावसरे क्रमाणामपि ग्रहणात् 'कूटाः समासते' इति वदतां व्याहतिः स्यात्।

किं च तेषां पुनरुक्ताकारवत्तया च पुनरुक्तपरित्यागोऽपि साकल्येन न कृतः स्यात्। अथ क्रमत्वेनैव परित्यागः, तदा पुनरुक्तत्वेन त्याज्येषु अपरिगणनाद् पुनरुक्तकूटतानेयत्ताभि-

[1] वाऽनुष्ठेयत्वं 1 ed. [2] पाचकत्वोपाधि 1 ed. [3] गणना 1 ed. [4] क. ग. नाममका fn. 1 ed. [5] युक्तं (D). [6] समासतः (D). [7] क. प्रकृष्ट fn. 1 ed. [8] त्यक्षेरंस्तदा (D).

धानावसरे पुनरुक्तानामपि तेषां ग्रहणात् 'त्रिषष्टिः परिकीर्तिता' इत्यादिना शुद्धमध्यादिषु क्रमैः सह, पुनरुक्तान् परिगणयतां व्याहतिः स्यात् । तेषां क्रमाकारवत्तया च क्रमत्यागोऽपि साकल्येन न कृतः स्यादिति तत्रभवतां मीमांसामांसलितधियाम् 'षष्टिश्च सैका कूटाः' इति महदिदं ग्रन्थनिर्माणकौशलम्!

संगीतरत्नाकरभावबोद्धा
श्रीकल्लिनाथः सुधियां मतेन ।
अपौन[1]रुक्त्यात् क्रमकूटतान-
संख्याविरोधं त्विह पर्यहार्षीत् ।।

।। ५८-५९- ।।

(सु०) एवं शुद्धमध्यामार्गीपौरवीणां पुनरुक्तान् कूटतानान् मिलितान् परिगणयति—**इत्येकाशीतीति** । एवं पुनरुक्तानां तानानां सहस्रचतुष्टयमेकाशीत्यधिकं (४०८१) भवति । [2]पुनरुक्तकूटतानापनयने पूर्णापूर्णक्रमापनयने च [3]निष्कृष्टां कूटतानसंख्यां कथयति—**लक्षत्रयमिति** पूर्णाः क्रमा द्वानवत्यधिकं शतत्रयम् (३९२) । षाडवा अष्टाचत्वरिंशत् (४८) । औडुवाः चत्वारिंशत् (४०) । चतुःस्वराः द्वात्रिंशत् (३२) । त्रिस्वराः षड्विंशतिः (२६) द्विस्वराः द्वाविंशतिः (२२) । एकस्वरा एकादश (११) ।

यद्यपि एकस्वराश्चतुर्दश, तथापि षड्जनिषादधैवतानां[4] पुनरुक्तमध्येऽपनीतत्वाद् अवशिष्टा एकादशैव गण्यन्ते । एवमेकसप्तत्यधिकानि पञ्च शतानि क्रमाः (५७१) भवन्ति । पुनरुक्ताश्चैकाशीत्यधिकं सहस्र चतुष्टयम् (४०८१) । एतेषामैक्ये चत्वारि सहस्राणि षट् शतानि

[1] अपौनरुक्त्यां 1 ed. [2] पुनरुक्तापनयने (B). [3] निर्दिष्टां (A). [4] धैवतानि (B).



द्वापञ्चाशत् (४६५२) । क्रमपुनरुक्त[1]सहितकूटतानसंख्या तु लक्षत्रयं द्वाविंशतिः सहस्राणि पञ्च शतानि द्व्यशीतिश्च (३२२५८२) । क्रमपुनरुक्तापनयने तु लक्षत्रयं सप्तदश सहस्त्राणि नव शतानि त्रिंशच्च (३१७९३०) [2]पूर्णापूर्णाः कूटतानाः संपन्नाः[3] ।

ननु—यथा पञ्चमो ग्रामद्वये भेदकः चतुःश्रुतिकत्वात् त्रिश्रुतिकत्वाच्च, तथा त्रिश्रुतिकत्वात् चतुःश्रुतिकत्वाच्च धैवतः कथं भेदको न भवति? ब्रुमः—यद्यपि धैवतः षड्जग्रामे त्रिश्रुतिः मध्यमाग्रामे [4]च चतुःश्रुतिः, तथापि स्वस्थानं न परित्यजति, केवलं तु मध्यमग्रामे पञ्चमान्त्यश्रुतिग्रहणमात्रम् । ततश्च यदा पञ्चमसहचरितो धैवत उच्चार्यते, [5]तदैव तस्य विकृतत्वप्रतीतिः नान्यदेति[6] न किंचिदेतत्[7] । कूटतानानां [8]बहुत्वात् स्वरूपपरिज्ञानं [9]दुःसंपादमिति लाघवेन [10]परिज्ञानोपायं वक्तुं प्रतिजानीते —**ज्ञानोपाय** इति ।। ५८-५९- ।।

**अङ्कानेकादिसप्तान्तानूर्ध्वमूर्ध्वं लिखेत् क्रमात् ।। ६० ।।**

**हते पूर्वेण पूर्वेण तेषु चाङ्के परे परे ।**
**एकस्वरादिसंख्या स्यात् क्रमेण प्रतिमूर्च्छनम् ।। ६१ ।।**

(क०) परिगणितपूर्णापूर्णतानसंख्यापरिज्ञानोपायमाह—**अङ्कानेकादिसप्तान्तानिति** । तेषु सप्तस्वङ्केषु **परे परे** द्व्यङ्कादौ [11]पूर्वेण पूर्वेण एकाङ्कादिना हते गुणिते सति । अयमर्थः—प्रथमं पूर्वेणैकाङ्केन **परे** द्व्यङ्के गुणिते, द्विसंख्या (२) जायते । ततो

[1] सहिता (B). [2] पूर्णाः कूट (A). [3] संपद्यन्ते (B). [4] चतुः श्रुतिः (A), (B). [5] तदा धैवतस्य विकृत (A). [6] न्यथेति (A), (B). [7] किंचित् (B). [8] वर्गत्वात् स्व (B). [9] दुःखसाध्यमिति (B). [10] परिज्ञाने प्रतिजा (B); परिज्ञानोपायं प्रसिजा (A). [11] पूर्वेणैका 1 ed.

जातं द्विसंख्याङ्कं[1] पूर्वं कृत्वा, [2]तेन परे त्र्यङ्के गुणिते षट्संख्या (६) जायते। षट्संख्यया परे चतुरङ्के गुणिते, चतुर्विंशतिसंख्या (२४) जायते। तया परे पञ्चाङ्के गुणिते विंशत्युत्तरशतसंख्या (१२०) जायते। तया परे षडङ्के गुणिते, [3]सविंशतिः सप्तशती (७२०) जायते। तया परे सप्ताङ्के गुणिते, [4]चत्वारिंशदुत्तरपञ्चसहस्र-संख्या (५०४०) जायते। एवमुक्तरीत्या गुणितव्यम्। एवंकृते सति **प्रतिमूर्च्छनं क्रमेणैकस्वरादिसंख्या स्यात्,** एकस्वरादितानानां संख्या भवेत् ॥ -६०-६१ ॥

(सु०) संख्यापरिज्ञानोपायं कथयति—**अङ्कानिति। एकादि-सप्तान्ताङ्कान् ऊर्ध्वमूर्ध्वं लिखेत्।** प्रथममेकाङ्को लेखनीयः, तस्योर्ध्वप्रदेशे द्व्यङ्कः, [5]ततस्त्र्यङ्कः, ततश्चतुरङ्कः, ततः [6]पञ्चाङ्कः, ततः [7]षडङ्कः, ततः सप्ताङ्क[8] इति। ततः परे परे तु ऊर्ध्वस्थे ऽङ्के [9]**पूर्वेणाधः**स्थितेनाङ्केन **हते** गुणिते सति, प्रतिमूर्च्छन**मेकस्वर**द्विस्वर**ादिसंख्या स्यात्।** एकेन द्व्यङ्के गुणिते द्वावेव, (२) 'एकेन [10]गुणितं तदेव भवति' इति **न्यायात्।** द्वाभ्यां त्र्यङ्के गुणिते षट् (६)। षड्भिः चतुरङ्के गुणिते चतुर्विंशतिः (२४)। चतुर्विंशत्या पञ्चाङ्के गुणिते विंशत्युत्तरं शतम् (१२०)। विंशत्युत्तरेण शतेन षडङ्के गुणिते विंशत्युत्तरा सप्तशती (७२०)। विंशत्युत्तरया सप्तशत्या सप्ताङ्के गुणिते [11]पञ्च सहस्राणि चत्वारिंशदुत्तराणि (५०४०) भवन्ति। एषैवैकस्वरादिसंख्या ॥ -६०-६१ ॥

**क्रमं न्यस्य स्वरः[12] स्थाप्यः पूर्वः पूर्वः परादधः।**
**स चेदुपरि तत्पूर्वः पुरस्तूपरिवर्तिनः ॥ ६२ ॥**

[1] द्विसख्याकं 1 ed. [2] परेऽङ्के गुणिते 1 ed. [3] विंशतिः 1 ed. [4] चत्वारिंशद्युत पञ्च 1 ed. [5] तस्योर्ध्वे त्र्यङ्कः (B). [6] पञ्चमाङ्कः (A). [7] षष्ठाङ्कः (A), (B). [8] सप्तमाङ्कः (A), (B). [9] पूर्वेणावस्थिते (A). [10] गुणिते (B). [11] चत्वारिंशदधिकं सहस्रपञ्चकं भवति (B). [12] स्वरे (D).



**मूलक्रमक्रमात् पृष्ठे शेषाः प्रस्तार ईदृशः।**

**अथ खण्डमेरुः—**

**सप्ताद्येकान्तकोष्ठानामधो ऽधः सप्त पङ्क्तयः ॥ ६३ ॥**
**तास्वाद्यायाद्यकोष्ठे लिखेदेकं परेषु खम्।**
**वेद्यतानस्वरमितान् न्यस्येत् तेष्वेव लोष्टकान् ॥ ६४ ॥**

(क०) उक्तसंख्यानिदर्शनार्थमुद्देशक्रमेण प्रस्तारं लक्ष-यति—**क्रमं न्यस्येति।** क्रमं षट्चुत्तरपञ्चशतसंख्यया (५६०) परिगणितेषु पूर्णापूर्णक्रमेष्वन्यतमं न्यस्य लिखित्वा, **पूर्वः पूर्वः स्वरः परादधः स्थाप्य** इति। उत्तरमन्द्रायां तावत् सरिगमेति चतुःस्वरं क्रमं लिखित्वा, तस्मिन् क्रमे पूर्वः षड्जः परादृषभादधः स्थाप्यः। अत्र पूर्वः पूर्व इति वीप्सा आ प्रस्तारपरिसमाप्तेः प्रतितानं सकृत्करणविषया अवगन्तव्या नैकतानविषया। एकता-नविषयत्वे तु पुरस्तूपरिवर्तिन इत्यस्य क्वचिदपि न संभवः। तेन परिगणिततानभेदा अपि न संभवेयुः। तस्मादेकवारमेव पूर्वः स्वरः परादधः स्थाप्यः। **स चेदुपरि तत्पूर्वः,** इत्यस्य लक्षणांशस्य नायं विषयः। **पुरस्त्विति।** लिखितस्वरापेक्षया तत्पङ्क्तौ क्रमेण लेखनोचिते देशे लिखितो [1]यस्तस्य दक्षिणभाग इत्यर्थः। **उपरि-वर्तिनः** पुरोदेशस्योर्ध्वपङ्क्तिस्थिताः स्थाप्या इत्यूह्यम्।

अनेनात्र षड्जानन्तरं गमौ स्थाप्यौ। पृष्ठे प्रथम[2]मधो-लिखितस्वरस्य पश्चाद्देशे लिखितो [3]यस्तस्य वामभाग इत्यर्थः। शेषाः क्रमापेक्षया लिखितेभ्यो ऽवशिष्टाः स्वराः, **मूलक्रमक्रमात्,**

[1] हस्तस्य 1 ed. [2] मध्ये लिखित 1 ed. [3] हस्तस्य 1 ed.

**मूलक्रमः** उत्तरमन्द्रायां क्रमेण षड्जादिसप्तस्वराद्याः क्रमाः सप्त, तत्र षड्जाद्यः क्रमो मूलक्रमः, तस्मिन् स्वराणां यः क्रमो व्यवहितत्वेन, अव्यवहितत्वेन वा तस्मात्; स्थाप्या इति शेषः। **शेषा** इति बहुवचनं संभवद्विषयम्। अनेनात्र अवशिष्ट ऋषभः **पृष्ठे** लिख्यते।

एवं च सति **रिसगमेति** प्रथमः कूटतानः प्रस्तारे निष्पद्यते। अथास्मिन् ताने यद्यपि ऋषभात् षड्जः पूर्वः तथापि 'स चेदुपरि', स पूर्व उपरि चेद् उपरितन्यामेव[1] पङ्क्तावुत्तरत्र वर्तते चेत्, तदा तत्पूर्व उपरि वर्तमानात् पूर्वः स्थाप्य इति। अत्रोपरि वर्तमानात् षड्जाद् अस्मिन् क्रमे पूर्वाभावादेव ऋर्षभषड्जयोरधः स्थाप्यौ न संभवतः। गांधारस्याधस्तान्मूलक्रमापेक्षया ऋर्षभस्य पूर्वत्वात् तस्योपरि वर्तमानत्वाभावाच्च ऋषभः स्थाप्यः। [2]**पुरस्तूपरिवर्तिन** इति, ऋषभानन्तरं मध्यमः स्थाप्यः। अत्रापि बहुवचनं संभवद्विषयम्। **मूलक्रमक्रमादिति पृष्ठे** षड्जगांधारौ स्थाप्यौ। तदा **सगरिमेति** द्वितीयः कूटतानः। एवं मूलक्रमावरोहावधि प्रस्तारे क्रियमाणे तत्तत्क्रमोक्तसंख्याकाः कूटताना उत्पद्यन्ते। ततः प्रस्तार एव न संभवति।

एवं प्रस्तुतेषु कूटेषु नष्टोद्दिष्टतानबोधार्थं खण्डमेरुं लक्षयति ---**सप्तादीति।** सप्त आद्येकान्तकोष्ठानाम्, सप्तादयो येषां ते सप्तादयः, एको अन्तो येषां त एकान्ता इति तद्गुणसंविज्ञानो बहुव्रीहिः। सप्तादयश्च त एकान्ताश्च कोष्ठा इति ततः

[1] परि तस्यामेव 1 ed. [2] पुनस्तूपरि (D).



कर्मधारयः। तेषां सप्त पङ्क्तयः अधोऽधः क्रमेण लेखनीया इति शेषः।

अयमर्थः—आदौ सप्तकोष्ठान्वितां तिर्यक्पङ्क्तिं विलिखेत्। तदधोऽध आदिमैकैककोष्ठ[1]ह्रासात् क्रमेण षट् पङ्क्तीर्लिखेत्। तदा सप्ताद्येकान्तकोष्ठानां सप्त तिर्यक्पङ्क्तयो भवन्ति। अत्रैव च एकादिसप्तान्तकोष्ठानाम् ऊर्ध्वाधः[2]स्थिताः पङ्क्तयश्च सप्त दृश्यन्ते। तासु तिर्यक्पङ्क्तिषु आद्यायां सप्त[3]कोष्ठायां षङ्क्तौ आद्यकोष्ठ[4]एकमेकसंख्याङ्कं लिखेत्। परेषु द्वितीयादिषु तत्पङ्क्तिकोष्ठेषु खं शून्याङ्कम्, बिन्दुमित्यर्थः। खमिति जातावेकवचनम्। **तेष्वेव** आद्यपङ्क्तिकोष्ठेष्वेव **वेद्यतानस्वरमितान्,** नष्टत्वेन वा, उद्दिष्टत्वेन वा जिज्ञास्यो वेद्यः, तस्य [5]तानस्य यावन्तः [6]स्वराः तैर्मितान् तत्समसंख्याकान्। **लोष्टकानि**ति चालनोचितद्रव्योपलक्षणम् ॥ ६३-६४ ॥

(सु०) सप्तस्वरक्रमरूपपरिज्ञानार्थं प्रस्तारं कथयति---**क्रमं न्यस्येति। क्रमं** प्रथमतो **न्यस्य** स्थापयित्वा। **सरिगमपधनीति** क्रमः। क्रमापेक्षया **पूर्वः** [7]स्वरः **परादधो** [8]ऽधः स्थापनीयः। **पूर्वः पूर्व** इति वीप्सया [9]लभ्यमर्थं विशदयति---**स चेदिति।** स पूर्वः स्वर उपरिभागे वर्तते चेत् तदा तस्यापि पूर्वः स्वरो लेखनीयः। सोऽपि [10]चेद् अग्रे वर्तते, तदा तत्पूर्वः। सोऽपि चेत् परवर्ती तदा तस्यापि पूर्वः। एवं निषादमारभ्य षड्जपर्यन्तं विचारणीयम्।

[1] ग्रामात्क्रमेण 1 ed. [2] स्थितपङ्क्तयश्च 1 ed. [3] कोष्ठिकायां 1 ed. [4] एकैकसं 1 ed. [5] ज्ञानस्य 1 ed. [6] सप्तसंख्या 1 ed. [7] कान् पूर्वं न्यस्य (A). [8] परात्स्वरादधो देयः स्थाप (B). [9] जन्यमर्थं (A). [10] विद्यते चेत् पूर्वः (A).

तत्रापि [1]षड्जपर्यन्ता स्वराः पुरस्तात् तिष्ठन्ति चेत् तं स्वरं विहाय, द्वितीये स्वरे प्रस्तारश्चिन्तनीयः । तत्रापि षड्जपर्यन्ताः स्वराः पुरस्तात् तिष्ठन्ति चेत् तदा अन्यस्मिन् स्वरे प्रस्तारश्चिन्तनीयः । एवं विचार्य पूर्वस्मिन् स्वरे दत्ते, उपरिवर्तिनः स्वराः सन्ति चेत्, पुरःप्रदेशे त एव देयाः, **शेषाः,** अवशिष्टाः स्वरा मूलक्रमक्रमेण [2]**पृष्ठे** पूर्वप्रदेशे देयाः । अवशिष्टेषु स्वरेषु मूलक्रमेण यः पूर्वः स पूर्वं देयः । यस्तु ततोऽनन्तरः, स तदनन्तरं देयः । ईदृशोऽयं प्रस्तारो बोद्धव्यः ।

तत्र दृष्टान्तार्थं चतुःस्वरः प्रस्तारः प्रदर्श्यते—**सरिगमेति** [3]पूर्वं क्रमः संस्थाप्यः । षड्जस्य अधस्तात् पूर्वस्वराभावात् स्वरो न स्थाप्यते । ऋषभस्य तु अधस्तात् तत्पूर्वः षड्जो देयः । उपरिगौ गांधारमध्यमौ पुरो देयौ । अवशिष्ट ऋषभः पश्चाद्देयः । एवं **रिसगमे**ति द्वितीयो भेदः । तत ऋषभस्य अधस्तात् षड्जो देयत्वेनासीत् । स चोपर्यग्रे वर्तते । तेन ऋषभान्न प्रस्तारः । षड्जस्य पूर्वस्वराभावात् ततोऽपि न प्रस्तारः । तेन गांधारस्य अधस्ताद् ऋषभो देयः । [4]पुरस्तूपरिवर्ती मध्यमो देयः । पूर्वशून्यक्रमे मूलक्रमात् षड्जगांधारौ देयौ । ततः **सगरिमे**ति तृतीयो भेदः । ततः, अनन्तरं गांधारस्य अधस्तात् पूर्वमृषभो देयो भवति । परं तु स [5]पुरस्ताद्विद्यते । [6]तस्य पूर्वः षड्जो देयः । पुरो रिमौ पश्चाद् गः । एवं गसरिमेति चतुर्थो भेदः । तत ऋषभस्याधस्तात्षड्जो देयः । पुरो मः । पश्चाद्रिगौ । एवं **रिगसमे**ति पञ्चमो भेदः ।

ततोऽनन्तरं गांधारस्याधस्तादृषभः । पुरः समौ । पश्चाद् गः । एवं **गरिसमे**ति षष्ठो भेदः । ततो मध्यमस्य अधस्ताद् गांधारः । पश्चात् सरिमाः । एवं **सरिमगे**ति सप्तमो भेदः । तत ऋषभस्य अधस्तात् षड्जः । पुरो मगौ । पश्चाद्रिः । एवं **रिसमगे**त्यष्टमो भेदः । ततो मध्यमस्य

[1] षड्जपर्यन्ताऽपि पुरस्ता (A). [2] अधस्तात् रि पूर्वोः. [3] अधस्तात् रिपूर्वोमः पश्चात् रिगौ एवं सगरिमेति तृतीयो भेदः (A). [4] परे तूपरि (B). [5] उपरिभागे तिष्ठति (B). [6] तस्मान्न पूर्वः (B).



अधस्ताद् ऋषभः । पुरो गः । पश्चात् समौ । एवं **समरिगे**ति नवमो भेदः । ततो मध्यमस्य अधस्तात् षड्जः । पुरो रिगौ । पश्चात् मः । एवं **मसरिगे**ति दशमो भेदः । तत ऋषभस्य अधस्तात् षड्जः । पुरो गः । पश्चाद् रिमौ । एवं **रिमसगे**त्येकादशो भेदः । ततो मध्यमस्य अधस्ताद् ऋषभः । पुरः सगौ । पश्चात् मः । एवं मरिसगेति द्वादशो भेदः ।

ततो गांधारस्य अधस्ताद् ऋषभः । पश्चात् सगमाः । एवं **सगमरी**ति त्रयोदशो भेदः । ततो गांधारस्य अधस्तात्षड्जः । पुरो मरी । पश्चाद्गः । एवं **गसमरी**ति चतुर्दशो भेदः । ततो मध्यमस्य अधस्ताद् गांधारः । पुरो रिः । पश्चात् समौ । एवं **समगरी**ति पञ्चदशो भेदः । ततो मध्यमस्य अधस्तात् षड्जः । पुरो गरी । पश्चात् मः । एवं **मसगरी**ति षोडशो भेदः ।

ततो गांधारस्य अधस्तात् षड्जः । पुरो रिः । पश्चाद् गमौ । एवं **गमसरी**ति सप्तदशो भेदः । ततो मध्यमस्य अधस्ताद् गांधारः । पुरः सरी । पश्चात् मः । एवं **मगसरी**त्यष्टादशो भेदः । तत ऋषभस्य अधस्तात् षड्जः । पश्चाद् रिगमाः । एवं **रिगमसे**त्यूनविंशतितमो भेदः । ततो गांधारस्य अधस्ताद् ऋषभः । पुरो मसौ । पश्चाद् गः । एवं **गरिमसे**ति विंशतितमो भेदः । ततो मध्यमस्य अधस्ताद्गांधारः । पुरः सः । पश्चाद् रिमौ । एवं [1]रिमगसेत्येकविंशतितमो भेदः ।

ततो मध्यमस्याधस्ताद् ऋषभः । पुरौ गसौ । पश्चात् मः । एवं मरिगसेति द्वाविंशतितमो भेदः । ततो गाधारस्याधस्तादृषभः । पुरः सः । पश्चाद् गमौ । एवं [2]गमरिसेति त्रयोविंशतितमो भेदः । ततो मध्यमस्याधस्ताद् गांधारः । पुरो रिसौ । पश्चात् मः । एवं मगरिसेति चतुर्विंशतितमो भेदः । ततो विपरीतक्रमसद्भावात् प्रस्तारः, लक्षणाभावाच्च प्रस्तारो नास्ति । अनेनैव प्रकारेण पञ्चस्वरादिषु प्रस्तारः कर्तव्यः । तत्र सरिगमपेति पञ्चस्वरप्रस्तारे पान्ताश्चतुर्विंशतिः । ततो मान्ताश्चतुर्विंशतिः । ततो

[1] रिगमसेति (B). [2] गरिमसेति (B).

गान्ताश्चतुर्विंशतिः । ततो र्यन्ताश्चर्तुर्विशतिः । ततः सान्ताश्चतुर्विंशतिः । एवं पञ्चस्वरप्रस्तारे विंशत्युत्तरं शतं भेदा भवन्ति ।

सरिगमपधेति षट्स्वरप्रस्तारे धान्ता विंशत्युत्तरं शतम् । पान्ताश्च विंशत्युत्तरं शतम् । मान्ताश्च विंशत्युत्तरं शतम् । गान्ताश्च विंशत्युत्तरं शतम् । र्यन्ताश्च विंशत्युत्तरं शतम् । सान्ताश्च विंशत्युत्तरं शतम् । एवं विंशत्युत्तराणि सप्त शतानि षट्स्वरभेदा भवन्ति । सरिगमपधनीति [1]सप्तस्वरप्रस्तारे तु निषादान्ता विंशत्युत्तराणि सप्त शतानि । ततो धान्ता विंशत्युत्तराणि सप्त शतानि । ततः पान्तास्तावन्ति । ततो मान्तास्तावन्ति । ततो गान्तास्तावन्ति । तत ऋषभान्तास्तावन्ति । ततः सान्तास्तावन्ति । एवं सप्तस्वरप्रस्तारे चत्वारिंशदुत्तराणि पञ्च सहस्राणि भेदा भवन्ति ।

एवं प्रस्तारमुक्त्वा प्रस्तारणे ऽप्यशक्तस्य लघूपायेन भेदपरिज्ञानार्थं नष्टोद्दिष्टे विवक्षुस्तदुपायभूतं खण्डमेरुं कथयति—**सप्ताद्येकान्तेति ।** सप्त पङक्तयो ऽधोऽधस्तात्स्थापनीयाः । कियतां कोष्ठकानामित्यपेक्षाया-माह—**सप्ताद्येकान्तकोष्ठानामधो** ऽधः सप्त पङ्क्तयः स्थाप्याः । उत्कृष्टा-पकृष्टसंख्याकथनेनार्थतो मध्यसंख्यासिद्धिः । ततश्च सप्तकोष्टिका प्रथमा पङक्तिः कर्तव्या । द्वितीया तस्या अधस्तात्षट्कोष्ठिका । तृतीया तस्या अधस्तात्पञ्चकोष्ठिका । चतुर्थी तस्या अधस्ताच्चतुःकोष्ठिका । पञ्चमी तस्या अधस्तात्त्रिकोष्ठिका । षष्ठी तस्या अधस्ताद् द्विकोष्ठिका । [2]सप्तमी तस्या अधस्तादेककोष्ठिका[3] ।

एवं खण्डमेरु[4]संस्थानमुक्त्वा [5]ऽङ्कनिवेशनार्थमाह—**तास्वाद्याया-मिति ।** तासु सप्तसु पङक्तिषु मध्य आद्यायां सप्तकोष्ठिकायां पङक्ता-वाद्यकोष्ठ एकाङ्कं लिखेत् निवेशयेत् । [6]**परेषु** कोष्ठेषु **खं** शून्यं लिखेत् ।

[1] सप्तस्वरक्रमस्तद्भेदाश्च । चत्वारिंशदुत्तराणि पञ्च सहस्राणि प्रत्येकम् (B). [2] अन्ते (B). [3] एवं विधाना[?] कोष्ठकानां पङ्क्तयः स्थाप्याः (B). [4] लेखन (B). [5] ऽङ्कसंनिवेशमाह (B). [6] शेषकोष्ठेषु (B).



तेष्वेव[1]प्रथमपङक्तिकोष्ठकेषु लोष्टकान्कर्करान्न्यस्येत्स्थापयेत् । कियतो लोष्टकान्? वेद्यतानस्वरमितान्; वेद्यो यस्तानस्त्रिस्वरश्चतुःस्वरः पञ्च-स्वरः षट्स्वरः सप्तस्वरो वा [2]तत्स्वरसंख्याकान् । यदि त्रिस्वरो जिज्ञा-सितस्तदा आदित आरभ्य त्रिषु कोष्ठकेषु [3]त्रीन् लोष्टकान्न्यस्येत् । यदि चतुःस्वरो जिज्ञासितस्तदा आदित आरभ्य चतुर्षु कोष्ठकेषु चतुरो लोष्ट-कान्न्यस्येत् । यदि पञ्चस्वरो जिज्ञासितस्तदा पञ्चेति द्रष्टव्यम् । लोष्टन्यसनोपयोगमनुपदमेव वक्ष्यति ॥ ६०-६४ ॥

**प्राक्पङक्त्यन्त्याङ्कसंयोगमूर्ध्वाधःस्थितपङक्तिषु ।**
**शून्यादधो लिखेदेकं तं चाधो ऽधः स्वकोष्ठकान्[4] ॥ ६५ ॥**
**कोष्ठसंख्यागुणं न्यस्येत् खण्डमेरुरयं मतः ।**

| स | रि | ग | म | प | ध | नि |
|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० |
| | १ | २ | ६ | २४ | १२० | ७२० |
| | | ४ | १२ | ४८ | २४० | १४४० |
| | | | १८ | ७२ | ३६० | २१६० |
| | | | | ९६ | ४८० | २८८० |
| | | | | | ६०० | ३६०० |
| | | | | | | ४३२० |

**इति खण्डमेरुः**

(क०) **ऊर्ध्वाधःस्थितपङक्तिषु** ऊर्ध्वाधःस्थितकोष्ठानां पङक्तिषु । अत्र स्थितेति विशेषणपदस्य विशेष्यकोष्ठपदसापे-क्षत्वेन समासः । **प्राक्पङक्त्यन्त्याङ्कसंयोगम्,** प्राक्पङक्तेः, प्राक्-पङक्त्योः प्राक्पङक्तीनां वा यथासंभवमन्त्याङ्कस्य अन्त्याङ्कयोः

[1] शून्यकोष्ठकेषु लोष्ठकान् कर्कसान् न्यसेत् (B). [2] तावत्संख्याकान् (B). [3] त्रयो लोष्ठकाः स्थापनीयाः (B). [4] स्वकोष्ठकात् 1 ed.

अन्त्याङ्कानां वा संयोगोत्पन्नमङ्कान्तरमित्यर्थः । संनिहितपरपङ्क्तौ शून्याद् बिन्द्वाक्रान्तकोष्ठादधःकोष्ठे लिखेत् ।

**एतदुक्तं भवति**——द्वितीयपङ्क्तौ प्राक्पङ्क्त्यन्त्याङ्कस्यैकत्वेन संयोगस्याभावादेकाङ्कमेव लिखेत् । तृतीयपङ्क्तौ तु प्राक्पङ्क्त्यन्त्याङ्कयोः संभवेन तत्संयोगोत्पन्नं द्व्यङ्कं शून्यादधो लिखेदिति । **तं च;** द्व्यङ्कादिकं च स्वकोष्ठकात् स्वेनाधिष्ठितं कोष्ठमारभ्य अधोऽधः; कोष्ठसंख्यागुणम्, कोष्ठयोः कोष्ठानां वा संख्या कोष्ठसंख्या, तस्या गुणो यस्मिन् कर्मणीति क्रियाविशेषणम् ।

अयमर्थः——तृतीयपङ्क्तौ द्व्यङ्काधिष्ठितकोष्ठेन सहाधःकोष्ठस्य द्वितीयस्य संभवात्तत्र द्व्यङ्कं द्विगुणीकृत्य चतुरङ्कं लिखेत् । चतुर्थपङ्क्तावपि प्राक्पङ्क्तीनामन्त्याङ्कानां संयोगिनां षडङ्कं तत्र शून्यादधो लिखेत् । ततः संनिहिताधःकोष्ठे तं कोष्ठसंख्यया द्विगुणीकृत्य द्वादशाङ्कं लिखेत् । ततो ऽप्यधःकोष्ठे तं षडङ्कमेव कोष्ठसंख्यया त्रिगुणीकृत्य अष्टादशाङ्कं लिखेत् । एवं पञ्चम्यादिषु पङ्क्तिषु प्राक्पङ्क्त्यन्त्याङ्कसंयोगादिप्रकारेण लिखेदिति ।। ६६ ।।

(सु०) द्वितीयपङ्क्तौ अङ्कविन्यासं कथयति——**प्राक्पङ्क्तीति ।** ऊर्ध्वाधःस्थितपङ्क्तिषु अधःस्थिता याः पङ्क्तयः तासु प्राक्पङ्क्त्यन्त्याङ्कसंयोगं लिखेत् । यद्येका प्राक्पङ्क्तिः तर्हि तस्या अन्त्याङ्को लेख्यः । यदि प्राक्पङ्क्ती द्वे, तदा तयोः संयोगो लेख्यः । यदि बह्व्यः प्राक्पङ्क्तयः तदा तासां संयोगो लेख्यः । क्व लेख्य इत्यपेक्षायामाह——**शून्यादधः** इति तं चान्त्याङ्कसंयोगरूपमङ्कं स्वकोष्ठकात्, यत्रासौ अङ्कः स्थापितः तत्स्वकोष्ठकम्, तस्माद् अधोऽधो अधराधरकोष्ठकेषु कोष्ठसंख्यागुणितं न्यस्येत्[1] । द्वितीयकोष्ठके द्विगुणं, तृतीयकोष्ठके त्रिगुणं, चतुर्थकोष्ठके चतुर्गुणं, पञ्चमकोष्ठके पञ्चगुणं, षष्ठके षड्गुणमिति ।



ततश्च षट्कोष्ठिकाया द्वितीयपङ्क्तेः प्रथमकोष्ठे प्राक्पङ्क्तेरेकस्या अन्त्याङ्क एकाङ्को देयः । अधः कोष्ठाभावाद् द्वैगुण्यादि नास्ति । तस्या एव पङ्क्तेः द्वितीयकोष्ठे द्वयोः प्राक्पङ्क्त्योः अन्त्याङ्क एक एकश्च, [2]अनयोः संयोगे द्व्यङ्को देयः । तस्याधःकोष्ठके तमङ्कं द्विगुणं चतुरङ्कं दद्यात् । तृतीयकोष्ठके प्राक्पङ्क्तयस्तिस्रः । तासामन्त्याङ्का एक एकश्चत्वारः तेषां संयोगात् षडङ्को देयः ।

द्वितीयाधःकोष्ठके द्विगुणः षड् द्वादशाङ्को देयः । तदधःकोष्ठके त्रिगुणः[3] षडष्टादशाङ्को देयः । द्वितीयपङ्क्तिचतुर्थकोष्ठके प्राक्पङ्क्तयः चतस्रः । तासामन्त्याङ्का एक एकश्चत्वारो ऽष्टादश । तेषां संयोगे चतुर्विंशतिर्देया[4] । तदधो द्वितीयकोष्ठके द्विगुणा अष्टाचत्वारिंशत् । तदधः तृतीयकोष्ठके त्रिगुणा द्वासप्ततिः । तदधः चतुर्थकोष्ठके चतुर्गुणा षण्णवतिः । द्वितीयपङ्क्तिपञ्चमकोष्ठके प्राक्पङ्क्तयः पञ्च । तासामन्त्याङ्का एक एकश्चत्वारो ऽष्टादश षण्णवतिः । तेषां संयोगे विंशत्युत्तरं शतं देयम् ।

तदधो द्वितीयकोष्ठके द्विगुणं चत्वारिंशदधिकं शतद्वयं देयम् । तृतीयकोष्ठके त्रिगुणं षष्ट्यधिकं शतत्रयम् । चतुर्थकोष्ठके चतुर्गुणम् अशीत्यधिकं शतचतुष्टयम् । अधःकोष्ठके पञ्चमे पञ्चगुणं [5]षट्शती । द्वितीयपङ्क्तेः षष्ठकोष्ठके प्राक्पङ्क्तयः षट् । तासामन्त्याङ्का एक एकश्चत्वारोऽष्टादश षण्णवतिः षट्शती । तेषां संयोगे विंशत्युत्तरा सप्तशती देया । तदधो द्वितीयकोष्ठके द्विगुणा सा चत्वारिंशदधिकानि चतुर्दश

[1] गुणितमङ्कं न्यसेत् (B). [2] तयोः (B). [3] संयोगो षडष्टा (B). [4] देयाः (B). [5] द्विगुणानि (B).

शतानि देयानि। तदधस्तृतीयकोष्ठके त्रिगुणा षष्ट्यधिकानि एकविंशतिः शतानि। चतुर्थकोष्ठके चतुर्गुणानि अशीत्यधिकान्यष्टाविंशतिः शतानि[1]। तदधः पञ्चमकोष्ठके पञ्चगुणानि षट्त्रिंशच्छतानि। अधः षष्ठकोष्ठे षड्गुणानि विंशत्यधिकानि त्रिचत्वारिंशच्छतानि। एवं विधोऽयं खण्डमेरुर्ज्ञातव्यः ॥ ६६- ॥

**स्वरान् मूलक्रमस्यान्त्यात् पूर्वं यावतिथः स्वरः ॥ ६६ ॥**
**उद्दिष्टान्त्यस्तावतिथे कोष्ठे ऽधो लोष्टकं क्षिपेत्।**
**लोष्टचालनमन्त्यात् स्यात्त्यक्त्वा लब्धं क्रमो भवेत् ॥६७॥**
**लोष्टाक्रान्ताङ्कसंयोगादुद्दिष्टस्य मितिर्भवेत्।**

(क०) अस्मिन् खण्डमेरौ उद्दिष्टनष्टयोः बोधोपायं दर्शयति——**स्वरानित्यादिना**। स्वरूपमुक्त्वा कतमोऽयमिति संख्याविषयत्वेन यः पृच्छ्यते, स उद्दिष्टस्वरूपत्वादुद्दिष्टसंज्ञकस्तानः। उद्दिष्टान्त्यः स्वरो मूलक्रमस्य मूर्च्छनाप्रथमस्वरमारभ्य प्रवृत्तस्योत्तरमन्द्रायां सरिगमेति चतुःस्वरक्रमस्य तावदन्त्यात् स्वरात् मध्यमात्पूर्वं पृष्ठतो मगसरीत्युद्दिष्टतानस्य अन्त्य ऋषभो यावतिथ इति विचार्यमाणस्तृतीयो भवति। अधस्तावतिथे तृतीये कोष्ठे द्वादशाङ्काङ्किते **'लोष्टचालनमन्त्यात् स्यात्'** इति नियमेनोर्ध्वाधःस्थितपङ्क्तिषु चतुर्थपङ्क्तौ बिन्दुकोष्ठस्थितं लोष्टकं क्षिपेत्। अनन्तरं लब्धं कोष्ठस्थाङ्कप्रापकत्वेन चरितार्थमृषभं त्यक्त्वा शिष्टानां स्वराणां सगमेति क्रमो भवेत्। तदोद्दिष्टेऽपि लब्धत्यागात् मगसेत्युद्दिष्टो भवेत्। पुनरप्युद्दिष्टान्त्यः षड्जः पूर्वोक्तरीत्या तृतीयो यतः तेन तृतीयपङ्क्तिबिन्दुस्थितं लोष्टकमधस्तृतीये चतुरङ्काङ्किते क्षिपेत्।

[1] देयादि (B).



तदा षड्जे लब्धे तमपि त्यक्त्वा गमेति क्रमः स्यात्। मगेत्युद्दिष्टोऽपि स्यात्। पुनरपि उद्दिष्टान्त्यस्य गांधारस्योक्तरीत्या द्वितीयत्वाद् द्वितीयपङ्क्तिबिन्दुस्थितं लोष्टकमधो द्वितीये कोष्ठ एकाङ्काङ्किते क्षिपेत्। ततो मूलक्रमोद्दिष्टयोः अवशिष्टस्य मध्यमस्यैकत्वात् प्रथमापङ्क्तेरधः कोष्ठाभावाच्च मौलिकाङ्कस्थितो लोष्टो न चलति। यत्र पुनर्मूलक्रम उद्दिष्टताने च स्वराणामन्त्यत्वादिना साम्यं, तत्रापि न लोष्टचालनम्। एवं च सति, 'लोष्टाक्रान्ताङ्कसंयोगादुद्दिष्टस्य मितिर्भवेत्' इति प्रकृतस्य मगसरीत्यस्य अष्टादशत्वं प्रमितं भवति। एवं सर्वतानेष्वपि द्रष्टव्यम् ॥ ६६-६८- ॥

(सु०) एवं नष्टोद्दिष्टपरिज्ञानोपायं खण्डमेरुमुक्त्वा उद्दिष्टपरिज्ञानमाह——**स्वरादिति**। मूलक्रमस्यान्त्यात् स्वरादुद्दिष्टस्यान्त्यः स्वरः पूर्वं गणने सति, यावतिथो यावत्संख्यापूरणः तावतिथे तावत्संख्यापूरणेऽधःकोष्ठके लोष्टकं क्षिपेत् स्थापयेत्। इदं लोष्टचालनं कस्मात्प्रभृति कर्तव्यमित्यपेक्षायामाह——**लोष्टचालनमन्त्यात्स्यादिति**। अन्त्यादिति ल्यब्लोपे पञ्चमी। अन्त्यमारभ्य लोष्टचालनं स्यात्। एवं लोष्टचालने कृते लब्धं लब्धसंज्ञकं स्वरं त्यक्त्यवा लुप्त्वा, तेन हीनः क्रमो भवेदिति कर्तव्य इत्यर्थः।

तत्रापि **क्रमे** मूलक्रमस्यान्त्य अदित्यादिपूर्वोक्तप्रकारः कर्तव्यः। एवं **कृते** येषु येष्वङ्केषु लोष्टकानि यान्ति, तेषामङ्कानां संयोगाद् उद्दिष्टस्य मानं भवति। तत्र च त्रिस्वरकूटतानपरिज्ञाने त्रिकोष्ठक एव खण्डमेरुः। चतुःस्वरपरिज्ञाने चतुःकोष्ठकः। पञ्चस्वरपरिज्ञाने पञ्चकोष्ठकः। षट्स्वरपरिज्ञाने षट्कोष्ठकः। सप्तस्वरपरिज्ञाने सप्तकोष्ठक इति ज्ञातव्यम्। स्वरप्रमाणान्येव लोष्टकानि देयानि।

दृष्टान्तार्थमुद्दिष्टपरिज्ञानप्रकारो दर्श्यते। नष्टोद्दिष्टप्रश्ने सरिगमेति क्रमो लेख्यः। मगरिसेत्युद्दिष्टम्। तत्रोद्दिष्टस्यान्त्यः षड्जो मूलक्रमस्या-

न्त्यान्मध्यमात्पूर्वगणने सति चतुर्थः । तस्माच्चतुर्थकोष्ठकशून्यस्थं लोष्टकमधश्चतुर्थकोष्ठके ऽष्टादशाङ्कस्थाने क्षिपेत्। उद्दिष्टे मूलक्रमे च षड्जो लोप्यः । तत उद्दिष्टान्त्य ऋषभो मूलक्रमस्यान्त्यान्मध्यमात्तृतीयः । तस्मात्तृतीयकोष्ठशून्यस्थं लोष्टकमधस्तृतीयकोष्ठके चतुरङ्कस्थाने क्षिपेत्। ऋषभो लोप्यः । तत उद्दिष्टान्त्यो गांधारो मूलक्रमस्यान्त्यान्त्यान्मध्यमाद् द्वितीयः । तस्माद् द्वितीयकोष्ठस्थं लोष्टकमधो द्वितीयकोष्ठक एकाङ्कस्थाने क्षिपेत् । तत उद्दिष्टान्त्यो मूलक्रमस्यान्त्यात्प्रथम एव । तत्र लोष्टाभावाच्चालनं नास्ति । एषामङ्कानां संयोगे सति चतुर्विंशतिसंख्या लभ्यते । तस्मान्मगरिसेति चतुर्विंशतितमो भेदः सिद्धो भवति ।

एवं सप्तस्वरप्रस्तारे मगसरिधनिपेति किं संख्याको भेदः? इति पृच्छायां सरिगमपधनीति मूलक्रमः स्थापनीयः । उद्दिष्टान्त्यः पञ्चमो मूलक्रमस्यान्त्यात् निषादात्तृतीयः । ततश्च सप्तमपङ्क्तौ शून्यादधस्तृतीयकोष्ठके चत्वारिंशदुत्तरचतुर्दशशतस्थाने लोष्टकः स्थाप्यः । पञ्चम उभयत्रापि लोप्यः । तत उद्दिष्टान्त्यो निषादो मूलक्रमस्यान्त्यात् निषादात्प्रथम एव । ततश्चालनं नास्ति । षष्ठपङ्क्तौ शून्यस्थान एव लोष्टकावस्थितिः । तथैवोद्दिष्टे मूलक्रमे च निषादो लोप्यः । तत उद्दिष्टान्त्यो धैवतो मूलक्रमस्यान्त्याद् धैवतात्प्रथम एव । ततश्चालनं नास्ति । ततश्च पञ्चमकोष्ठे शून्यस्थान एव लोष्टकावस्थितिः । मूलक्रम उद्दिष्टे च पूर्ववद् धैवतो लोप्यः । तत उद्दिष्टान्त्य ऋषभो मूलक्रमस्यान्त्यात् मध्यमात्तृतीयः । ततश्च चतुर्थपङ्क्तौ शून्याधस्तृतीयकोष्ठके द्वादशाङ्कस्थाने लोष्टकः स्थाप्यः । मूलक्रम उद्दिष्टे च ऋषभौ लोप्यः ।

ततश्च उद्दिष्टान्त्यः षड्जो मूलक्रमस्यान्त्यान्मध्यमात्तृतीयः । ततस्तृतीयकोष्ठस्थचतुर्थपङ्क्तौ शून्याधस्तृतीयकोष्ठके चतुरङ्कस्थाने स्थाप्यः । उद्दिष्टे मूलक्रमे च षड्जो लोप्यः । तत उद्दिष्टान्त्यो गांधारो मूलक्रमस्यान्त्यात् मध्यमाद् द्वितीयः । ततश्च द्वितीयपङ्क्तौ शून्यादध एकाङ्कस्थाने लोष्टकः स्थापनीयः । मूलक्रम उद्दिष्टे च गांधारो लोप्यः ।



ततश्च मध्यमस्यैक्यात् लोष्टचालनं नास्ति । लोष्टाक्रान्तानामङ्कानां संयोगे च अष्टापञ्चाशदधिकानि चतुर्दश शतानि भवन्ति । तावत्संख्याको मगसरिधनिपेत्येवं भेदो बोध्यः । एवमेव षट्स्वरादिष्वपि उद्दिष्टपरिज्ञानप्रकार ऊह्यः ।। ६६-६८- ।।

**यैरङ्कैर्नष्टसंख्या स्यान्मौलैकाङ्कसमन्वितैः ।। ६८ ।।**
**तेषु लोष्टं क्षिपेन्मूले[1] लोष्टस्थानमितं भवेत् ।**
**नष्टतानस्वरस्थानं ततो यावतिथे पदे ।। ६९ ।।**
**अधःक्रमादस्ति लोष्टः स्वरस्तावतिथो भवेत् ।**
**क्रमान्तिमस्वरात् पूर्वो लब्धत्यागादि पूर्ववत् ।। ७० ।।**

(क०) एतावतिथ इति संख्याविशेषमुक्त्वा किंरूप इति स्वरूपं विषयीकृत्य यः पृच्छ्यते, सोऽप्रतीयमानरूपत्वान्नष्ट इत्युच्यते । **नष्टसंख्या;** नष्टतानसंख्या । उत्तरमन्द्रायां चतुःस्वरक्रमे तावदष्टादशस्तान इत्युक्त्वा मौलैकाङ्कसमन्वितैः तिर्यक्पङ्क्तिषु आद्या सप्तकोष्ठिका पङ्क्तिर्मूलम्, तत्र भवो मौलः, स चासावेकाङ्कश्च, तत्राद्यकोष्ठस्थित इति यावत्; तेन समन्वितैः; यैरङ्कैर्भिन्नपङ्क्तिकोष्ठस्थितैः, चतुर्थपङ्क्तौ द्वादशाङ्केन पङ्क्तौ चतुरङ्केण द्वितीयपक्तौ एकाङ्केन चैतैर्मिलितैः अष्टादशसंख्या स्यात्, तेष्वङ्केषु लोष्टं प्रत्येकं क्षिपेत् । **नष्टतानस्वरस्थानम्;** नष्टतानस्वरस्य प्रापकं स्थानम्, चालितलोष्टाक्रान्तकोष्ठ इत्यर्थः ।

मूले तिर्यगाद्यपङ्क्तौ, **लोष्टस्थानमितम्,** लोष्टस्थानं बिन्दुकोष्ठः तेन मितम् । बिन्दुकोष्ठेन सह परिगणितमित्यर्थः ।

[1] क्षिपेन्मौलं (D).

अन्यथा स्वकोष्ठकात् कोष्ठसंख्यागुणमित्यत्रोक्तनियमोऽत्रापि प्रसरेदित्येवमुक्तम् । **ततः**, अनन्तरम्, अधः क्रमाद् **यावतिथे पदे; लोष्टः** अस्ति क्रमान्तिमस्वरात् पूर्वस्तावतिथः स्वरो भवेदिति । प्रकृतेऽष्टादशे ताने अन्त्यलोष्टस्य तृतीयकोष्ठस्थितत्वात् क्रमान्तिमस्वरात् पूर्वस्तृतीय ऋषभो नष्टतानान्तिमत्वेन लभ्यते । लब्धत्यागादि पूर्ववदित्यतिदेशः । तदुद्दिष्टोक्तप्रकारेण कर्तव्यमित्यर्थः ।

तथा च कृते सति, ऋषभं त्यक्त्वा, सगमेति क्रमो भवति । तद्वदुपान्त्यलोष्टस्यापि तृतीयकोष्ठस्थितत्वात्क्रमान्तिमस्वरात् पूर्वस्तृतीयः षड्जो नष्टोपान्त्यत्वेन लभ्यते । ततोऽपि गमेति क्रमो द्वितीयलोष्टस्य द्वितीयकोष्ठस्थितत्वात् क्रमान्तिमाद् द्वितीयो गांधारो नष्टद्वितीयत्वेन लभ्यते । ततः पारिशेष्यात् मध्यमस्तानपूरकत्वेन नष्टादिमो लभ्यते । तदा मगसरीति नष्टतानरूपं स्यात् । किं च यत्र यत्रान्ते, मध्ये वा लोष्टचालनं नास्ति, तत्र तत्र मूलक्रमान्त्यादिः स्वरो नष्टोऽपि तादृशो लभ्यत इत्यवगन्तव्यम् ।। ६८-७० ।।

(सु०) नष्टपरिज्ञानप्रकारं कथयति—**यैरङ्कैरिति। नष्टसंख्या;** यैरङ्कैः एकीभूतैर्भवेत् प्रथमपङ्क्तिप्रथमकोष्ठस्थमौलैकाङ्कसहितैः, तेषु कोष्ठाङ्केषु लोष्टकं क्षिपेत् । मौलं सर्वासां पङ्क्तीनां शून्यसंयुक्तप्रथमकोष्ठस्थमिति लोष्टविशेषणम् । एकस्यां पङ्क्तौ कोष्ठद्वये लोष्टकं न स्थापयेदित्याह—**लोष्टस्थानमितमिति।** नष्टतानस्वराणां स्थानं लोष्टस्थानमितं लोष्टकस्थानप्रमाणकम् । यावन्ति लोष्टस्थानानि, तावन्त्येव स्वरस्थानानि । ततश्च प्रतिपङ्क्तयेकैकस्मिन् कोष्ठके लोष्टकं स्थापयित्वा प्रथमपङ्क्तिस्थैकाङ्केन समं नष्टसंख्या पूरणीया ।



एवं लोष्टकेषु स्थापितेषु किं वर्तत इत्यपेक्षायामाह—**तत** इति । **ततो**ऽनन्तरं **यावतिथे पदे** कोष्ठके अधः क्रमाद् अधो गणने शून्यस्थानाल्लोष्टकं तिष्ठति, क्रमस्यान्तिमस्वरात् तावत्संख्याकः स्वरो बोद्धव्यः । **लब्धत्यागादि** पूर्ववदिति । यः स्वरो लब्धः, स लोप्यः । आदिशब्देन सप्तस्वरनष्टविचारः सप्तकोष्ठपङ्क्तिषु, षट्स्वरनष्टविचारः षट्कोष्ठपङ्क्तिषु, पञ्चस्वरनष्टविचारः पञ्चकोष्ठपङ्क्तिष्वित्यादि बोद्धव्यम् ।

अयमत्र परिज्ञानक्रमः—सहस्रतमो भेदः सप्तस्वरप्रस्तारे कीदृगिति प्रश्ने, सप्तम्यां पङ्क्तौ शून्यादधो द्वितीयकोष्ठके सविंशतिकसप्तशतस्थाने लोष्टकः स्थाप्यः । षष्ठतपङ्क्तौ शून्यादधस्तृतीयकोष्ठके चत्वारिंशदधिकशतद्वयस्थाने लोष्टकः स्थापनीयः । पञ्चमपङ्क्तौ शून्यादधो द्वितीयकोष्ठके चतुर्विंशत्यङ्कस्थाने लोष्टकं स्थापयेत् । चतुर्थपङ्क्तौ तृतीयकोष्ठके द्वादशाङ्कस्थाने लोष्टकं स्थापयेत् । तृतीयपङ्क्तौ शून्यादधो द्वितीयकोष्ठके द्व्यङ्कस्थाने लोष्टकं स्थापयेत् । द्वितीयपङ्क्तौ शून्यादधो द्वितीयकोष्ठक एकाङ्कस्थाने लोष्टकं स्थापयेत् । एतैरङ्कैर्मौलिकाङ्कसमन्वितैः सहस्रसंख्या पूर्यते ।

ततः सप्तमपङ्क्तौ द्वितीयकोष्ठके लोष्टकस्तिष्ठतीति मूलक्रमस्यान्त्यात् निषादाद् द्वितीयो धैवतो नष्टस्य सप्तमस्वरत्वेन लेख्यः । [1]मूलक्रमे धैवतो लोप्यः । ततः षष्ठपङ्क्तौ तृतीयकोष्ठके लोष्टस्तिष्ठतीति मूलक्रमस्यान्त्यात् निषादात्तृतीयो मध्यमो नष्टस्य षष्ठस्वरत्वेन लेख्यः[2] । मूलक्रमे मध्यमो लोप्यः । ततः पञ्चमपङ्क्तौ लोष्टकस्य द्वितीयकोष्ठावस्थितत्वात् मूलक्रमान्त्यात् निषादाद् द्वितीयः पञ्चमो नष्टस्य पञ्चमस्वरत्वेन लेख्यः । मूलक्रमे पञ्चमो लोप्यः ।

ततश्चतुर्थपङ्क्तौ तृतीयकोष्ठके द्वादशाङ्कस्थाने लोष्टकस्तिष्ठतीति मूलक्रमस्यान्त्यात् निषादात्तृतीय ऋषभो नष्टस्य चतुर्थस्वरत्वेन लेख्यः ।

[1] लेखनीयः (B). [2] लोखनीयः (B).

**मूलक्रमे** ऋषभो लोप्यः। ततस्तृतीयपङ्क्तौ द्वितीयकोष्ठके लोष्टकावस्थानान्मूलक्रमस्यान्त्यात् निषादाद् गांधारो नष्टस्य तृतीयस्वरत्वेन लेख्यः। मूलक्रमे गांधारो लोप्यः। ततो द्वितीयपङ्क्तावपि द्वितीयकोष्ठके लोष्टकावस्थितेर्मूलक्रमस्यान्त्यात् निषादाद् द्वितीयः षड्ज एव नष्टतानद्वितीयत्वैनलेख्यः। मूलक्रमे षड्जो लोप्यः। ततश्चावशिष्टो निषादो नष्टस्याद्यस्वरत्वेन लेख्यः। एवं च निसगरिपमधेति सप्तस्वरेषु सहस्रतमो भेदो लभ्यते। एवं षट्स्वरादिषु ज्ञातव्यम् ॥ ६८-७० ॥

**तानस्वरमितोर्ध्वाधःपङ्क्तिगान्त्याङ्कमिश्रणात् ।**
**एकस्वरादितानानां संख्या संजायते क्रमात् ॥ ७१ ॥**

**अथात्र शुद्धतानानां नामानि व्याहरामहे ।**
**अग्निष्टोमो ऽत्यग्निष्टोमो वाजपेयश्च[1] षोडशी ॥ ७२ ॥**

**पुण्डरीको ऽश्वमेधश्च राजसूयस्ततः परः ।**
**इति स्युः षड्जहीनानां सप्त नामान्यनुक्रमात् ॥ ७३ ॥**

**स्विष्टकृद् बहुसौवर्णो गोसवश्च महाव्रतः ।**
**विश्वजिद् ब्रह्मयज्ञश्च प्राजापत्यस्तु[2] सप्तमः ॥ ७४ ॥**

**क्रमादृषभहीनानां तानानामभिधा इमाः ।**
**अश्वक्रान्तो रथक्रान्तो विष्णुक्रान्तस्ततः परः ॥ ७५ ॥**

**सूर्यक्रान्तो गजक्रान्तो वलभिन्नगपक्षकः ।**
**इति पञ्चमहीनानां [3]संज्ञाः सप्त क्रमान्मताः ॥ ७६ ॥**

**चातुर्मास्यो ऽथ संस्थाख्यः शस्त्रश्चोक्थश्चतुर्थकः ।**
**सौत्रामणी तथा चित्रा सप्तमस्तूद्भिदाह्वयः ॥ ७७ ॥**

1 पेयस्तु (D). 2 पत्यश्च 1 ed. 3 संज्ञकौ (D).



**संज्ञा निषादहीनानां षाडवानामिमाः क्रमात् ।**

इति षाड्जग्रामिकाष्टाविंशतितानननामानि ।

**सावित्री चार्धसावित्री सर्वतोभद्रसंज्ञकः ॥ ७८ ॥**

**आदित्यानामयनश्च गवामयननामकः ।**
**सर्पाणामयनः षष्ठः सप्तमः कौणपायनः ।**
**नामानि षड्जहीनानां तानानामिति मेनिरे ॥ ७९ ॥**

**अग्निचिद् द्वादशाहश्चोपांशुः सोमाभिधस्ततः ।**
**अश्वप्रतिग्रहो बर्हिरथाभ्युदयसंज्ञकः ॥ ८० ॥**

**ऋषभेण विहीनानामिति नामानि मन्वते ।**
**सर्वस्वदक्षिणो दीक्षा सोमाख्यः समिदाह्वयः ॥ ८१ ॥**

**स्वाहाकारस्तनूनपात् ततो गोदोहनो मतः ।**
**इति गांधारहीनानां क्रमात् संज्ञा प्रचक्षते ॥ ८२ ॥**

इति माध्यमग्रामिकैकविंशतिषाडवतानननामानि ।

**इडा पुरुषमेधश्च श्येनो वज्र इषुस्ततः ।**
**अङ्गिराः कङ्क इत्येताः सपहीनाभिधाः क्रमात् ॥ ८३ ॥**

**ज्योतिष्टोमस्ततो दर्शो नान्द्याख्यः पौर्णमासकः ।**
**अश्वप्रतिग्रहो रात्रिः सौभरः सप्तमः स्मृतः ॥ ८४ ॥**

**एता निषादगांधारहीनानामभिधाः क्रमात् ।**
**सौभाग्यकृच्च कारीरी शान्तिकृत्पुष्टिकृत्तथा ॥ ८५ ॥**

**वैनतेयोच्चाटनौ च वशीकरणसंज्ञकः ।**
**पञ्चमर्षभहीनानां तानानामभिधा इमाः ॥ ८६ ॥**

इति षाड्जग्रामिकैकविंशत्यौडुवतानननामानि ।

**त्रैलोक्यमोहनो वीरः कंदर्पबलशातनः ।। ८७ ।।**

**शङ्खचूडो गजच्छायो रौद्राख्यो विष्णुविक्रमः ।**
**तानानां रिधहीनानां नामान्येतान्यनुक्रमात् ।। ८८ ।।**

**भैरवः कामदाख्यश्चावभृथोऽष्टकपालकः ।**
**स्विष्टकृच्च वषट्कारो मोक्षदः सप्तमो मतः ।। ८९ ।।**

**संज्ञा निषादगांधारहीनानामिति संमताः ।**

**इति माध्यमग्रामिकचतुर्दशौडुवताननामानि ।**

**यद्यज्ञनामा यस्तानस्तस्य तत्फलमिष्यते ।। ९० ।।**

**गान्धर्वे मूर्च्छनास्तानाः श्रेयसे श्रुतिचोदिताः ।**
**गाने स्थानस्य लाभेन ते कूटाश्चोपयोगिनः ।। ९१ ।।**

(क०) अत्र खण्डमेरावपि तानसंख्याज्ञानोपायमाह-- **तानस्वरेति । तानस्वरमितोर्ध्वाधःपङ्क्तिगान्त्याङ्कमिश्रणात्;** तानस्यैकस्वरादिष्वन्यतमस्य स्वरा यावन्तः तैः मिताः तत्संख्यापरिच्छिन्नाः, तत्संख्याका इत्यर्थः; या ऊर्ध्वाधः पङ्क्तयः ताः गच्छन्तीत्यूर्ध्वाधःपङ्क्तिगाः, त एवान्त्याङ्काः, तेषां यथासंभवं द्वित्यादीनां मिश्रणात् । एकस्वरादितानानां संख्या पूर्वोक्ता, एकस्वरस्यैकः, द्विस्वरस्य द्वौ, त्रिस्वरस्य षट्, चतुःस्वरस्य चतुर्विंशतिरित्यादिरूपा । **क्रमात्;** द्व्यङ्कमिश्रणे द्विस्वरतानसंख्या, त्र्यङ्कमिश्रणे त्रिस्वरतानसंख्येत्यादिः क्रमः तस्मात् । कूटतानोपयोगित्वेन खण्डमेरुं निरूप्य प्रसङ्गात् शुद्धतानानामदृष्टफलसंबन्धं च कथयिष्यन् तेषां यज्ञानामभिधेयत्वं वक्तुमुपक्रमते--**अथात्रेत्यादिना ।** शुद्धतानानां यज्ञफलसंबन्धे किं प्रमाणमित्यत आह--



**गान्धर्वे** इति । गान्धर्वं वक्ष्यमाणलक्षणो गीतविशेषः तत्र । **मूर्च्छनास्ताना** इति । **तानाः** शुद्धतानाः । ते च शुद्धा इति प्रकरणात् लभ्यते । तत्साहचर्यात् **मूर्च्छना** अपि शुद्धा एव विवक्षिताः । **श्रेयसे,** अदृष्टफलाय । **श्रुतिचोदित** इति **श्रुति**शब्देन तदनुगृहीताः स्मृतयोऽपि उपलक्ष्यन्ते; ताभिश्चोदिताः । तद्यथा--

"उत्तरमन्द्रानुगता गायेत् तिस्रो मुदा युक्तः ।
गांधारा रक्षोघ्नीत्यौद्गात्रे मूर्च्छना विहिताः ।।
आग्निष्टोमिकतानेन गीतं साम शृणोति यः ।
स सर्वपातकैर्मुक्तो लोकान् जयति दुर्जयान् ।।
दक्षप्रोक्तं पठेद् यस्तु वर्णयन् शुद्धषड्जया ।
प्रत्यहं संध्ययोः स्तोत्रं नाकलोकं स गच्छति ।।
आग्निष्टोमिकतानेन यैर्नरैः स्तूयते शिवः ।
ते भुक्त्वा विपुलान् भोगान् शिवसायुज्यमाप्नुयुः ।।" इति ।

कूटतानानां तु केवलं दृष्टफलत्वेनोपयोगमाह---**गान** इति । गानं च वक्ष्यमाणलक्षणं तस्मिन् । स्थानस्य तत्तन्मूर्छनावशेन सारितानां स्वराणाम् आधारश्रुतेर्लाभेन परिज्ञानेन ।। ७१-९१ ।।

(सु०) खण्डमेरुणैव लाघवेन संख्यापरिज्ञानमाह---**तानस्वरेति ।** तानस्वरप्रमिता या ऊर्ध्वाधःपङ्क्तयः, तद्गता ये अन्त्याङ्काः, तेषां [1]मिश्रणादैक्येन एकस्वरादितानानां संख्या संजायते । [2]पङ्क्तिद्वयान्त्याङ्कमिश्रणाद् द्विस्वरसंख्या द्वौ । पङ्क्तित्रयान्त्याङ्कमिश्रणात् त्रिस्वरसंख्या षट् । पङ्क्तिचतुष्टयान्त्याङ्कमिश्रणात् चतुःस्वरसंख्या चतुर्विंशतिः । पङ्क्ति-

[1] द्र्वाङ्कमिश्र (B). [2] षड्जग्रायीण ऋषभ (B).

पञ्चकान्त्याङ्कमिश्रणात् पञ्चस्वरसंख्या विंशत्युत्तरं शतम् । पङ्क्ति-षट्कान्त्याङ्कमिश्रणात् षट्स्वरसंख्या सप्त शतानि विंशत्युत्तराणि । सर्वासामन्त्याङ्कमेलनेन सप्तस्वरसंख्या पञ्च सहस्राणि चत्वारिंशदुत्तराणि ।। ७१ ।।

तानानां नामानि कथयितुं प्रतिजानीते---**अथात्रेति ।** षाड्जग्रामिकाषड्जहीनषाडवताननामानि कथयति---**अग्निष्टोम** इति । षाड्जग्रामिकर्षभहीनषाडवताननामानि कथयति---**स्विष्टकृ**दित्यादि । षाड्जग्रामिकपञ्चमहीनषाडवताननामानि कथयति---**अश्वक्रान्त** इति । षड्जग्रामिकनिषादहीनषाडवताननामानि कथयति---**चातुर्मास्य इति ।** इति षाड्जग्रामिकाष्टाविंशतिषाडवताननामानि । माध्यमग्रामिकषड्जहीनषाडवताननामानि कथयति---**सावित्रीत्यादि ।** माध्यमग्रामिकर्षभहीनषाडवताननामानि कथयति---**अग्निचिदिति ।** माध्यमग्रामिकगांधारहीनषाडवताननामानि कथयति---**सर्वस्वदक्षिणेत्यादि ।** इति माध्यमग्रामिकैकविंशतिषाडवताननामानि । [1]षाड्जाग्रामिकषड्षड्जपञ्चम हीनौडुवताननामानि कथयति--इडा **पुरुषमेधश्चेत्यादि ।** षाड्जग्रामिकनिषादगांधारहीनौडुवताननामानि कथयति---**ज्योतिष्टोम** इत्यादि । षाड्जाग्रामिकपञ्चमर्षभहीनौडुवताननामानि कथयति---**सौभाग्यकृदि**त्यादि । इति षड्जग्रामिकैकविंशत्यौडुवताननामानि ।

माध्यमग्रामिकधैवतर्षभहीनौडुवताननामानि कथयति---**त्रैलोक्यमोहन** इत्यादि । माध्यमग्रामिकनिषादगांधारहीनौडुवताननामानि कथयति---**भैरव** इति । इति माध्यमग्रामिकचतुर्दशौडुवताननामानि ।

ताननामप्रयोजनमाह---**यद्यज्ञेति** । यस्य तानस्य यस्याग्निष्टोमादेर्नाम तस्य तानस्य सम्यक्प्रयोगे तस्य यज्ञस्य फलमिष्यते मन्यते **पूर्वाचार्यैः ।**

[1] षड्जग्रामीण षड्ज (B).



मूर्छनातानानां प्रयोजनमाह---**गान्धर्व** इति । **मूर्च्छनाः, तानाश्च गान्धर्वे** मार्गगाने **श्रुतिचोदिताः** श्रुत्या विहिताः । **श्रेयसे** ऽभ्युदयाय निःश्रेयसार्थम् । ततश्च शुद्धमूर्च्छनातानादिप्रयोगस्य धर्मत्वमपि सूच्यते---'यतो ऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' **इत्यङ्गीकारात् । गान** इति । गाने देशीगाने [1]ते शुद्धमूर्च्छनास्तानाः कूटतानाश्च स्थानस्य लाभेन रञ्जकस्थायविशेषलाभेन चोपयोगिनो[2] भवन्ति । अथवा [3]मन्द्रमध्यताराख्यस्थानप्राप्तय उपयोगिनो भवन्ति । **संगीतसमरसारेऽप्युक्तम्**---"ननु तानानां यज्ञानां च कथमेकत्र व्यवहारः? उच्यते---एकस्मिन्नपि तान उच्चारिते, अग्निष्टोमादियागानामेकैकस्य फलोपलब्धेः गायकानां [4]यज्ञस्तानादेव सिध्यति" इति । अतो नासंगतम् ।। ७१-९१ ।।

**इति प्रथमे स्वरागताध्याये चतुर्थं ग्राममूर्च्छनाक्रमशुद्धतानकूटतानप्रकरणम् ।। ४ ।।**

---

[1] देशीरामे गाने (B). [2] चोपयुज्यन्ते (B). [3] तारादिस्थान (B).
[4] यज्ञताना इति भेद प्रसिद्धिः (B).

## ५. साधारणप्रकरणम्

**साधारणं भवेद् द्वेधा स्वरजातिविशेषणात् ।**
**स्वरसाधारणं तत्र चतुर्धा परिकीर्तितम् ।। १ ।।**

**काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात् ।**
**साधारणः काकली हि भवेत् षड्जनिषादयोः ।। २ ।।**

**साधारण्यमतस्तस्य यत्तत् साधारणं विदुः ।**

(क०) गीते विकृतस्वरप्रयोगेण वैचित्रीं क्वचिद् गानसाम्यं च दर्शयितुं साधारणमवधारयति—**साधारणमित्यादिना । स्वरजातिविशेषणादिति;** स्वरसाधारणं जातिसाधारणमित्येवमित्यर्थः । तत्र तयोर्मध्ये स्वरसाधारणं चतुर्धा । **काकल्यन्तरषड्जैश्च मध्यमेन विशेषणादिति;** काकलिसाधारणम्, अन्तरसाधारणं, षड्जसाधारणं, मध्यसाधारणमित्येवमित्यर्थः ।

अनेकाश्रयत्वेन लोकसिद्धं साधारणशब्दार्थं प्रकृते योजयति—**साधारणः काकलीत्या**दिना । **हि,** यस्मात् कारणात् काकली विकृतः चतुःश्रुतिको निषादः षड्जनिषादयोः शुद्धयोः साधारणो भवेत्, तदुभयश्रुतिसंबन्धित्वेन; अतः कारणात् तस्य काकलिनो यत्साधारण्यं तत्साधारणं विदुः । तदेव साधारण्यं साधारणमिति पदेनापि विदुरित्यर्थः । धर्मपरत्वेन साधारणमिति नपुंसकनिर्देशः ।



अतः '**साधारणं** भवेद् द्वेधा' इत्यादिषु साधारणपदस्य साधारण्यपदपर्यायित्वमवसेयम्, माधुर्यं मधुरमिति प्रयोगवत् ।। १, २- ।।

(सु०) इदानीं साधारणलक्षणं कथयति—**साधारण**मिति । तत्र स्वरजात्यन्यतरत्वमेव साधारणसामान्यलक्षणमिति मन्वानो विशेषणद्वयमेव विभज्य निरूपयति—**साधारणं द्वेधा;** इति द्विप्रकारं भवेत् स्वरजात्योर्विशेषणात् । ततश्च एकं स्वरसाधारणम्, एकं जातिसाधारणमिति । तत्र स्वरसाधारणस्य भेदानाह—**स्वरसाधारण**मिति । **स्वरसाधारणं** चतुर्धा, **चतुः**प्रकारम्—काकलिसाधारणम्, अन्तरसाधारणं, षड्जसाधारणं, मध्यमसाधारणं चेति । वक्ष्यमाणलक्षणस्य साधारण्यस्य कथं समानशब्दपर्यायिशब्दवाच्यत्वम्? अत आह—**साधारण** इति । **काकली** स्वरः **षड्जनिषादयः साधारणः;** तुल्यावस्थितिर्भवति, निषादस्य षड्जस्य च श्रुतिद्वयग्रहणात् । अतः कारणात् तस्य काकलिन उभयोः निषादषड्जयोः यत् साधारण्यं, तत् साधारणं विदुः संगीतज्ञाः । साधारणशब्दाद् भावे ष्यञ्प्रत्यये साधारणस्य भावः । **साधारण्यमिति** ।। १, २- ।।

**अन्तरस्यापि गमयोरेवं साधारणं मतम् ।। ३ ।।**

**प्रयोज्यौ षड्जमुच्चार्य काकलीधैवतौ क्रमात् ।**
**एवं मध्यममुच्चार्य प्रयुञ्जीतान्तरर्षभौ ।। ४ ।।**

**षड्जकाकलिनौ यद्वोच्चार्य षड्जं पुनर्व्रजेत् ।**
**तत्परान्यतमं चैवं मध्यमं चान्तरस्वरम् ।। ५ ।।**

**प्रयुज्य मध्यमो ग्राह्यस्तत्परान्यतमोऽथवा ।**
**अल्पप्रयोगः सर्वत्र काकली चान्तरः स्वरः ।। ६ ।।**

(क०) **अन्तरस्यापीति । अन्तरस्य;** विकृतत्वेन चतुःश्रुतिकस्य गांधारस्यापि । एवमुक्तप्रकारेण उभयाश्रयत्वेन गमयोः

शुद्धयोः श्रुतिसंबन्धित्वेन साधारणं साधारण्यं मतमिष्टम् । स्वरसाधारणविशेषधर्मत्वेन काकल्यन्तरयोः उपात्तयोः तत्संबन्धवशाद् उद्देशक्रममुल्लङ्घ्यापि तयोः प्रयोगं दर्शयति——**प्रयोज्यावित्यादिना** । **काकलीधैवतावित्ति** । अत्र काकलीति स्त्रीलिङ्गनिर्देशः । **तत्परान्यतममिति** । तस्मात् षड्जात् परेषु स्वरेषु अन्यतमम्, संनिहितः परो यदि लोप्यः स्यात्, तदा तं विहाय तत्संनिहितमेव परमित्यर्थः । काकलिप्रयोगे अभिहितं प्रकारमन्तरप्रयोगेऽप्यतिदिशति——**एवं मध्यममिति** ।। -३-६ ।।

(सु०) काकल्युक्तं साधारणशब्दप्रवृत्तिप्रकारमन्तरेऽप्यतिदिशति——**अन्तरस्यापीति** । **अन्तरः** स्वरो हि गांधारमध्यमयोः साधारणः, गांधारस्य, मध्यमस्य च श्रुतिद्वयग्रहणात् । तस्यान्तरस्य गांधारमध्यमयोः यत् साधारणत्वं तत् साधारणमित्यर्थः । काकल्यन्तरयोः प्रयोगनियममाह——**प्रयोज्याविति** । षड्जमुच्चार्य काकलिधैवतौ प्रयोक्तव्यौ । **क्रमादिति**; अवरोहक्रमात् । ततश्च पूर्वं काकली पश्चाद् धैवतः प्रयोक्तव्यः । एवं मध्यममुच्चार्य अन्तरर्षभौ अवरोहक्रमेण प्रयोक्तव्यौ । एतयोर्विकल्पेनान्यथाप्रयोगनियमं कथयति——**षड्जकाकलिनाविति** । षड्जं काकलिनं च उच्चार्य, ततः पुनः षड्जं व्रजेद् उच्चारयेत् । **तत्परान्यतमं च**, तस्मात् षड्जात्परे ये, ऋषभगांधारमध्यमपञ्चमधैवताः, तेषु अन्यतममेकमुच्चारयेत् । एवं मध्यममन्तरस्वरं च प्रयोज्य उच्चार्य पुनरपि मध्यमो ग्राह्यः । तस्मात् मध्यमात् परे ये पञ्चमधैवतनिषादषड्जर्षभाः तेष्वन्यतमश्च ग्राह्यः । **अल्पप्रयोग** इति । **काकल्यन्तरः स्वरश्च सर्वत्र** जातिरागादौ अल्पप्रयोगः ।। -३-६ ।।

**निषादो यदि षड्जस्य श्रुतिमाद्यां समाश्रयेत् ।**
**ऋषभस्त्वन्तिमां प्रोक्तं षड्जसाधारणं तदा ।। ७ ।।**



**मध्यमस्यापि गपयोरेवं साधारणं मतम् ।**
**साधारणं मध्यमस्य मध्यमग्रामगं ध्रुवम् ।। ८ ।।**
**साधारणे कैशिके ते केशाग्रवदणुत्वतः ।**
**ते एव कैश्चिदुच्येते ग्रामसाधारणे बुधैः ।। ९ ।।**
**एकग्रामोद्भवास्वेकांशासु जातिषु यद्भवेत् ।**
**समानं गानमार्यास्तज्जातिसाधारणं जगुः[1] ।। १० ।।**
**जातिसाधारणं केचिद् रागानेव प्रचक्षते ।**

(क०) एवं काकलिसाधारणम्, अन्तरसाधारणं च सप्रयोगमुक्त्वा, षड्जमध्यमसाधारणे लक्षयति——**निषादो यदीत्यादिना** । स्वरसाधारणचतुष्टयस्यापि ग्रामद्वये प्रसक्तौ, विकृतत्वेऽपि स्वराणां पञ्चश्रुतित्वमनिष्टमिति मत्वा मध्यमसाधारणं मध्यम एव नियमयति——**साधारणं मध्यमस्येति** । षड्जमध्यमसाधारणयोः व्यपदेशान्तरे सप्रवृत्तिनिमित्तं दर्शयति——**साधारणे** इति । **ते साधारणे**; षड्जमध्यमसाधारणे । **केशाग्रवदणुत्वतः**, चतुःश्रुतिकस्य च्युतत्वेन द्विश्रुतिकत्वापत्त्या अल्पत्वात् कैशिके इत्युच्येते । **ते एव**; षड्जमध्यमासाधारणे एव, ग्रामप्रतिनियतत्वात् कैश्चिद् बुधैः ग्रामसाधारणे इत्युच्येते इत्यर्थः । जातिसाधारणं लक्षयति—**एकग्रामेति** । **जातिसाधारणमिति** । जात्योर्वा जातिषु वा वर्णसाम्येन गानस्य यत् साधारणं तदेव तथोक्तम् ।। ७-११- ।।

(सु०) काकलिसाधारणलक्षणम्, अन्तरसाधारणलक्षणं च काकल्यन्तरस्वरलक्षणेनैवोक्तं **मूर्च्छनाप्रकरणे** 'श्रुतिद्वयं चेत् षड्जस्य,

[1] विदुः (D).

इत्यादिना । अतः षड्जसाधारणं मध्यमसाधारणं च लक्षयति––**निषाद** इति । **निषादो यदि षड्जस्याद्यां श्रुतिं** समाश्रयति, **ऋषभश्चान्तिमां श्रुतिं, तदा षड्जसाधारणम् ।** एवं गांधारो यदा मध्यमस्याद्यां श्रुतिं समाश्रयति पञ्चमश्चान्तिमां श्रुतिं, तदा मध्यमसाधारणम् । षड्जसाधारणे निषादस्त्रिश्रुतिर्ऋषभश्चतुःश्रुतिः । मध्यमसाधारणे गांधारस्त्रिश्रुतिः पञ्चमश्चतुःश्रुतिः ।। ७- ।।

साधारणे ग्रामयोर्नियमयति––**साधारणमिति ।** मध्यमसाधारणं मध्यमग्राम एव । [1]साधारणयोर्मध्ये मध्यमग्रामे मध्मसाधारणमेव । ततश्च षड्जग्राम एव षड्जसाधारणमिति गम्यते। **ते द्वे, साधारणे कैशिके** इत्युच्येते। **केशाग्रवदणत्वत** इति कैशिकशब्दस्य प्रवृत्तिनिमित्तं दर्शितम् । **ते एव** षड्जमध्यमसाधारणे **कैश्चिदाचार्यैर्ग्रामसाधारणे** इत्युच्येते ।। ८-९ ।।

जातिसाधारणं लक्षयति––**एकग्रामेति ।** समानग्रामोद्भवासु एकांशस्वरासु **जातिषु यत्समानं गानं भवेत्, तदार्या** मान्या आचार्या भरतादयः **जातिसाधारणम**वादिषुः । मतभेदेनान्यथा जातिसाधारणं लक्षयति–– **जातीति ।** [2]केचिद् रागा एव शुद्धकैशिकमध्यमादयो जातिसाधारणमित्याहुः ।। ७-११- ।।

**इति प्रथमे स्वरगताध्याये पञ्चमं साधारणप्रकरणम् ।। ५ ।।**

---

[1] मध्यमे ग्रामे च साधरणयोर्मध्यमस्य साधारणमेवं (A). [2] केचिद् रागानेव जातिसाधारणमूचिरे केचिद् रागा एव (B).

## ६. वर्णालङ्कारप्रकरणम्

**गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ।**
**स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ।। १ ।।**
**स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ।**
**स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ।। २ ।।**
**एतत् संमिश्रणाद् वर्णः संचारी परिकीर्तितः ।**

(क०) जातिसाधारणनिरूपणे गानसंबन्धित्वेन प्रसक्तं वर्णं सप्रभेदं लक्षयति––**गानक्रियेति ।** गानक्रियाया वर्णत्वं स्वरपदादेः वर्णनाद् विस्तारकरणात् । **एकस्यैवेति ।** एकैकस्येति वा । तत्रादौ 'सासासा रीरीरी' इत्येवमादिप्रयोगः । द्वितीये 'सारीगामा' इत्येवमादिरूपः । **परावन्वर्थनामकाविति ।** परौ आरोह्यवरोहिणौ अन्वर्थनामकौ । 'सरिगमपधनि' इत्यारोहादारोही । 'निधपमगरिस' इत्यवरोहादवरोहीत्येवम् । **एतत्संमिश्रणात्;** एतेषां स्थाय्यादीनां त्रयाणां वर्णानाम् 'सारी सारीगा सनिधा सारीगा' इत्येवं यथायोगं मिश्रणात् संचारी वर्णः परिकीर्तितः । यत्र गानक्रियायां यस्य वर्णस्य बाहुल्यं दृश्यते, तत्र तेन व्यपदेशः कर्तव्य इति मन्तव्यम् ।। १-२- ।।

(सु०) वर्णं लक्षयति––**गानक्रियेति ।** स्वराणां वक्ष्यमाणप्रकारेण गानक्रिया गानकरणम्, उच्चारणमिति यावत् । सा वर्णशब्देनोच्यते । स

च वर्णश्चतुर्धा भवति––**स्थायी, आरोही, अवरोही, संचारी चेति**। तत्र स्थायिवर्णलक्षणमाह––**स्थित्वा स्थित्वेति**। यत्रैकस्यैव स्वरस्य स्थित्वा स्थित्वा विलम्ब्य विलम्ब्य प्रयोग उच्चारणं, स स्थायिवर्णो विज्ञेयः। यथा षड्जस्य[1] 'सासासासा', मध्यमस्य[2] 'मामामामा' इति। परावारोह्यवरोहिवर्णौ, **अन्वर्थनामकौ,**[3] अर्थमनुगतम् अन्वर्थं नाम ययोः तौ अन्वर्थनामकौ। नामार्थ एव तयोर्लक्षणम्––यत्र स्वराणामारोहः स आरोही वर्णः, यत्रावरोहः सोऽवरोही वर्ण इति। एतेषां त्रयाणां संमिश्रणात् परस्परसंचरणात् संचारी वर्ण उक्तः। **मतङ्गेन** एवं संचारिवर्णलक्षणमुक्तम्––

"यत्र [4]ताने संचरन्ति स्वरा अन्त्यान्त्यसंहिताः।
एकैकशो द्विशो वा स संचारी वर्ण उच्यते॥

यथा **मालवकैशिके**––'सा सा स नि [5]म म नि म प नि रि रि पा पनीपानिध' एवमादि"॥ १-२-॥

**विशिष्टं वर्णसंदर्भमलंकारं प्रचक्षते॥ ३॥**
**तस्य [6]भेदास्तु बहवस्तत्र स्थायिगतान् ब्रुवे।**
**येषामाद्यन्तयोरेकः स्वरस्ते स्थायिवर्णगाः॥ ४॥**
**प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्तसंज्ञकः।**
**ततः प्रसन्नमध्यः स्यात् पञ्चमः क्रमरेचितः॥ ५॥**
**प्रस्तारोऽथ प्रसादः स्यात् सप्तैते स्थायिनि स्थिताः।**
**मन्द्रः प्रकरणेऽत्र स्यान्मूर्च्छनाप्रथमः स्वरः॥ ६॥**
**स एव द्विगुणस्तारः पूर्वः पूर्वोऽथवा भवेत्।**
**[7]मन्द्रः परस्ततस्तारः प्रसन्नो मृदुरित्यपि॥ ७॥**

[1] षड्जात् 'सां सा सा सा' (E). [2] मध्यमात् 'मां मा मा मा' (B).
[3] नामानौ (B). [4] गीते (बृ). [5] पनि पनि पनि साधरी पाप निनिनीत्येव (बृ).
[6] भेदा बहुविधाः C, E. [7] मन्द्रः परतरस्तारः (D).



**मन्द्रस्तारस्तु दीप्तः स्यान्मन्द्रो बिन्दुशिरा भवेत्।**
**ऊर्ध्वरेखाशिरास्तारो लिपौ त्रिर्वचनात् प्लुतः॥ ८॥**

(क०) उक्तवर्णग्रथनविशेषरूपमलंकारं प्रतिवर्णं सविभागं लक्षयति––**विशिष्टं वर्णसंदर्भमित्यादिना। वर्णसंदर्भः,** अलंकार इत्येतावत्युक्ते, वर्णविशेषे संचारिणि व्यभिचारः स्यात्; स मा भूदिति विशिष्टमिति विशेषणम्। वैशिष्ट्यं च नियतकलादियुक्तत्वम्। इह प्रसन्नादिप्रभृतीनामलंकारत्वं गीतिरेतैरलंक्रियत इति करणव्युत्पत्त्या, यथा लोके हारादिभिर्नारी, काव्ये वा अनुप्रासादिभी रसादिः तद्वत्। तथा चाह **भरतः** प्रकारान्तरेण––

"शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव।
अविभूषितेव कान्ता गीतिरलंकारहीना स्यात्॥" इति।

**येषामाद्यन्तयोरिति**। येषाम् अलंकाराणाम् **आद्यन्तयोः** कलानाम् उपक्रमोपसंहारयोः **एकः स्वरः,** मूर्च्छनावशेन षड्जादीनां मध्ये यस्तूपक्रान्त उपसंहारे स्थानान्तरगतोऽपि स एवेत्यर्थः। एतेन स्थायिवर्णादिवृत्तिरेतेषु दर्शिता। अतस्ते **स्थायिवर्णगाः;** स्थाय्यलंकाराः। उक्तेष्वेव[1] मन्द्रादिस्थानेषु अलंकारलक्षणार्थं प्रतिमूर्च्छनं तारमन्द्रव्यवहारमन्यथा अनेकधा करोति––**मन्द्रः प्रकरण** इति। द्विगुणोऽष्टमः॥ -३-८॥

(सु०) वर्णमुक्त्वा [2]तदनुगतालंकारलक्षणमाह––**विशिष्टमिति**। [3]केनचिल्लक्षणविशेषेण विशिष्टं वर्णसंदर्भं वर्णसमुदायमलंकारं प्रचक्षते **भरतादयः**। [4]**मतङ्गेनापि** अलंकारस्य लक्षणव्युत्पत्ती कथिते। यथा––

[1] उक्तेऽप्येवं 1 ed. [2] तदनुगतमलं (B). [3] चिद् विशेषेण विशिष्टसंदर्भं (B). [4] मतङ्गेन तु अलंकारलक्षणव्युत्पत्तिः कथितः (B).

"ननु अलंकारशब्देन किमुच्यते, व्युत्पत्तिर्वा तस्य कीदृशी? उच्यते––अलंकारशब्देन मण्डनमुच्यते। यथा कटककेयूरादिनालंकारेण नारी पुरुषो वा मण्डितः शोभामावहेत्, तथा एतैः अलंकारैः प्रसन्नादिभिः अलंकृता वर्णाश्रया गीतिः गातृश्रोतॄणां सुखावहा [1]भवतीति। व्युत्पत्तिश्च यथा––'डुकृञ् करणे' इत्यस्माद्धातोः अलंशब्दपूर्वाद् घञ्प्रत्यये अलंकारशब्दः" इति ।।

तस्य बहुभेदत्वेऽपि कियतांचित्कथनार्थं प्रतिजानीते––**तस्येति**। स्थायिवर्णालंकारान् लक्षयति–**येषामिति**। आदावन्ते च येषामेक एव स्वरः, ते स्थायिवर्णालंकाराः। तान् परिगणयति––**प्रसन्नादिरिति**। एते सप्त स्थायिनि वर्णे स्थिताः, स्थाय्यलंकारा इत्यर्थः। अलंकारप्रकरणोपयोगिनीं परिभाषामाह––**मन्द्र** इति। अत्र अस्मिन् अलंकारप्रकरणे, मूर्च्छनायाः प्रथमः स्वरो मन्द्रशब्देनोच्यते। स एव मूर्च्छनाप्रथमस्वरो द्विगुणः तारशब्देनोच्यते। यदा मूर्च्छनाप्रथमस्वरो मन्द्रो भवति, तदा स एव मध्यस्तारशब्देनोच्यते। यदा तु मूर्च्छनाप्रथमस्वरो मध्यः, तदा स एव तारः तारशब्देनोच्यते।

विकल्पेनान्यथा मन्द्रतारादिशब्दवाच्यत्वमाह––**पूर्वः पूर्व** इति। पूर्वस्थानस्थः स्वरो मन्द्रः, परस्थानस्थस्तार इति। यदा मन्द्रस्थानस्थः [2]पूर्वः तदा मध्यस्थानस्थस्तारः। यदा मध्यस्थानस्थः [3]पूर्वः, तदा तारस्थानस्थस्तारः। अत्र मूर्च्छनादिस्वरेणैव पूर्वेण भवितव्यमिति नियमो नास्तीति पूर्वमुक्तात् पक्षाद्भेदः। मन्द्रतारपर्यायानाह––**प्रसन्न** इति। प्रसन्नमृदुमन्द्रशब्दैः मन्द्रोऽभिधीयते। दीप्ततारशब्दाभ्यां तारः। मन्द्रतारयोः लिपिविशेषं कथयति––**मन्द्र** इति। **लिपौ मन्द्रः** स्वरो **बिन्दुशिराः** शिरसि बिन्दुसहितो लेखनीयः, तारस्तु शिरस्यूर्ध्वरेखया सहितः। [4]**त्रिर्वचनात् स्वरः प्लुत** इत्युच्यते। स त्रिरुच्चारणीय इत्यर्थः ।। ३-८ ।।

[1] शोभां सभते। तयैवेतैरलं (B). [2] पूर्वस्थस्तदा मध्यमस्थान (B). [3] पूर्वस्थस्तदा (B). [4] त्रिर्वचनादियुतः स्वरः (B).



**मन्द्रद्वयात्परे तार प्रसन्नादिरुदीरितः।**

**सं सं सं। (१)**[1]

**तद्वैलोम्ये प्रसन्नान्तः**

**सं सं सं। (२)**[2]

**प्रसन्नद्वयमध्यगे ।। ९ ।।**

**दीप्ते प्रसन्नाद्यन्तः स्यात्**

**सं सं सं। (३)**[3]

**तारयोर्मध्यगे पुनः।**

**मन्द्रे प्रसन्नमध्याख्यमलंकारं विदो[4] विदुः ।। १० ।।**

**सं सं सं। (४)**[5]

**आद्यन्तयोर्मूर्च्छनादिश्चेत् स्वरो[6]ऽन्तर्द्वितीयकः।**
**सैका कलाथ चेन्मध्ये स्तस्तृतीय[7]चतुर्थकौ ।। ११ ।।**
**सा द्वितीया पञ्चमाद्यास्त्रयोऽन्तश्चेत् कला परा।**
**एवं कलात्रयेणोक्तोऽलंकारः क्रमरेचितः ।। १२ ।।**

**संरिसं संगमसं संपधनिसं। (५)**

**[8]दीप्तान्तश्चेत् प्रतिकलं प्रस्तारः सोऽभिधीयते।**

**संरिसं संगमसं संपधनिसं। (६)**

**तारमन्द्रविपर्यासात् तं प्रसादं प्रचक्षते ।। १३ ।।**

**संरिसं संगमसं संपधनिसं। (७)**

[1] इति प्रसन्नादि (D). [2] इति प्रसन्नान्तः (D). [3] इति प्रसन्नाद्यन्तः (D). [4] मलंकारविदो 1 ed. [5] इति प्रसन्नमध्यः (D), मध्यो द्विती 1 ed. [6] मध्ये द्विती (D). [7] ऽथ तृतीय 1 ed. [8] दीप्तोऽन्त 1 ed.

इति स्थायिगतालंकाराः ।

**स्यातां विस्तीर्णनिष्कर्षौ बिन्दुरभ्युच्चयः परः ।**
**हसितप्रेङ्खिताक्षिप्तसंधिप्रच्छा[1]दनास्तथा ।। १४ ।।**
**उद्गीतोद्वाहितौ तद्वत् त्रिवर्णो वेणिरित्यमी ।**
**द्वादशारोहिवर्णस्थालंकाराः परिकीर्तिताः ।। १५ ।।**
**मूर्च्छनादेः स्वराद्यत्र क्रमेणारोहणं भवेत् ।**
**स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णोऽभिधीयते ।। १६ ।।**
**सा री गा मा पा धा नी ।** (१)

(क०) उद्देशक्रमेण त्रिषष्टिमलंकारान् दर्शयति—**मन्द्रद्वयात् पर** इत्यादिना, **त्रिषष्टिरुदिता** मयेत्यन्तेन । इह ग्रन्थकारेण दिङ्मात्रप्रदर्शनार्थम् उत्तरमन्द्रामधिकृत्य प्रसिद्धालंकाराणां प्रस्तारो लिखितः । तद्वन्मूर्च्छनान्तरेष्वपि अलंकारप्रस्तारा द्रष्टव्याः ।। ९-१६ ।।

(सु०) प्रसन्नादि लक्षयति—**मन्द्रद्वयादिति** । मन्द्रस्वरद्वयमुच्चार्य, यदि सकृत् तारस्वर उच्चार्यते, तदा **प्रसन्नादिरलंकारः** । **तद्वैलोम्य** इति । तस्य प्रसन्नादेर्विपरीतत्वे पूर्वं सकृत्तारः, पश्चाद् द्विर्मन्द्रश्चेत्, तदा **प्रसन्नान्तः** । **प्रसन्नद्वयेति** । यदि पूर्वं मन्द्रः पश्चाद्दीप्तः, पुनरपि मन्द्रस्तदा **प्रसन्नाद्यन्तः** । **तारयोरिति** । यदि पूर्वं तारः पश्चान्मद्रः, पुनरपि तारस्तदा **प्रसन्नमध्यः** ।। ९-१० ।।

क्रमरेचित्तं लक्षयति—**आद्यन्तयोरिति** । मूर्च्छनायाः प्रथमः स्वरः, यदि आदावन्ते च तिष्ठति, द्वितीयः स्वरो मध्ये, एवमेका कला; द्वितीय-

[1] दितस्तथा (D).



कलायां तु मूर्च्छनाप्रथमस्वर एवाद्यन्तयोः, मध्ये तृतीयचतुर्थौ; तृतीयस्यां तु कलायां प्रथमः स्वर एवाद्यन्तयोः, मध्ये पञ्चमषष्ठसप्तमस्वराः; एवं कलात्रयेण **क्रमरेचितः**, अलंकारो भवति ।। ११, १२ ।। **दीप्तान्त** इति । क्रमरेचितस्य तिसृष्वपि कलासु यद्यन्तिमो दीप्तो भवति, तदा **प्रस्ताराख्यः** अलंकारः ।।१३-।। **तारेति** । प्रस्तारस्य तारमन्द्रविपर्यासात् **प्रसादालंकारः** । क्रमरेचितस्य कलात्रये पूर्वस्तारः, अन्तिमस्तु मन्द्र एवेति ।। -१३ ।। इति स्थायिगतालंकाराः ।

आरोह्यलंकारान् परिगणयति—**स्यातामिति** ।। १४, १५ ।। विस्तीर्णालंकारं लक्षयति—**मूर्च्छनादेरिति** । मूर्च्छनायाः प्रथमस्वराद् दीर्घैः स्वरैः स्थित्वा स्थित्वा विलम्ब्य विलम्ब्य क्रमेण यत्रारोहणं भवेत्, स **विस्तीर्णालंकारः** । स्वराणां दीर्घत्वाद्विलम्बितत्वाच्च क्रमाद्भेदः ।। ९-१६ ।।

**इति श्रीचतुरकल्लिनाथविरचितायां संगीतरत्नाकरव्याख्यायां कलानिध्याख्यायां वर्णालंकारप्रकरणम् ।। ६ ।।**

**ह्रस्वैः स्वरैः स निष्कर्षो द्विर्द्विरुक्तैर्निरन्तरैः ।**
**सस रिरि गग मम पप धध निनि ।** (२)
**त्रिश्चतुर्वा स्वरोच्चारे[1] गात्रवर्णमिमं विदुः ।। १७ ।।**
**ससस रिरिरि गगग ममम पपप धधध निनिनि ।।**
**सससस रिरिरिरि गगगग मममम पपपप धधधध निनिनिनि ।** (२)[2]
**निष्कर्षस्यैव भेदौ द्वौ केचिदेतौ बभाषिरे ।**
**प्लुतं ह्रस्वं प्लुतं ह्रस्वं प्लुतं ह्रस्वं प्लुतं स्वरम् ।। १८ ।।**

[1] च्चारैः (D). [2] एतौ द्वौ गात्रवर्णभेदौ इति मतान्तरे निष्कर्षभेदौ (D).

**कुर्वन् क्रमाद्यदारोहेत् तदा[1] बिन्दुरयं मतः ।**

**[2]स३रि ग३म प३ध नि३ । (३)**

**एकान्तरस्वरारोहमाहुरभ्युच्चयं[3] बुधाः ।। १९ ।।**

**स ग प नि । (४)**

**यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः ।**

**आरुह्यन्ते स्वराः प्राह हसितं तं शिवप्रियः ।। २० ।।**

**[4]स रिरि गगग मममम पपपपप धधधधधध निनिनिनि-निनिनि । (५)**

(सु०) **ह्रस्वैरिति ।** ह्रस्वैः स्वरैः द्विर्द्विरुक्तैः क्रमेणोच्चारितैः **निष्कर्षालंकारः** ।। १७- ।। **त्रिरिति ।** स्वराणां त्रिश्चतुर्वोच्चारणे **गात्र-वर्णालंकारः** ।। -१७ ।। मतान्तरेण गात्रवर्णस्य निष्कर्षान्तर्भावमाह— **निष्कर्षस्यैवेति । एतौ द्वौ भेदौ** त्रिश्चतुःस्वरोच्चारणरूपौ ।। १९- ।। **प्लुतमिति ।** प्रथमस्वरं त्रिरुच्चार्य द्वितीयस्वरं सकृत्, तृतीयस्वरं त्रिः, चतुर्थस्वरं सकृत्, पञ्चमस्वरं त्रिः, षष्ठस्वरं सकृत्, सप्तमस्वरं त्रिरुच्चारयेत्, तदा **विन्द्वाख्यः** अलंकारः ।। -१८, १९- ।। **एकान्तरेति ।** एकान्तरस्वरारोहणेन **अभ्युच्चयाख्यः** अलंकारः ।। -१९ ।।

**यत्रेति ।** यत्र स्वराणामेकोत्तरवृद्ध्या आवृत्तिः, प्रथमः स्वरः सकृत्, द्वितीयो द्विः, तृतीयस्त्रिः, चतुर्थश्चतुः, पञ्चमः पञ्चकृत्वः, षष्ठः षट्कृत्वः, सप्तमः सप्तकृत्व उच्चार्यते तमलंकारं शिवप्रियः शार्ङ्गदेवो [5]**हसितमिति** ब्रूते ।। २० ।।

[1] ततो 1 ed. [2] सासासा रि गागागा म पापापा ध्र निनिनि 1 ed, ससस रि, गगग म, पपप ध, निनिनि । (सु०). [3] रभ्युच्छ्रयम् (संगीतपारिजाते) (A.L.) 1 ed. [4] सा रीरी गागागा मामामामा पापापापापा धाधाधाधाधाधा नीनीनीनीनीनीनी 1 ed. [5] प्रहसितमिति (B).



**स्वरद्वयं समुच्चार्य [1]पूर्वं पूर्वयुतं परम् ।**

**यदान्दोलितमारोहेत् प्रेङ्खितो ऽसौ क्रमोऽथवा ।। २१ ।।**

**[2]सरि रिग गम मप पध धनि । (६)**

**एकान्तरं स्वरयुगं तादृक् पूर्वयुतं परम् ।**

**क्रमादारोहति यदा तदाक्षिप्तं प्रचक्षते ।। २२ ।।**

**[3]सग गप पनि । (७)**

**त्रिस्वराद्या कलान्ये च [4]पूर्वपूर्वान्तिमादिमे ।**

**कले स्तस्त्रिस्वरे यत्र संधिप्रच्छा[5]दनस्तु सः ।। २३ ।।**

**[6]सरिग गमप पधनि । (८)**

**[7]यदाद्याद्यस्त्रिरावृत्तः कलयोस्त्रिस्वरात्मनोः ।**

**तदोद्गीतः**

**[8]सससरिग मममपध । (९)**

**मध्यमेन तादृशोद्वाहितो मतः ।। २४ ।।**

**सरिरिरिग मपपपध[9] । (१०)**

**अन्त्यस्य तु त्रिरावृत्तौ त्रिवर्णं वर्णयन्त्यमुम् ।**

**सरिगगग[10] मपधधध । (११)**

**त्रयाणां तु त्रिरावृत्तौ पृथग्वेणिरुदीरितः[11] ।। २५ ।।**

[1] पूर्वं पूर्वं 1 ed. [2] सरी रिगा गमा मपा पधा धनी 1 ed. [3] सगा गपा पनी 1 ed. [4] पूर्वा पूर्वान्तिमाऽऽदिमे 1 ed; पूर्वपूर्वस्वादिमे (D). [5] दितस्तु (D). [6] सरिगा गमपा पधनी 1 ed. [7] यद्याद्यस्त्रिस्त्रिरावृत्तः 1 ed. [8] सससरिगा मममपधा 1 ed; ङ. सससरिगा मममपधनि fn. 1 ed. [9] सरिरि-रिगा मपपपधा 1 ed. [10] गा धा 1 ed. [11] रिता 1 ed.

[1]**ससस रिरिरि गगग, ममम पपप [2]धधध ।** (१२)

इत्यारोह्यलंकाराः ।

**अवरोहक्रमादेते द्वादशाप्यवरोहिणि ।**

इत्यवरोह्यलंकाराः ।

(सु०) **स्वरद्वयमिति** । पूर्वं स्वरद्वयमुच्चार्य, **परं पूर्वयुतम्,** पूर्वापेक्षया परो द्वितीयः स्वरः तद्युतं परं तृतीयमारोहेत् । [3]पुनरपि तृतीययुतं चतुर्थं, चतुर्थयुतं पञ्चमं, पञ्चमयुतं षष्ठं, षष्ठयुतं सप्तममान्दोलयन्यदा आरोहति, तदा असौ अलंकारः **प्रेङ्खित**नामा **अथवा क्रम**नामा भवति ।। २१ ।।

आक्षिप्तं लक्षयति––**एकान्तरमिति** । पूर्वोक्तरीत्या यदैकान्तरं स्वरयुगमारोहति, प्रथमसहितं तृतीयं, तृतीयसहितं पञ्चमं, पञ्चमसहितं सप्तमं, यदा आरोहति, तदा **आक्षिप्तालंकारः** ।। २२ ।। संधिप्रच्छादनं लक्षयति––**त्रिस्वरेति । आद्या कला त्रिस्वरा, अन्ये द्वे कले पूर्वपूर्वान्तिमादिमे** पूर्वस्याः पूर्वस्याः कलाया य अन्तिमः स्वरः, स आदिमो ययोः ते तथाविधे त्रिस्वरे यस्मिन् स त्रिकलः **संधिप्रच्छादनः** ।। २३ ।।

उद्गीतं लक्षयति––[4]**यदेति** । त्रिस्वरयोः कल[5]योर्यदा आद्याद्यः स्वरस्त्रिरावर्तते[6] तदा [7]उद्**गीताख्यः**, अलंकारः । एतस्मिन्नलंकारे मूर्च्छनायाः षडेव स्वरा व्याप्यन्ते । **सप्तमस्य** समाप्तिर्नास्ति ।। २४ ।। अधुनोद्वाहितं वर्णयति––**मध्यमेनेति** । त्रिस्वरयोः कलयोः मध्यमेन स्वरेण तादृशा[8] त्रिरावृत्तेन तु**द्वाहिताख्यः** अलंकारः ।। २४- ।। त्रिवर्णं लक्षयति ––**अन्त्यस्येति**[9] । त्रिस्वरयोः कलयोः अन्त्यस्य त्रिरावृत्तौ **त्रिवर्णाख्यः**

[1] सरिग सरिग सरिग, मपध मपध मपध (D). [2] धधध निनिनि 1 ed. [3] तृतीययुतं पुनश्चतुर्थं (B). [4] यदिति (B). [5] योर्यदि आद्यः (B). [6] वर्त्यते (B). [7] ऊर्ध्वगीता (B). [8] तादृशी (B). [9] अन्तस्येति (B),



अलंकारः ।। २५- ।। पृथग्वेणिमाचष्टे––**त्रयाणमिति** । त्रिस्वरयोः कलयोः त्रयाणामपि स्वराणां त्रिरावृत्तौ **पृथग्वेणिरलंकारः** । एतेषु त्रिष्वपि अलंकारेषु सप्तस्वरावृत्तिर्नास्ति ।। २५ ।। इत्यारोह्यलंकाराः ।।

अवरोह्यलंकारान् लक्षयति––**अवरोहेति** । एत [1]एवावरोहक्रमेणोच्चारिता अवरोह्यलंकारा भवन्ति ।। २६- ।। इत्यवरोह्यलंकाराः ।। २१-२६- ।।

**संचार्यलंकाराः––**

**मन्द्रादिर्मन्द्रमध्यश्च मन्द्रान्तः स्यादतः परम् ।। २६ ।।**
**प्रस्तारश्च प्रसादो ऽथ व्यावृत्तस्खलितावपि[2] ।**
[3]**परिवर्ताक्षेपबिन्दूद्वाहितोर्मिसमास्तथा ।। २७ ।।**
[4]**प्रेङ्खनिष्कूजितश्येनक्रमो[5]द्घट्टितरञ्जिताः ।**
**संनिवृत्तप्रवृत्तोऽथ वेणुश्च ललितस्वरः ।। २८ ।।**
**हुंकारो ह्लादमानश्च ततः स्यादवलोकितः ।**
**स्युः संचारिण्यलंकाराः पञ्चविंशतिरित्यमी ।। २९ ।।**
**त्रिस्वराद्या कलैकैक[6]मन्द्रत्यागेन चापराः ।**
**त्रिस्वराश्चेत् कला मन्द्राद्या[7]मन्द्रादिस्तदा भवेत् ।। ३० ।।**

[8]**सगरि रिमग गपम मधप पनिध ।** (१)

**ताः कला मन्द्रमध्यान्ताः[9] क्रमाच्चेदपरौ तदा ।**

**मन्द्रमध्यो यथा––**

[10]**गसरि मरिग पगम धमप निपध ।** (२)

[1] एव वैपरीत्योच्चारिता (B). [2] स्खलिता इव (D). [3] क. ख. ग. ङ. परिवृत्ताक्षे fn. 1 ed. [4] प्रेङ्खो निष्कूजितस्तेन (D). [5] द्घटित 1 ed. [6] मध्ये त्यागेन (D). [7] न्द्राद्यो (D). [8] सगरी रिमगा गपमा मधपा पनिधा 1 ed. [9] मध्यान्त्याः 1 ed. [10] गसरी मरिगा पगमा धमपा निपधा 1 ed.

**मन्द्रान्तो यथा--**

**[1]रिगस गमरि मपग पधम धनिप । (३)**

**त्यक्ता[2]न्तरं स्वरयुगं त्यक्तादारभ्यते पुनः[3] ।। ३१ ।।**

**युगं तादृक्समारोहेत् तदा[4] प्रस्तार उच्यते ।**

**[5]सग रिम गप मध पनि । (४)**

(सु०) संचार्यलंकारान् परिगणयति--**मन्द्रादिरिति** । मन्द्राद्यादयः पञ्चविंशतिरलंकाराः संचारिणः ।। २६-२९ ।। तत्र मन्द्रादिं लक्षयति--**त्रिस्वरेति** । **आद्या कला त्रिस्वराः** प्रथम[6]तृतीयद्वितीयस्वरयुक्ताः, अन्या अपि **मन्द्राद्याः कला एकैकमन्द्रत्यागेन** यदि भवन्ति **तदा मन्द्रादिर**लंकारः ।। ३० ।।

मन्द्रमध्यमन्द्रान्तौ लक्षयति--**ता** इति । तास्वेव पञ्चसु कलासु मन्द्रो मध्ये भवति चेत्, मध्यश्चादौ तदा **मन्द्रमध्योऽलंकारः** । तास्वेव मन्द्रः अन्ते भवति चेत्; तदन्तिमश्चादौ तदा **मन्द्रान्तोऽलंकारः** ।। ३१- ।। प्रस्तारं लक्षयति--**त्यक्तान्तरमि**ति । [7]**त्यक्तान्तरं** स्वरयुगं प्रथमतृतीयस्वरयुगमारुह्य [8]त्यक्ताद् द्वितीयस्वरादारभ्य तादृक्त्यक्तान्तरं स्वरयुगं द्वितीयचतुर्थस्वरयुगम्, एवं तृतीयपञ्चमस्वरयुगं, चतुर्थषष्ठस्वरयुगं, पञ्चमसप्तमस्वरयुगं च यद्यारोहति, तदा **प्रस्ताराख्योऽलंकारः** ।। -३१-३२- ।।

**पूर्वः पूर्वः परस्योर्ध्वाधोवर्ती क्रियते स्वरः ।। ३२ ।।**

[1] रिगसा गमरी मपगा पधमा धनिपा 1 ed, गरिस मगरि पमग धपम निधप (D). [2] न्तरस्वर (D). [3] दारभ्य चेत्पुनः 1 ed. [4] तादृक् (D). [5] सगा रिमा गपा मधा पनी 1 ed. [6] द्वितीयतृतीयस्वर (B). [7] एकान्तरं स्वर (B). [8] चतुर्थ द्वितीय (B).



**यदा तदा प्रसादं तमाह श्रीकरणेश्वरः ।**

**[1]सरिस रिगरि मगम मपम पधप धनिध । (५)**

**चतुःस्वरा कला तत्रा[2]द्यात्तृतीयं द्वितीयकात् ।। ३३ ।।**

**तुर्यं गत्वादिमं गच्छेदेवमेकैकहानतः ।**

**चतुः[3]स्वरा परा यत्र स व्यावृत्तः स्मृतो बुधैः ।। ३४ ।।**

**[4]सगरिमस रिमगपरि गपमधग मधपनिम । (६)**

**[5]कलां प्रयुज्य मन्द्रादेर्द्विरुक्तोर्ध्वस्वरान्विताम्[6] ।**

**[7]अवरुह्येत चेदेष स्खलिताख्यस्तदा भवेत् ।। ३५ ।।**

**[8]सगरिममरिगस रिमगपपगमरि गपमधधमपग मधपनिनिपधम । (७)**

**स्वरं द्वितीयमुज्झित्वा त्रिस्वराद्या कला यदि ।**

**त्यक्तादारभ्य तादृश्यो ऽन्यास्तदा परिवर्तकः ।। ३६ ।।**

**[9]सगम रिमप गपध मधनि । (८)**

**त्रिस्वराश्चेत् कलाः पूर्वपूर्वत्यागोर्ध्वसंक्रमैः ।**

**तदाक्षेपः**

**[10]सरिग रिगम गमप मपध पधनि । (९)**

[1] सरिसा रिगरी गमगा मपमा पधपा धनिधा 1 ed. [2] द्यतृतीयद्वि (D). द्या तृतीयं 1 ed. [3] स्वराः परा 1 ed, स्वरा परो (D). [4] सागरि मासरीमगपारी गापमधागा माधपनीमा 1 ed, सगरिमसा रिमगपरी गपमधगा मधपनिमा (D). [5] कलाः (D). [6] न्विताः (D). [7] अवरोहेत (D). [8] सगरिमा मरिगसा। रिमगपा पगमरी। गपमधा धमपगा। मधपनी निपधमा (D). [9] सगमा रिमपा गपधा मधनी 1 ed. [10] सरिगा रिगमा गमपा मपधा पधनी 1 ed.

(सु०) प्रसादं लक्षयति । **पूर्व** इति । **पूर्वः** पूर्वः स्वरः परस्य द्वितीयस्वरस्य ऊर्ध्वाधोवर्त्याद्यन्तवर्ती यदि क्रियते, तदा **प्रसादाख्योऽलंकारः** ।।-३२,३३-।। व्यावृत्तं लक्षयति—**चतुःस्वरेति** । एतस्मिन् कला चतुःस्वरा । तस्याः प्रथमतृतीयद्वितीयचतुर्थाद्याः स्वरा उच्चार्याः, प्रथमस्वरपरित्यागेनान्यदेवमेव कलात्रयं यत्र, स [1]**व्यावृत्ताख्योऽलंकारः** ।। -३३, ३४ ।। स्खलितं, लक्षयति—**कलामिति** । मन्द्रादेरलंकारस्य प्रथमतृतीयद्वितीयस्वरयुक्तां त्रिस्वरां कलां प्रयुज्य ऊर्ध्वं स्वरं चतुर्थं स्वरं द्विरुच्चार्य सकलावरोहेण चेद् उच्चार्येत, तदा अष्टस्वरकलः [2]**स्खलिताख्योऽलंकारः** ।। ३५ ।। परिवर्तकं लक्षयति—**स्वरमिति** । द्वितीयस्वरमुज्झित्वा प्रथमतृतीयचतुर्थस्वरैः त्रिस्वरा प्रथमा कला,[3] त्यक्ताद् द्वितीयस्वरादारभ्य एवमेवान्याः[4] कला यत्र स [5]**परिवर्तकाख्योऽलंकारः** ।। ३६ ।। आक्षेपं लक्षयति—**त्रिस्वरा** इति । त्रिस्वराः कलाः पूर्वपूर्वपरित्यागेन ऊर्ध्वस्वरव्याप्त्या च यदि क्रियन्ते, तदा आक्षेपालंकारः ।। -३२-३६- ।।

**अथ बिन्दुः स[6] यत्र प्लुतमधःस्वरम् ।। ३७ ।।**
**[7]कृत्वा[8]ग्निवत् परं स्पृष्ट्वाधःस्पर्शेनाखिलाः कलाः ।**
**[9]स३ रिस रि३ गरि ग३ मग म३पम प३ धप**
**ध३निध (१०)**
**कलायां त्रीन् स्वरान् गीत्वावरुह्यैकं पराः कलाः ।। ३८ ।।**
**यत्रैकैकोज्झिता गीतास्तद्वदुद्वाहितस्तु सः ।**
**[10]सरिगरि रिगमग गमपम मपधप पधनिध । (११)**

[1] तदा सा आवृत्ता (B). [2] **वलिताख्यो** (B). [3] कलां त्यक्त्वा (B). [4] वान्या (B). [5] परिवर्तिताख्यो (B). [6] स्याद् (D). [7] दृष्ट्वा (D). [8] ऽग्रिमस्वरं 1 ed [9] सासासारिसा रीरीरीगरी गागागामगा मामामापमा पापापाधपा धाधाधानिधा 1 ed. [10] सरिगरी रिगमगा गमपमा मपधपा पधनिधा 1 ed.



**मूर्च्छनादेः स्वरात् तुर्यं प्लुतीकृत्याद्यमेत्य च ।। ३९ ।।**
**[1]तुर्यगाने कलैकैकहानाद्यत्रापरास्तथा[2] ।**
**स ऊर्मिः स्यात्**
**[3]सम३सम रिप३रिप गध३गध मनि३मनि । (१२)**
**स तु समः कला यत्र चतुःस्वराः ।। ४० ।।**
**[4]तुल्यारोहाव[5]रोहैकैकहानादपरास्तथा ।**
**[6]सरिगममगरिस रिगमपपमगरि गमपधधपमग मपधनिनिधपम । (१३)**

(सु०) बिन्दुं लक्षयति—**अथ बिन्दुरिति** । **अधःस्वरं** पूर्वस्वरं **प्लुतं कृत्वा** त्रिरुच्चार्य, **परं** द्वितीय**मग्निवत्** सकृत् **स्पृष्ट्वा** आद्यः सकृदुच्चारणीयः, एवं द्वितीयस्वराद्याः पञ्चस्वराः कला यत्र, स **बिन्द्वाख्योऽलंकारः** ।। -३७, ३८- ।। उद्वाहितं लक्षयति—**कलायामिति** । त्रीन् स्वरान् गीत्वा, एकं स्वरमवरोहेत्; पूर्वस्वरपरित्यागेन एवमेव द्वितीयस्वराद्या अन्याः कलाः तदा **उद्वाहिताख्योऽलंकारः** ।। -३८, ३९- ।।

ऊर्मिं लक्षयति—मूर्च्छनादेरिति । [7]मूर्च्छनादेः स्वरात् तुरीयं चतुर्थं स्वरं प्लुतीकृत्य त्रिरुच्चार्य, आद्यं सकृद्गीत्वा, पुनरपि चतुर्थं स्वरं सकृद्गायेत्, प्रथमस्वरपरित्यागेन च एवमेवान्याः कला यत्र, स **ऊर्म्यलंकारः** ।। -३९, ४०- ।। समं लक्षयति—स **तु सम** इति । यस्मिन् कलायां चत्वारः स्वराः क्रमेण आरुह्यन्ते अवरुह्यन्ते च, अन्या अपि कलाः प्रथमैकैकस्वरपरित्यागेन, स **समाख्योऽलंकारः** ।। -३७-४१- ।।

[1] तूर्यगाने 1 ed. [2] ङ. स्तदा fn. 1 ed. [3] मामामासमा पापापारिपा धाधाधागधा नीनीनीमनी 1 ed; समामामा समा रिपापापा रिपा गधाधाधागधा मनीनीनीमनी (D). [4] ङ. साम्यारो fn. 1 ed. [5] रोहैकहानाद्यत्रापरा (D). [6] सरिगमा मगरिसा, रिगमपा पमगरी, गमपधा धपमगा, मपधनी निधपमा 1 ed, (D). [7] मूर्च्छनाद्यस्वरात् (B).

**कला गतागतवती द्विस्वरैकैकहानतः ।। ४१ ।।**

**यत्रान्यास्तादृशः स स्यात् प्रेङ्खः**

**[1]सरिरिस रिगगरि गममग मपपम पधधप धनिनिध । (१४)**

**निष्कूजितः पुनः ।**

**प्रसादस्य कलां गीत्वा तत्कलादेस्तृतीयकम् ।। ४२ ।।**

**गत्वाद्यगानाद्भवति**

**[2]सरिसगस रिगरिमरि गमगपग मपमधम पधपनिप । (१५)**

**श्येनः संवादियुग्मकैः ।**

**क्रमात् सरिगमाद्यैः स्यात्**

**सप रिध गनि मसं । (१६)**

**कला द्वित्रिचतुःस्वराः ।। ४३ ।।**

**आद्यस्वराद्यास्तिस्रः स्युर्द्वितीयाद्यादयस्तथा ।**

**यत्रासौ क्रम इत्युक्तः**

**[3]सरि सरिग, सरिगम, रिग रिगम रिगमप, गम गमप गमपध, मप मपध मपधनि । (१७)**

(सु०) प्रेङ्खं लक्षयति—**कलेति**। द्विस्वरा कला, गतागते आरुह्यते अवरुह्यते चेति आरोहावरोहौ तद्वती, प्रथमैकैकस्वरपरित्यागाच्च अन्याः कला यत्र, स **प्रेङ्खो ऽलंकारः** ।। -४१, ४२- ।। निष्कूजितं लक्षयति—[4]**निष्कूजित** इति। प्रसादालंकारस्य कलां प्रथमद्वितीयप्रथमस्वर-

[1] सरीरिसा रिगागरी गमामगा मपापमा पधाधपा धनीनिधा 1 ed. [2] सरिसागसा रिगरीमरी गमगापगा मपमाधमा पधपानिपा 1 ed, [3] सरि सरिग सरिगमा। रिग रिगम रिगमपा। गम गमप गमपधा। मप मपध मपधनी 1 ed. [4] निस्फूर्जित (B).



युक्तां गीत्वा आदिस्वरात्तृतीयं, तत आद्यं यदि गायेत् तदा [1]**निष्कूजितालंकारः** ।। -४२, ४३- ।।

श्येनं लक्षयति—**श्येन** इति। संवादिनां युग्मचतुष्टयेन षड्जर्षभगांधारमध्यमादिना **श्येनालंकारः**। अत्र षड्जपञ्चमयोः ऋषभधैवतयोः गांधारनिषादयोः मध्यमषड्जयोश्च युग्मचतुष्टयम् ।। -४३, ४४- ।। क्रमाख्यमलंकारं लक्षयति—**कला** इति। प्रथमस्वरमारभ्य तिस्रः कला गेयाः। एका द्विस्वरा, एका त्रिस्वरा, एका चतुःस्वराः। एवं द्वितीयतृतीयचतुर्थस्वरमारभ्य तिस्रः कला यत्र गीयन्ते, स **क्रमाख्योऽलंकारः** ।। -४४, ४५- ।।

**स तूद्घट्टित उच्यते ।। ४४ ।।**

**यत्र स्वरद्वयं गीत्वा पञ्चमाच्चतुरः स्वरान् ।**

**[2]अवरोहेत् कला गायेत् तथैकै[3]कोज्झनात् पराः ।। ४५ ।।**

**[4]सरिपमगरि रिगधपमग गमनिधपम । (१८)**

**द्विरुक्ता यदि मन्द्रान्ता मन्द्रादेः स्युः कलास्तदा ।**

**रञ्जितः**

**[5]सगरिसगरिस रिमगरिमगरि गपमगपमग मधपमधपम पनिधपनिधप । (१९)**

**अथ भवेदेष संनिवृत्तप्रवृत्तकः ।। ४६ ।।**

**यत्राद्यपञ्चमौ गीत्वा [6]तुर्यात् त्रीनवरोहति ।**

[1] **निस्फूर्जिता**लंकारः (B). [2] अवरोहकलां 1 ed; अवरोहेत् कलां यत्र चैकैको रिषभात्पराः (D). [3] ङ. कोज्झितात्परः fn. 1 ed, कोज्झनात्परः:1 ed. [4] सरिपमगरी रिगधपमगा गमनिधपमा 1 ed, (D). [5] सगरि सगरि सा। रिमग रिमग री। गपम गपम गा। मधप मधप मा। पनिध पनिध पा 1 ed. [6] तुर्यास्त्री 1 ed.

**क्रमात् कला सा यत्रान्यास्तद्वदेकैकहानतः ।। ४७ ।।**

[1]**सपमगरि रिधपगमग गनिधपम ।** (२०)

**यत्राद्यः स्याद् द्विर्द्वितीयचतुर्थकतृतीयकाः ।**

**सकृत्कलान्याश्चैकैकहानाद्वेणुरसौ मतः ।। ४८ ।।**

[2]**ससरिमग रिरिगपम गगमधप ममपनिध ।** (२१)

**गीत्वाद्यौ द्वौ चतुर्थं च** [3]**यस्यां ताववरोहति ।**

**सा** [4]**कलान्याश्च तादृश्यो यत्रासौ ललितस्वरः ।। ४९ ।।**

[5]**सरिमरिस रिगपगरि गमधमग मपनिपम ।** (२२)

**आदिमेन कला यत्र द्विस्वराद्या गतागतैः ।**

**स्वरैरेकोत्तरं वृद्धैः स हुंकारो निगद्यते ।। ५० ।।**

[6]**सरिस सरिगरिस**[7] **सरिगमगरिस**[8] **सरिगमपमगरिस**[9]

**सरिगमपधपमगरिस**[10] **सरिगमपधनिधपमगरिस**[11] **।** (२३)

**ह्लादमाने प्रसन्नान्ता मन्द्रादेस्तु कला मतः ।**

**सगरिस**[12] **रिमगरि**[13] **गपमग**[14] **मधपम**[15] **पनिधप**[16] **।** (२४)

(सु०) उद्घट्टितं लक्षयति—**सत्विति** । आदित आरभ्य **स्वरद्वयं गीत्वा पञ्चमस्वराच्चतुरः स्वरानवरोहेत्** एवं द्वितीयं **तृतीयं** च स्वरमारभ्य, इत्येवं कलात्रयं यत्र, स **उद्घट्टिताख्योऽलंकारः** ।। -४४, ४५ ।।

[1] सपा मगरी, रिधा पमगा, गनी धपमा 1 ed. [2] सा सरि मागा, रिगरी पामा, गा गम धापा, मा मप नीधा 1 ed, (D). [3] यस्यान्ताव 1 ed. [4] कलादेश्च (D). [5] सारी मरी सा, रीगा पगा री, गामा धमा गा, मापा निपा मा 1 ed, (D). [6] सा सरिसा. [7] सा. [8] सा. [9] सा. [10] सा. [11] सा 1 ed, (D). [12] सा. [13] री. [14] गा. [15] मा. [16] पा 1 ed.



रञ्जितं लक्षयति—**द्विरुक्ता** इति । **मन्द्रादेः** प्रथमतृतीयद्वितीयस्वर**युक्तस्य कला** यदि द्विरुच्चार्यते, अन्ते च मन्द्रो मूर्च्छनाप्रथमस्वरो निक्षिप्यते, तदा **रञ्जिताख्योऽलंकारः** ।। ४६- ।।

संनिवृत्तप्रवृत्तकं लक्षयति—**अथ भवेदिति** । यत्र प्रथमं पञ्चमं च स्वरं गीत्वा, तुर्यात् स्वरात् त्रीन् स्वरानवरोहेण गायेत्, एवमेका कला, प्रथमैकैकस्वरपरित्यागाच्च अन्यत्कलाद्वयम्, स [1]**संनिवृत्तप्रवृत्ताख्योऽलंकारः** ।। -४६, ४७- ।। वेणुं लक्षयति—**यत्रेति** । यस्मिन्नाद्यः स्वरो द्विर्गीयते,[2] द्वितीयचतुर्थतृतीय[3]स्वराश्च सकृद्गीयन्ते सैका कला, प्रथमैकस्वरपरित्यागाच्चान्याः कलाः, [4]स **वेणुरलंकारः** ।। ४८ ।। ललितस्वरं लक्षयति—**गीत्वेति** । प्रथमस्वरद्वयं गीत्वा, तदनन्तरं चतुर्थं गीत्वा, तौ प्रथमद्वितीयाववरोहेत् । सैका कला भवति । अन्याश्च द्वितीयतृतीयतुर्यस्वराद्यास्तिस्रः कलाः । स [5]**ललितस्वराख्योऽलंकारः** ।। ४९ ।।

हुंकारं लक्षयति—**आदिमेनेति** । **आदिमेन** प्रथमेन स्वरेण **द्विस्वराः कला गतागतैरा**रोहावरोहैः, ततस्त्रिस्वराः, ततश्चतुःस्वराः, ततः पञ्चस्वराः, ततः षट्स्वराः, ततः सप्तस्वराः, आरोहावरोहैर्यत्र गीयन्ते, स **हुंकाराख्योऽलंकारः** ।। ५० ।। ह्लादमानं लक्षयति—**ह्लादमान** इति । **मन्द्रादेः** प्रथमद्वितीयतृतीयस्वरयुक्तस्य[6] **प्रसन्नान्ताः**[7] **कला** यदि गीयन्ते, तदा **ह्लादमानाख्योऽलंकारः** ।। ५१- ।।

**यदारोहे ऽवरोहे च** [8]**स्वद्वितीयं परित्यजेत् ।। ५१ ।।**

**चतुः**[9]**स्वरा समकला तदा स्यादवलोकितः ।**

[10]**सगममरिस रिमपपगरि गपधधमग मधनिनिपम ।** (२५)

[1] संनिवृत्तिप्रवृत्तकाख्यो (B). [2] द्यस्वरौ द्विर्गीयेते (B). [3] द्वितीय तृतीय चतुर्थ (B). [4] त्रयं स (B). [5] ललिताख्यो (B). [6] तृतीययुक्ताः (B). [7] प्रथमस्वरान्ता कला (B). [8] स द्विती (D). [9] स्वराः समकलाः (D). [10] सगमा मरिसा, रिमपा पमरी, गपधा धमगा, मधनी निपमा 1 ed.

**[1]एवं संचार्यलंकारा आरोहेण प्रदर्शिताः ।। ५२ ।।**
**एतानेवावरोहेण [2]प्राह श्रीकरणाग्रणीः ।**

इति संचार्यलंकाराः ।

**सप्तालंकाराः––**

**अन्ये ऽपि सप्तालंकारा गीतज्ञैरुपदर्शिताः ।। ५३ ।।**
**तारमन्द्रप्रसन्नश्च मन्द्रतारप्रसन्नकः ।**
**आवर्तकः संप्रदानो [3]विधूतोऽप्युपलोलकः ।। ५४ ।।**
**उल्लासितश्चेति तेषामधुना लक्ष्म कथ्यते ।**
**कलास्तेषां द्वितीयाद्याः पूर्वैकैकप्रहाणतः ।। ५५ ।।**
**अष्टमस्वरपर्यन्तमारुह्याद्यं व्रजेद्यदि ।**
**तारमन्द्रप्रसन्नोऽयमलंकारस्तदोच्यते ।। ५६ ।।**
**संरिगमपधनि[4]ससं । (१)**

(सु०) अवलोकितं लक्षयति––**यदेति** । **यदा** चतुःस्वरा समालंकारस्य कला **आरोहे अवरोहे** च द्वितीयस्वरं परित्यजति, तदा **अवलोकिताख्योऽलंकारः** ।। -५१, ५२- ।। **एवमिति** । **एवम्** अनेन प्रकारेण **संचार्यलंकाराः** आरोहेण कथिताः । एतान् **श्रीकरणाग्रणीः** शार्ङ्गदेवः अवरोहेणापि **प्राह** कथितवान् ।। -५२, ५३- ।। इति संचार्यलंकाराः ।।

गीतज्ञैः प्रदर्शितान् लोकप्रसिद्धान् अन्यान् सप्तालंकारान् कथयति––**अन्येऽपीति** ।। -५३, ५४- ।। लाघवार्थं सर्वेषां साधारणं लक्षणमाह––**कलास्तेषामिति** । एतेषां प्रथमकलालक्षणमेव वक्ष्यति––**द्वितीयस्वराद्याः पूर्वैकैक**स्वरपरित्यागात्कला ज्ञातव्याः ।।-५५ ।। तारमन्द्रप्रसन्नादि विशदयति ––**अष्टमस्वरेति** । प्रथमस्वरमारभ्य अष्टमस्वरपर्यन्तम् [5]आरोहेण गीत्वा प्रथमस्वरं यदि गायेत् तदा **तारमन्द्रप्रसन्नाख्योऽलंकरः** ।। -५१-५६ ।।

[1] एते 1 ed. [2] ङ. निःशङ्कः प्राह सन्मतिः fn, 1 ed. [3] विधुतो 1 ed. [4] सा सा (D). [5] स्वरानवरोहेण (B).



**मन्द्रादष्टममुत्प्लुत्य[1] सप्तकस्यावरोहणे ।**
**मन्द्रतारप्रसन्नाख्यमाह माहेश्वरोत्तमः ।। ५७ ।।**

**[2]संसनिधपमगरिसं । (२)**

**आद्यं द्वितीयमाद्यं च द्विर्द्विर्गीत्वा द्वितीयकम् ।**
**सकृदाद्यं यत् [3]कलायां गायेदावर्तकस्तु सः ।। ५८ ।।**

**ससरिरिससरिस[4] रिरिगगरिरिगरि[5] गगममगगमग[6] ममपपममपम[7] पपधधपपधप[8] धधनिनिधधनिध[9] । (३)**

**एतस्यैव कलान्त्यौ द्वौ स्वरौ संत्यज्य गीयते ।**
**यदा तदा संप्रदानमलंकारं विदुर्बुधाः[10] ।। ५९ ।।**

**ससरिरिसस रिरिगगरिरि गगममगग ममपपमम पपधधपप धधनिनिधध । (४)**

**युग्ममेकान्तरितयोस्त्यक्तादप्येवमेव चेत् ।**
**द्विर्द्विः प्रयुज्येत तदा [11]विधूतो बुधसंमतः ।। ६० ।।**

**सगसग[12] रिमरिम[13] गपगप[14] मधमध[15] पनिपनि[16] । (५)**

(सु०) मन्द्रतारप्रसन्नं लक्षयति––**मन्द्रादिति** । मन्द्रादष्टमस्वरं गीत्वा, यदि सप्तसाद्या सप्त स्वरा अवरोहेण गीयन्ते, तदा मन्द्रतारप्रसन्नाख्यो ऽलंकारः । आवर्तकं लक्षयति––**आद्यमिति** । आद्यं स्वरं द्वितीयं पुनराद्यं च द्विर्द्विवारं गीत्वा यर्नाद्वतीयमाद्यं च यदि सकृद्गायेत् तदा

[1] मुत्पत्य 1 ed. [2] सां सां निधपम गरिसां 1 ed, (D). [3] लाया भवे (D); ङ. लायां गीये fn. 1 ed. [4] सा 1 ed. [5] री 1 ed. [6] गा 1 ed. [7] मा 1 ed. [8] पा 1 ed. [9] धा 1 ed. [10] विदुर्विदः (D). [11] विधुतो 1 ed. [12] गा 1 ed. [13] मा 1 ed. [14] पा 1 ed. [15] धा 1 ed. [16] नी 1 ed.

आवर्तकाख्यो ऽलंकारः । संप्रदानं लक्षयति—**एतस्यैवेति** । एतस्य आवर्तकस्य अन्त्यं स्वरद्वयं विहाय यदि कला गीयन्ते, तदा संप्रदानाख्यो ऽलंकारः । विधूतालंकारं लक्षयति—**युग्ममिति** । एकान्तरितं स्वरद्वयं द्विर्गायेत्; त्यक्तमारभ्यैकान्तरितं स्वरद्वयं द्विर्गायेत्; एवं चतुःस्वरः पञ्चकलो [1]विधूताख्यो ऽलंकारः ।। ५७-६०- ।।

**कलायामाद्ययोर्युग्मं चेत्तृतीयद्वितीययोः ।**
**द्विर्द्विः प्रयुज्यते तज्ज्ञैरुपलोलस्तदोच्यते ।। ६१ ।।**

**सरिसरिगरिगरि[2] रिगरिगमगमग[3] गमगमपमपम[4] मपमपधपधप[5] पधपधनिधनिध[6] ।** (६)

**द्विर्गीत्वाद्यं तृतीयं च प्रथमं च तृतीयकम् ।**
**सकृद्गायेद्यत्कलायां [7]तमुल्लासितमूचिरे ।। ६२ ।।**

**ससगसग[8] रिरिमरिम[9] गगपगप[10] ममधमध[11] पपनिपनि[12] ।** (७)

इति सप्तालंकाराः ।

(सु०) उपलोलं लक्षयति—**कलायामिति** । प्रथमस्वरयोर्युग्मं द्विर्गीत्वा तृतीयद्वितीयस्वरयोर्युग्मं द्विर्गीयते यदा तदा **उपलोलाख्यो** ऽलंकारः । उल्लासितं लक्षयति—**द्विरिति** । यस्य कलायामाद्यं स्वरं द्विर्गीत्वा, [13]तृतीयं प्रथमं पुनस्तृतीयं च सकृद् गीयते तम् **उल्लासितमूचिरे संगीताचार्याः** ।। ६१-६२ ।।

[1] विधुताख्यो (B). [2] री 1 ed. [3] गा 1 ed [4] मा 1 ed. [5] पा 1 ed. [6] धा 1 ed. [7] तदुल्ला 1 ed. [8] गा 1 ed. [9] मा 1 ed, (D). [10] पा 1 ed. [11] धा 1 ed. [12] नी 1 ed. [13] द्वितीय प्रथम तृतीयाः सकृद्गीयन्ते (B).



**इति प्रसिद्धालंकारास्त्रिषष्टिरुदिता मया ।**
**अनन्तत्वात्तु ते शास्त्रे न सामस्त्येन कीर्तिताः ।। ६३ ।।**
**रक्तिलाभः स्वरज्ञानं वर्णाङ्गानां विचित्रता ।**
**इति प्रयोजनान्याहुरलंकारनिरूपणे[1] ।। ६४ ।।**

(क०) ननु कलादिसंनिवेशवशेन प्रत्येकं स्थाय्यादिवर्णसंदर्भणामनन्तत्वादलंकाराणाम् अन्येषामपि संभवे कथं त्रिषष्टिरित्युद्दिश्यते लक्षणनिगमनं चेत्यत आह—**अनन्तत्वादिति** । अलंकारनिरूपणे फलं दर्शयति—**रक्तिलाभ** इति । निरूपणं स्वरूपेण कथनं विशेषलक्षणम् । तेन स्वरूपपरिज्ञाने सति रक्तिलाभादयो भवन्तीत्यर्थः ।। ६३-६४ ।।

(सु०) समस्तालंकारकथनमशक्यमित्याह—**इतीति** । अलंकारप्रयोजनमाह—**रक्तिलाभ** इति । स्वराणां रञ्जकत्वज्ञानं, [2]स्वरूपज्ञानं, स्थाय्यादिवर्णानां[3] वैचित्र्यं च अलंकारनिरूपणे प्रयोजनम् ।। ६३-६४ ।।

**इति प्रथमे स्वरगताध्याये षष्ठं वर्णालंकारप्रकरणम् ।। ६ ।।**

---

[1] ख. ग. निरूपणात् fn. 1 ed. [2] स्वरूपं ज्ञानं च तत् (B). [3] वर्णाङ्गानां (B).

## ७. जातिप्रकरणम्

**शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ।**
**षाड्ज्यार्षभी च गांधारी मध्यमा पञ्चमी तथा ॥ १ ॥**

**धैवती चाथ नैषादी शुद्धतालक्ष्म कथ्यते ।**
**यासां नामस्वरो न्यासो ऽप्यन्यासोंऽशो ग्रहस्तथा ॥ २ ॥**

**तारन्यासविहीनास्ताः पूर्णाः शुद्धाभिधा मताः ।**

(क०) गानक्रियात्मकवर्णालंकारनिरूपणानन्तरम् अलंकार्यतया प्रतीतगीताद्यनुगतत्वेन प्रसक्तानां जातीनां लक्षणम् उद्दिष्टं विवेक्तुकामः तल्लक्ष्यत्वेनाक्षिप्ता जातीः सप्रभेदं लक्षयितुमुद्दिशति—**शुद्धाः स्युरित्यादिना । जातय** इति । यथायोगं ग्रामद्वयाज्जायन्त इति जातयः । अत एव [1]अनित्यतया साकल्येन सामान्यरूपजातिलक्षणाभावे[2]ऽपि अनेकगेयव्यक्तिषु अनुवृत्तत्वमात्रेण गोत्वादिजातिवज्जातय इति वा, गीतजातं तस्योपरञ्जनं वा आभ्यो जायत इति जातय इति वा, जातिशब्दव्युत्पत्तिः **मतङ्गाभिमता** द्रष्टव्या । जातयः शुद्धा वक्ष्यमाणशुद्धत्वलक्षणोपेताः **सप्त** स्युः । **ताः** षड्जादिस्वराभिधाः; षड्जादिस्वराणामभिधा इवाभिधा यासां ता इत्युपमानपूर्वपदो बहुव्रीहिः; यद्वा षड्जादिस्वरवाचकाः षड्जादिशब्दाः प्रकृतित्वेनाभिधाः संज्ञा यासां

[1] नित्यतया 1 ed. [2] लक्षणभावे 1 ed.



ताः । अत्राभिधाशब्दस्यावृत्तिः कर्तव्या । तथैवोद्दिशति—**षाड्जीत्यादिना** ।

तासां शुद्धत्वं किमित्यत आह—**शुद्धतालक्ष्मेति** । यासां षाड्ज्यादीनां नामस्वरः षड्जादिरेव वक्ष्यमाणलक्षणन्यासत्वाद्यवस्थापन्नौ भवति, याश्च तारन्यासविहीनाः तारस्थाने न्यासरहिता[1] इति विशेषनिषेधः शेषाभ्यनुज्ञां गमयतीति मन्द्रमध्यस्थानयोः यथायोगं न्यासविधिरिष्यते । यदपि **भरतेन** 'न्यासः शुद्धासु मन्द्रे[2] स्यात्[3] इत्युक्तं तत्तारनिषेधपरं द्रष्टव्यम् । अन्यथा षाड्ज्यां मध्यषड्जन्यासत्वं मतङ्गोक्तं लक्ष्ये विरुध्येत । **पूर्णाः** सप्तस्वरयुक्ताः । **शुद्धाभिधाः** शुद्धा इति संज्ञा यासां ताः ॥ १-३- ॥

(सु०) जातीर्निरूपयति—**शुद्धाः स्युरिति । शुद्धाः सप्त जातयो** भवन्ति । तासां किं नामेत्यपेक्षायामाह—**ताः षड्जादिस्वराभिधा** इति । षड्जादयः सप्त स्वरास्तासां नाम्नि कारणभूताः । तासां तान्येव स्वरसंबन्धीनि नामानि कथयति—**षाड्जी**ति । तासां शुद्धतालक्षणं प्रतिज्ञाय कथयति—**शुद्धते**ति । यासां जातीनां नामस्वर एव न्यासो ऽप्यन्यासोंऽशो ग्रहश्च भवति, न्यासस्वरश्च तारो न भवति ताः शुद्धा जातयो ज्ञातव्याः । न्यासादिलक्षणं वक्ष्यति ॥ १-३- ॥

**विकृता न्यास[4]वर्जैतल्लक्ष्महीना भवन्त्यमूः ॥ ३ ॥**

(क०) अमूः शुद्धाः षाड्ज्यादय एव । **न्यासवर्जैतल्लक्ष्म[5]हीना** इति । जातीनां शुद्धतायामभिहितेषु नामस्वरस्यैव

[1] न्यासविहीना 1 ed. [2] मन्द्रः 1 ed. [3] न्यास विधावप्यासां मन्द्रो नियमाद् भवति शुद्धासु (ना. शा. २९ अ. काव्यमाला ४२). [4] च. वर्जितालक्ष्म fn. 1 ed. [5] हीनाश्चेदिति 1 ed.

न्यासापन्यासांश[1]ग्रहत्वेषु ससंपूर्णत्वेषु पञ्चसु लक्षणेषु मध्ये न्यास-[2]वर्जं न्यासनियमस्यैकस्य सङ्गं परिहृत्यैतल्लक्ष्मभिरपन्यासांश-ग्रहपूर्णत्वैर्हीना नियतैरेतैर्वर्जिताः[3]। अयमर्थः––नामस्वरमेव न्यासं कृत्वा ऽपन्यासादीन् स्वरान्तराणि कुर्यादिति। एवं कृता यदि, तदा विकृता विकृतावस्थापन्ना भवन्ति; न तु विकृतसंसर्गजातजातिवद्व्यपदेशान्तरभाज इत्यर्थः। अत्र न्यासनियमस्य परित्यागो नेष्टः; तस्मिन्नपि[4] परित्यक्ते सति विकृतासु जात्यन्तरभेदकत्वेन प्रधानभूता[5]वयवाननुवृत्तौ तासां तत्तच्छुद्धजातिभेदत्वप्रतीतिर्न स्यात् ॥ -३ ॥

(सु०) विकृता जातीः कथयति––**विकृता**। इति। न्यासं विनोक्तलक्षणहीना विकृताः। न्यासलक्षणहीनत्वं तारन्यासत्वम्। [6]तत्किं विकृतानां न संभवति? न। तदुक्तं **मतङ्गेन**––"या[7] शुद्धास्तासु [8]नामकारी न्यासो नियमेन मन्द्रो भवति; [9]या विकृतास्तासु नामकारि मन्द्रो भवतीत्यनियमः। तत्र शुद्धानां जातीनां शुद्धत्वं विकृतत्वं च रूपद्वयमस्ति; [10]षड्जकैशिक्यादीनामेकादशजातीनां तु विकृतत्वमेव, न शुद्धत्वम्।' (बृहद्देश्यां २ प्र १६७ श्लोकात्परं दृश्यते) इति। जातिशब्दव्युत्पत्तिस्तु **मतङ्गेनोक्ता**––[11]'श्रुतिस्वरग्रामसमूहाज्जायन्त इति जातयः; यद्वा ग्रहादिभ्यो जायन्त इति जातयः; अथवा जायते रसप्रतीतिः आभ्य इति जातयः; यद्वा सकलस्य रागादेर्जन्महेतुत्वाज्जातयः; अथवा यथा नराणां ब्राह्मणत्वादयो जातयः शुद्धा विकृताश्च, [1]एवमेता [2]अपीति जातयः। (बृहद्देश्यां २ प्र १६५––श्लोकात्परं दृश्यते) इति ॥ -३ ॥

[1] ग्रहत्वसंपूर्णत्वेषु 1 ed. [2] वर्ज्यन्यास 1 ed. [3] नियतं वर्जिताः 1 ed. [4] तस्मिन्नेव (D). [5] वयवा न तु 1 ed. [6] मन्द्रन्यासो विकृतानां न संभवति। तदुक्तं (B). [7] यज्जातयः (वृ. दे). [8] नामकार्योन्यासो (B), नामकारि(?) यो न्थासो (बृ. दे). [9] विकृतासु च नामकविकारी(?) वा मन्द्रो (बृ. दे.) या विकृतास्तासां तारकारी न्यासो मन्द्रो न भवति (B). [10] एकादशानां जातीनां विकृतोद्भवत्वाद् विकृतत्वमेव रूपं भवति (वृ, दे.). [11] श्रुतिग्रहस्वरादिसमूहाज्जायन्ते (बृ. दे.).



**संपूर्णत्वग्रहांशापन्यासेष्वेकैकवर्जनात्।**
**भवन्ति भेदाश्चत्वारो द्वयोस्त्यागे तु षण्मताः ॥ ४ ॥**

**त्यागे त्रयाणां चत्वार एकस्त्यक्ते चतुष्टये।**
**भेदाः पञ्चदशैवैते षाड्ज्याः सद्भिर्निरूपिताः ॥ ५ ॥**

**तत्राष्टौ पूर्णताहीनाः [3]सप्त त्वितरवर्जिताः।**
**द्विधा स्युः पूर्णताहीनाः षाडवौडुवभेदतः[4] ॥ ६ ॥**

**अतो ऽष्टावधिका [5]आर्षभ्यादिष्वौडुवजातिषु।**
**अतस्त्रयोविंशतिधा [6]षट्सु प्रत्येकमीरिताः ॥ ७ ॥**

(क०) न्यासव्यतिरिक्तसंपूर्णत्वादिषु चतुर्षु लक्षणेषु एकद्व्यादिपरित्यागेन संभूतान् भेदान् षाड्ज्यादिषु यथासंभवं परिगणयति––**संपूर्णत्वे**त्यादिना। **एकैकवर्जनादिति** संपूर्णत्वादीनां स्वरूपनिषेधो न [7]क्रियते, जात्यनुत्पत्तिप्रसङ्गात्; अपि तु नियतस्वरपर्युदासात्स्वरान्तरविधिर्ज्ञायते। **भवन्ति भेदाश्चत्वार** इति। संपूर्णत्ववर्जने कृते ग्रहांशापन्यासयुक्त एकः, ग्रहवर्जने संपूर्णत्वांशापन्यासवान् द्वितीयः, अंशवर्जने संपूर्णत्वग्रहापन्यासवां-

[1] एवमत्रापि जाति लक्षणम् (वृ. दे.). [2] अपि। सर्वराग वृत्तित्वाज्जातयः (B). [3] षाडवौहुव भेदतः 1 ed. [4] This line is omitted in 1 ed, बौहुविती कृताः (D). [5] चार्षभ्या (D). [6] ख. ग. षाड्ज्याः प्रत्ये fn. 1 ed, षाड्जाः प्रत्ये (D), भेदाः C. E. [7] करञ्जयति fn. 1 ed.

स्तृतीयः, अपन्यासवर्जने संपूर्णत्वग्रहांशयुक्तश्चतुर्थो भेदः, इति चत्वारो भेदाः । **द्वयोस्त्यागे तु षण्मता** इति । संपूर्णत्वग्रहाभ्यां संपूर्णत्वांशाभ्यां संपूर्णत्वापन्यासाभ्यां ग्रहांशाभ्यां ग्रहापन्यासाभ्यामंशापन्यासाभ्यां त्यक्ताभ्यां षड् भेदा भवन्ति । **त्यागे त्रयाणां चत्वार** इति । संपूर्णत्वग्रहांशैः संपूर्णत्वग्रहापन्यासैः संपूर्णत्वांशापन्यासैर्ग्रहांशापन्यासैस्त्यक्तैश्चत्वारो भेदाः । चतुष्टये त्यक्त एको भेद इत्येते पञ्चदशैव भेदाः षाड्ज्या निरूपिताः ।। ४, ५ ।।

संपूर्णताहीनानामवान्तरभेदं वक्तुं विभजते---**तत्राष्टाविति** । तत्र पञ्चदशसु मध्ये ऽष्टौ भेदाः **पूर्णताहीनाः** संपूर्णत्वरहिताः सप्त त्वितरवर्जिताः । संपूर्णत्वयुक्तत्वे सतीतरेषु ग्राहांशापन्यासेषु यथायोगमेकेन द्वाभ्यां त्रिभिर्वा वर्जिता द्विधा स्युः । पूर्णताहीना अष्टौ भेदाः षाडवौडुवभेदतो द्विधा स्युः षोडश भवन्तीत्यर्थः । ननु पूर्णताहीनानां भेदानां चतुःस्वरादिभिरपि भेदैः सह षड्विधत्वे संभवति कथं द्वैविध्यमिति चेत्;

उच्यते---**पूर्णताहीना** इत्यनेन चतुःस्वरादीनां च प्रतीतौ सत्यामपि [1]नञ्वियुक्त**न्यायेन** जातिराग[2]संपादकत्वात् संपूर्णत्वसदृशप्रतिपत्त्या षाडवौडुवयोरेवात्र ग्रहणमिति । चतुःस्वरप्रयोगस्तु **भरतेन** अपकृष्टध्रुवायामेवोक्तः । त्रिस्वरादीनां प्रयोगस्तु सामव्यतिरिक्त ऋगादौ द्रष्टव्यः ।

षाड्ज्यपेक्षयार्षभ्यादिषु षट्सु जातिषु भेदाधिक्यं दर्शयति ---**अतो ऽष्टाविति** । **अतो** ऽस्याः पूर्णताहीनेषु षोडशसु अष्टा-

[1] वि(नञियुक्त) 1 ed. [2] निष्पादक 1 ed.



भिरेव षाडवभेदैः पूर्णतायुक्तैः इतरवर्जितैः **सप्तभिः** सह पञ्चदशभेदवत्त्वेनोक्तायाः षाड्ज्या इतरासु **आर्षभ्यादिषु औडुवजातिषु** औडुवावस्थया[1]पि युक्तासु **अष्टा**वौडुवभेदा **अधिकाः** । अतः कारणात्ता आर्षभ्यादयः षड्जातयः **प्रत्येकं त्रयोविंशतिधेरिता** इति सप्तसु जातिषु विकृतभेदा मिलिताः त्रिपञ्चाशदुत्तरं शतं भवन्ति ।। ४-७ ।।

(सु०) विकृतभेदान् गणयति---**संपूर्णत्वेति** । शुद्धजातीनां चत्वारि लक्षणानि---नामस्वरग्रहत्वं, नामस्वरांशत्वं, नामस्वरापन्यासत्वं, संपूर्णत्वं [2]चेति । तत्र संपूर्णत्वपरित्यागेन एको विकृतभेदः, ग्रह परित्यागेनैकः, अंशपरित्यागेनैकः, अपन्यासपरित्यागेनैकः, एवमेकैकपरित्यागे चत्वारो भेदाः । संपूर्णत्वग्रहपरित्यागेनैकः, संपूर्णत्वांशपरित्यागेनैकः, संपूर्णत्वापन्यासपरित्यागेनैकः, ग्रहांशपरित्यागेनैकः, ग्रहापन्यासपरित्यागेनैकः, अंशापन्यासपरित्यागेनैकः, एवं लक्षणद्वयपरित्यागे[3] षड् भेदा विकृता भवन्ति ।

संपूर्णत्वग्रहांशपरित्यागेनैकः, संपूर्णत्वग्रहापन्यासपरित्यागेनैकः, संपूर्णत्वांशापन्यासपरित्यागेनैकः, ग्रहांशापन्यासपरित्यागेनैकः, एवं लक्षणत्रयपरित्यागे चत्वारो भेदा विकृता भवन्ति । लक्षणचतुष्टयपरित्याग एक एव भेदः । एवं षाड्ज्याः पञ्चदश भेदा भवन्ति । तेषु पूर्णताहीना अष्टौ, इतरलक्षणहीनाः सप्त । षाड्ज्याः षाडवत्वेनैवासंपूर्णत्वम् ।

अन्यासां षाडवत्वेनौडुवितत्वेन च भेदाधिक्यं कथयितुमाह---**द्विधा स्युरिति** । **पूर्णताहीना** भेदाः षट्स्वरत्वेन पञ्चस्वरत्वेन च द्विविधाः ।

[1] नियुक्ता 1 ed. [2] सप्तस्वरत्वं चेति (B).

अत आर्षभ्यादिषु षट्सु जातिष्वष्टौ भेदा अधिका विकृता भवन्ति । अतः प्रत्येकं तासां त्रयोविंशतिर्विकृता भेदाः ॥ एतासां मिलिता विकृतभेदास्त्रिपञ्चाशदधिकं शतं भवन्ति ॥ ४-७ ॥

**विकृतानां तु संसर्गाज्जाता एकादश स्मृताः ।**
**स्यात् षड्जकैशिकी षत्जोदीच्यवा षड्जमध्यमा ॥ ८ ॥**

**गांधारोदीच्यवा रक्तगांधारी कैशिकी तथा ।**
**मध्यमोदीच्यवा कार्मारवी गांधारपञ्चमी ॥ ९ ॥**

**तथान्ध्री नन्दयन्तीति तद्धेतूनधुना ब्रुवे ।**
**षड्जीगांधारिकायोगाज्जायते षड्जकैशिकी ॥ १० ॥**

**षाड्जिकामध्यमाभ्यां तु जायते षड्जमध्यमा ।**
**गांधारीपञ्चमीभ्यां तु जाता गांधारपञ्चमी ॥ ११ ॥**

**गांधार्यार्षभिकाभ्यां तु जातिरान्ध्री प्रजायते ।**
**षाड्जी गांधारिका[1] तद्वद्धैवती मिलितास्त्विमाः ॥ १२ ॥**

**षड्जोदीच्यवतीं जातिं कुर्युः कार्मारवीं पुनः ।**
**उत्पादयन्ति[2] नैषादी[3]पञ्चम्यार्षभिका युताः[4] ॥ १३ ॥**

**नन्दयन्तीं तु[5] गांधारीपञ्चम्यार्षभिका युताः[6] ।**
**गांधारी धैवती षाड्जी मध्यमेति युतास्त्विमाः ॥ १४ ॥**

**गांधारोदी[7]च्यवां कुर्युर्मध्यमोदी[8]च्यवां पुनः ।**
**एता एव विना षाड्ज्या पञ्चम्या सह कुर्वते ॥ १५ ॥**

[1] रिकाः (D). [2] दयति 1 ed. [3] नैषादीं (D). [4] युता 1 ed.
[5] च (D). [6] कान्विता 1 ed, युता (D). [7] ग. च्यतां कुर्यु fn. 1 ed.
[8] ग. च्यतां पु fn. 1 ed.



**कुर्युस्ता रक्तगांधारीं नैषादी [1]च न धैवती ।**
**आर्षभीं धैवतीं त्यक्त्वा [2]पञ्चभ्यः कैशिकी भवेत् ॥ १६ ॥**

(क०) उक्तविकृतभेदसंसर्गोत्पन्नानां व्यपदेशान्तरभाजां विकृतजातीनां संख्यामाह---**विकृतानां** त्विति । **तु**शब्दो भिन्नक्रमः---**विकृतानां तु संसर्गाज्जातास्त्विति** । उक्ता विकृता शुद्धजातीनामेवावस्थान्तराणि, एताः पुनः तद्विकृतभेदसंसर्गोत्पन्नत्वान्न तथेति तुशब्दार्थः ॥ ता उद्दिश्य तासां निमित्तभूतं विकृतावस्थापन्नषाड्ज्यादिसंसर्गं दर्शयति---**स्यात्षड्जकैशिकी**त्यादिना **पञ्चभ्यः कैशिकी भवे**दित्यन्तेन । अत्राष्टादशसु जातिसंज्ञासु षाड्ज्यादीनां कासांचिदन्वर्थतया योगरूढता, कार्मारव्यादीनां तु कतिपयानां केवलरूढतैवेति मन्तव्यम् ॥ ८-१६ ॥

(सु०) विकृतसंसर्गज्जाता एकादश जातीः नित्यविकृताः कथयति---**विकृतानां त्विति** । एतासामेकादशानां विकृतानां जातीनां कारणभूता जातीः कथयति---**षाड्जीति** षाड्जीगांधारिकाभ्यां **षड्जकैशिकी** (१) जायते । षाड्जीमध्यमाभ्यां **षड्जमध्यमा** (२) । गांधारीपञ्चमीभ्यां **गांधारपञ्चमी** (३) । गांधार्यार्षभिकाभ्याम् **आन्ध्री** (४) । षाड्जीधैवतीगांधारीभ्यः **षड्जोदीच्यवती** (५) । नैषादीपञ्चम्यार्षभीभ्यः **कार्मारवी** (६) । गांधारीपञ्चम्यार्षभीभ्यो **नन्दयन्ती** (७) । गांधारीधैवतीषाड्जीमध्यमाभ्यो **गांधारोदीच्यवा** (८) । गांधारीधैवती मध्यमापञ्चमीभ्यो **मध्यमोदीच्यवा** (९) । गांधारी नैषादीमध्यमापञ्चमीभ्यो **रक्तगांधारी** (१०) । षाड्जीगांधारीमध्यमापञ्चमीनैषादीभ्यः **कैशिकी** (११) ॥ ८-१६ ॥

[1] न च 1 ed, क. नावधै । ग. ख. नवधै fn. 1 ed. [2] क. ग. पञ्चस्था fn. 1 ed.

**चतस्रः षड्जशब्दिन्यो नैषादी धैवती तथा ।**
**आर्षभी चेति सप्तैताः षड्जग्रामस्य जातयः ।। १७ ।।**

**शेषाः [1]स्युर्मध्यमग्रामे पूर्णत्वाद्यधुनोच्यते ।**
**कार्मारव्यथ[2] गांधारपञ्चमी षड्जकैशिकी ।। १८ ।।**

**मध्यमोदीच्यवेत्येता नित्यपूर्णाः प्रकीर्तिताः ।**
**षाड्जी च नन्दयन्त्यान्ध्री गांधारोदीच्यवेत्यमूः ।। १९ ।।**

**[3]संपूर्णषाडवाः प्राह चतस्रः काश्यपो मुनिः[4] ।**
**दशावशिष्टाः [5]संपूर्णषाडवौडुविता मताः ।। २० ।।**

(क०) सर्वासामपि जातीनां ग्रामविभागं दर्शयति—**चतस्र** इत्यादिना । अष्टादशसु जातिषु मध्ये यथायोगं संपूर्णत्वादिना साधर्म्यमाह—**पूर्णत्वादी**त्यादिना । [6]पूर्णत्वादीत्यादिशब्देन षाडवत्वमौडुवत्वं च गृह्यते । **नित्यपूर्णा** नित्यं सदा पूर्णाः; न कदाचिदपि षाडवौडुवावस्थापन्ना इत्यर्थः । **संपूर्णषाडवाः**, संपूर्णाश्च ताः षाडवाश्च । **षाड्जीनन्दयन्त्यान्ध्रीगांधारोदीच्यवाः चतस्रो** जातयो **भरतादिम**तपर्यालोचनया संपूर्णत्वेन षाडवत्वेन च नियमिता इति निश्चित्य कथ्यन्त इत्यर्थः । एवं च सति [7]यदा गाता ताः षाडवीकर्तुमिच्छति, तदा वक्ष्यमाणलक्षणानुसारेण षाड्ज्यां निषादलोपेन, नन्दयन्त्यान्ध्र्योः षड्जलोपेन गांधारो[8]दीच्यवायामृषभलोपेन च षाडवत्वं नियतं द्रष्टव्यम् ।।

[1] स्तु मध्यम (D). [2] कार्मारवो च (D). [3] संपूर्णाः षा (D). [4] सोढलात्मजः 1 ed. [5] संपूर्णाः षा (D). [6] आदिशब्देन (D). [7] यदि 1 ed. [8] दीच्यवयोर्ऋषभ 1 ed.



**दशावशिष्टा** इति । अवशिष्टा नित्यपूर्णाभ्यः चतसृभ्यः संपूर्णषाडवाभ्यः चतसृभ्यश्च व्यतिरिक्ता दश—आर्षभी गांधारी मध्यमा पञ्चमी धैवती नैषादी षड्जोदीच्यवा षड्जमध्यमा रक्तगांधारी कैशिकी चेति । संपूर्णषाडवौडुविताः; संपूर्णाश्च षाडवाश्चौडुविताश्च ता इति कर्मधारयः; दशाप्येताः संपूर्णत्वादिव्यवस्थापन्ना इत्यर्थः ।।

तद्यथा—आर्षभी षड्जलोपात्षाडवा, सपलोपादौडुवा । गांधारीरक्तगाधारीकैशिक्यो[1] रिलोपेन षाडवाः, रिधलोपेनौडुवाः । मध्यमापञ्चम्यौ गलोपेन षाडवे, निगलोपेनौडुवे । धैवतीनैषाद्यौ पलोपेन षाडवे, सपलोपेनौडुवे । षड्जोदीच्यवा रिलोपेन षाडवा, परिलोपेनौडुवा । षड्जमध्यमा निलोपेन षाडवा, [2]निगलोपेनौडुवेति ।। १७-२० ।।

(सु०) एतासां कियत्यः कस्मिन् ग्राम इत्यपेक्षायामाह—**चतस्र** इति । एतासां जातीनां मध्ये **षड्जशब्द**वत्यश्च**तस्रो जातयः** षाड्जी षड्जकैशिकी षड्जमध्यमा षड्जोदीच्यवा चेति, तथा **नैषादी धैवत्यार्षभी चेत्येताः सप्त षड्जग्रामोत्पन्नाः; शेषा** एकादश **मध्यमग्रामो**त्पन्नाः ।।

जातीनां पूर्णत्वषाडवत्वौडुवितत्वानि[3] प्रतिज्ञाय कथयति—**पूर्णत्वादी**ति । **कार्मारवीगांधारपञ्चमीषड्जकैशिकीमध्यमोदीच्यवानां** पूर्णत्वमेव, षाडवत्वमौडुवितत्वं च नास्ति । **षाड्जीनन्दयन्त्यान्ध्रीगांधारो दीच्यवानां** संपूर्णत्वं षाडवत्वं च विद्यते, औडुवितत्वं नास्ति । **अवशिष्टानां दशानां** संपूर्णत्वं षाडवत्मौडुवितत्वं चास्ति ।। १७-२० ।।

[1] कैशिक्योः (D). [2] निपलोपे 1 ed. [3] त्वौडुवत्वानि (B).

**पञ्चमीमध्यमाषड्जमध्यमाऽऽख्यासु जातिषु ।**
**स्वरसाधारणं प्रोक्तं मुनिभिर्भरतादिभिः ।। २१ ।।**
**अंशेषु समपे[1]ष्वेतद् यथास्वनियमाद्भवेत् ।**
**एतदल्पनिगास्वाहुः कम्बलाश्वतरादयः ।। २२ ।।**
**अल्पद्विश्रुतिके रागभाषादावपि तन्मतम् ।**
**निगयोरंशयोः षड्जमध्यमायां न तद्भवेत् ।। २३ ।।**
**विकृता एव तत्रापि स्वरसाधारणाश्रयाः ।**

(क०) तत्र कासुचिज्जातिषु **भरता**द्युक्तं स्वरसाधारणप्रयोगे नियमं दर्शयति––**पञ्चमी**त्यादिना ।। अनेनैव वचनेन पञ्चमीमध्यमाषड्जमध्यमासु तिसृषु जातिषु यथायोगं षड्जमध्यमपञ्चमानाम् अन्यतमस्यांशत्वे स्वरान्तरस्यांशत्वे च उभयत्र स्वरसाधारणे प्राप्ते, स्वरान्तरांशत्व[2]पक्षनिवृत्त्यर्थं स्वरसाधारणं परिसंख्याति––**अंशेषु समपेष्विति । एतत्स्वरसाधारणम् । यथास्वनियमात्** स्वनियमः 'प्रयोज्यौ षड्जमुच्चार्य' (अत्रैव ५ सा. प्र. श्लो. ४) इत्यादिनोक्तः, तमनतिक्रम्य ।

अत्रेयं व्यवस्था––'पञ्चम्यां पञ्चमे अंशे; मध्यमाषड्जमध्यमयोः प्रत्येकं षड्जमध्यम[3]पञ्चमेषु अंशेषु 'स्वांशेषु' साधारणप्रयोगः इति **कम्बलाश्वतरादयः** एतत् **स्वरसाधारणम्** । काकल्यन्तरावित्यर्थः । **अल्पनिगासु** लोप्यनिषादगांधारासु जातिषु पञ्चमीमध्यमाषड्जमध्यमाख्यासु[4] । एतदुक्तं भवति––निषादगांधारयोः[1]अन्यतरस्मिन्नंशे ऽन्यस्य तत्संवादित्वेन लोप्यत्वाभावात् काकल्यन्तरप्रयोगो न कर्तव्य इति! [2]अल्पद्विश्रुतिके लोप्यनिषादगांधारे ।

**रागभाषादावपी**ति । अत्र रागशब्देन ग्रामरोगोप[3]रागरागाः त्रयोऽपि गृह्यन्ते; भाषा[4]शब्देन भाषाविभाषान्तरभाषाः तिस्रो गृह्यन्ते; आदिशब्देन पुना रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गचतुष्टयं गृह्यत इति दशविधो ऽपि रागप्रपञ्चो गृहीतः । तत्र अपिशब्देन न केवलमल्पद्विश्रुतिकासु [5]जातिष्वेव, किं तु अल्पद्विश्रुतिके रागादौ सर्वत्रापीति द्योत्यते । तत्काकल्यन्तरसाधारणं **मतं भरतादीनां** संमतम् ।। उक्तमर्थं व्यतिरेकेणाप्युदाहृत्य द्रढयन्नाह––**निगयोरंशयो**रिति । 'पञ्चमीमध्यमा'[6] इति **भरतमता**नुसारिणा वचनेन, "एतदल्पनिगासु" इति **कम्बलाश्वतरा**दिमतानुसारिणा वचनेन च उपात्तासु पञ्चमीमध्यमाषड्जमध्यमाषाड्जीषु चतसृषु षड्जमध्यमाया विकृतसंसर्गजत्वेन केवलविकृतत्वात् शुद्धताया अभावेऽपि इतरासां तिसृणांशुद्धावस्थायां विकृतावस्थायां [7]च विशेषेण स्वरसाधारणे प्राप्ते नियमयति––**विकृता एवेति । तत्रापी**ति । **तत्र** पञ्चमीमध्यमाषाड्जीषु तिसृषु । अयमभिसंधिः––षाड्ज्यादिषु शुद्धावस्थायां विकृतस्वरप्रयोगो न कर्तव्य इति ।। २१-२४-।।

(सु०) **पञ्चमी**ति । **पञ्चमीमध्यमाषड्जमध्यमासु जातिषु स्वरसाधारणं प्रयोक्त**व्यमित्युक्तं **श्रीभरतादिभिः** ।। २१ ।। **अंशेष्व**िति ।

[1] घ. ष्वेतत्तद्यथा नियमे भवेत् 1 ed; ष्वेव यथास्वनियमा 1 ed, ष्वेतद् यथा स्वं नियमाद्भवेत् (सु). [2] पक्षे 1 ed. [3] पञ्चमे(?) 'स्वांशेषु साधारण प्रयोगः' 1 ed. [4] षड्जमध्यमषाड्जीषु 1 ed.



[1] इतरस्मि 1 ed. [2] किं वा ऽल्प 1 ed. [3] रागास्त्रिविधा गृ 1 ed. [4] दिशब्देन पुना रागाङ्गभाषा 1 cd. [5] जातिष्वेवाल्पद्वि 1 cd. [6] मध्यमी पञ्चमी चैव षड्जमध्या तथैव च । (ना. शा. २८. अ. श्लो. ३७). [7] वा विशे 1 ed.

षड्जमध्यमपञ्चमेषु **अंशेषु एतत्** स्वरसाधारणं **नियमात्कर्तव्यम्**। कथम् **यथास्वं** स्वकीयं स्थानमनतिक्रम्य। यदा षड्जो अंशस्वरः तदा षड्जसाधारणम् यदा मध्यमपञ्चमौ तदा मध्यमसाधारणमिति। **एतत् स्वरसाधारणमल्पनि**षादगांधारासु जातिषु भवतीति **कम्बलाश्वतरादय** आहुः। अल्पनिषादगांधारे **रागभाषादावपि** स्वरसाधारणं प्रयोक्तव्यमिति तेषां **कम्बलाश्वतरादीनां मतम्**॥-२२, २३-॥ **निगयोरिति**। यदा षड्जमध्यमायां निषादगांधारावंशौ तदा तत्स्वरसाधारणं न प्रयोक्तव्यम्। प्रायस्तु **विकृता एव स्वरसाधारण**योगिन्यः॥ २१-२४-॥

**एकांशा नन्दयन्ती च मध्यमोदीच्यवा तथा[1] ॥ २४ ॥**
**गांधारपञ्च[2]मीत्येतास्तिस्रो द्वयंशास्तु धैवती।**
**गांधारोदीच्यवा चाथ पञ्चमीत्युदिता इमाः॥ २५ ॥**
**नैषाद्यार्षभिकाषड्जकैशिक्यस्त्र्यंशिका मताः।**
**आन्ध्रीकार्मारवीषड्जोदीच्यवाश्चतुरंशिकाः[3] ॥ २६ ॥**
**पञ्चांशा रक्तगांधारी गांधारी मध्यमा तथा।**
**षाड्जीत्येताश्चतस्रः स्युः षडंशैकैव कैशिकी॥ २७ ॥**
**सप्तांशा सूरिभिः षड्जमध्यमा परिकीर्तिता।**
**इति त्रिषष्टिरंशाः स्युर्जातिष्वष्टादशस्विमे॥ २८ ॥**

(क०) अथाष्टादशसु जातिषु यथायोगमेकांशकादिसप्तांशकान्तं वक्ष्यमाणलक्षणांशस्वरसंबन्धकथनेन [4]संभूतामंशसंख्यामवधारयति—**एकांशा** इत्यादिना **जातिष्वष्टादशस्विम** इत्यन्तेन। एकांशा एकः स्वरो ऽंशो यासां ताः। नन्दयन्ती-

[1] थवा (D). [2] मीत्येतास्तिस्रो 1 ed. [3] रंशका: 1 ed. [4] संसृतामंश 1 ed.



मध्यमोदीच्यवागांधारपञ्चमीनां तिसृणां वक्ष्यमाणलक्षणानुसारेण प्रत्येकं पञ्चमो ऽंशो वेदितव्यः। **द्वयंशास्त्विति**। धैवतीगांधारोदीच्यवापञ्चम्यो द्वयंशाः। तत्र धैवत्यामृषभधैवतावंशौ; गांधारोदीच्यवायां षड्जमध्यमौ पञ्चम्यामृषभपञ्चमौ। **त्र्यंशिका मता** इति। नैषाद्यार्षभिकाषड्जकैशिक्यः त्र्यंशिकाः। तत्र नैषाद्यां निषादषड्जगांधारास्त्रयो ऽंशाः; आर्षभ्यामृषभनिषादधैवताः; षड्जकैशिक्यां षड्जगांधारपञ्चमाः।

[1]**चतुरंशिका** इति। आन्ध्रीकार्मारवीषड्जोदीच्यवाश्चतुरंशिकाः। तत्र आन्ध्र्यामृषाभगांधारपञ्चमनिषादाः चत्वारो; कार्मारव्यामृषभपञ्चमधैवतनिषादाः; षड्जोदीच्यवायां षड्जमध्यमधैवतनिषादाः। **पञ्चांशा** इति। रक्तगांधारीगांधारीमध्यमाषाड्ज्यश्चतस्रः पञ्चांशाः। तत्र रक्तगांधार्यां सगमपनिषादाः पञ्चांशाः; गांधार्यामपि तद्वत्; मध्यमायां सरिमपधाः[2]; षाड्ज्यां सगमपधाः। **षडंशेति**। **एकैव कैशिकी** षडंशा। तत्र ऋषभव्यतिरिक्ताः षट् स्वरा अंशाः। **सप्तांशेति**। षड्जमध्यमा सप्तांशा। तस्यां षड्जादयः सप्त स्वरा अंशाः स्युः॥ -२४-२८ ॥

(सु०) **अंशान् संख्याति—एकांशा** इति। **नन्दयन्तीमध्यमोदीच्यवागांधारपञ्चमीष्वेक** एकोऽंशः; **धैवतीगांधारोदीच्यवापञ्चमीषु** द्वौ द्वावंशौ; **नैषाद्यार्षभीषड्जकैशिकीषु** त्रयस्त्रयोऽंशाः; **आन्ध्रीकार्मारवीषड्जोच्यवासु** चत्वारश्चत्वारो ऽंशाः; **रक्तगान्धारीमान्धारीमध्यमाषाड्जीषु** पञ्च **पञ्चांशाः; कैशिक्येकैव षडंशा; षड्जमध्यमा सप्तांशा। एवमष्टादशसु जातिषु त्रिषष्टिरंशा** भवन्ति। इयं तु संख्या जातीनां

[1] चतुरंशका 1 ed. [2] सरिगमधाः 1 ed.

संपूर्णत्वे । षाडवत्वे तु सप्तचत्वारिंशदंशा भवन्ति । तदुक्तं **मतङ्गेन**—"योज्याः सप्ताधि[1]कास्ते च चत्वारिंश[2]च्च षाडवे। **अस्यार्थः**—षाडवविधौ क्रियमाणे सप्तचत्वारिंश[3]दंशा भवन्ति । कथम्? चतसृणां जातीनां नित्यपूर्णानां नवांशाः पातनीयास्त्रिषष्टिमध्ये । [4]एषु नवांशेषु पातितेषु चतुष्पञ्चाशदंशा अवशिष्यन्ते । तत्रापि षड्जमध्यमा [5]षाड्जी षड्जोदीच्यवा कैशिकी [6]रक्तगांधारीत्यासां सप्तांशा अपवादभूताः पातनीयाः । [7]तेषु सप्तांशेषु पातितेषु सप्तचत्वारिंशदंशा भवन्ति"। (बृहद्देश्यां २ प्रकरणे जातयः श्लो. २४८, अस्यार्थश्च) इति। औडुवविधौ तु त्रिंशदंशा भवन्ति । तदुक्तं **मतङ्गेन**—"तथाऽपवादनिर्मुक्तास्त्रिंशदौडुविते [8]तु ते । अस्यार्थः—" पूर्ववत् । षोडशसु पातितेषु नित्यपूर्णषाडवानां द्वादश [9]पातनीयाः । [10]अन्ये चापवादभूताः पञ्च । एवं त्रिंशदौडुविते ते ऽंशा, भवन्ति । तथा चाह **भरतः**—

"पञ्चस्वरमौडुवितं विज्ञेयं दशविधप्रयोगज्ञैः ।
"त्रिंशत्प्रकारविहितं पूर्वोक्तं लक्षणं [11]चास्य ।।"
(ना. शा. २८. अ. श्लो.७६)

इति । अपकृष्टध्रुवासु जातीनां चतुः स्वरप्रयोगो[12] ऽप्युक्तो **भरतेन**—

"षट्स्वरस्य प्रयोगोऽस्ति तथा पञ्चस्वरस्य च[13] ।
चतुःस्वरप्रयोगोऽपि [14]ह्यपकृष्टध्रुवास्वथ ।। (ना. शा. २८ अ. श्लो. ७७) इति ।। २४-२८ ।।

[1] काश्चैव चत्वारिंशच्च (बृ. दे.). [2] रिंशत्तु (B). [3] दंशका अपवादस्वरसहिता योजनीथा (बृ. दे). [4] तद्यथा—रिपधनि पसग । पध । एषु (बृ. दे.), रिप निस निप सगप (B). [5] षड्जोदीच्यवा (बृ. दे). [6] गान्धारी रक्तगान्धारी धैवती, आसां षड्जातीनां सप्तांशाः पात (बृ. दे). [7] ते च, गनि गप धप पनि, एवं षोडशांश त्रिषष्टिमध्ये उत्कृष्टेषु षाडवविधौ सप्तचत्वारिंशदंशाः अवशिष्यन्ते (B). [8] भवेत् (बृ. दे). [9] सप्तांशाः पात (बृ. दे). [10] सगपधमग पनिपसमप अन्ये (B). [11] वास्य (B). [12] प्रयोगे (B). [13] तु (B). [14] ह्यवकृष्टध्रुवास्विह (ना. शा.), ह्यपकृष्टध्रुवास्विति (B).



**ग्रहांशतारमन्द्राश्च न्यासापन्यासकौ तथा ।**
**अपि संन्यासविन्यासौ बहुत्वं चाल्पता ततः[1] ।। २९ ।।**
**एतान्यन्तरमार्गेण सह लक्ष्माणि जातिषु ।**
**षाडवौडुविते क्वापीत्येवमाहुस्त्रयोदश ।। ३० ।।**
**गीतादिनिहितस्तत्र स्वरो ग्रह इतीरितः ।**
**तत्रांशग्रहयोरन्यतरोक्तावुभयग्रहः ।। ३१ ।।**
**यो रक्तिव्यञ्जको गेये [2]यत्संवाद्यनुवादिनौ ।**
**विदार्यां बहुलौ यस्मात् तारमन्द्रव्यवस्थितिः ।। ३२ ।।**
**यः स्वयं यस्य संवादी चानुवादी स्वरो ऽपरः ।**
**न्यासापन्यासविन्याससंन्यासग्रहतां गतः ।। ३३ ।।**
**प्रयोगे बहुलः स स्याद्वाद्यंशो योग्यतावशात् ।**
**बहुलत्वं प्रयोगेषु व्यापकं त्वंशलक्षणम् ।। ३४ ।।**

(क०) अथ 'त्रयोदशविधं जातिलक्ष्म' इत्युद्देशे लक्ष्यत्वेनोपात्तजातिनिरूपणावसरे तदवयवत्वेन च प्राप्तान् **त्रयोदशापि** ग्रहादीन् विभज्य क्रमेण लक्ष्यति—**ग्राहांशतारमन्द्राश्चे** त्यादिना। **षाडवौडुविते क्वापी**ति । नित्यपूर्णाभ्यो ऽन्यासु यथायोगमित्यर्थः । यद्यपि **भरतमतङ्गादिभिः** "संन्यासविन्यासयोः विदार्याश्रितत्वाद् अपन्यासे ऽन्तर्भावेण अन्तरमार्गस्याप्यंशाद्यवयवानाम् अन्योन्यसंघटनात्मकस्य अंशादिसंबन्धाधीनसिद्धेः पृथगुद्देशो नापेक्षितः" इति दशकं जातिलक्षणमित्युक्तम्, तथापि संन्यासविन्यासयोः पृथगवयवत्वेन अन्तरमार्गस्य तु सत्स्वंशादिष्ववयवेषु तेन विना

[1] तथा (D). [2] घ. यश्च वाद्य fn. 1 ed.

प्रयोगासिद्धेस्तस्या[1]वश्यिकत्वात् लक्षणेषु पृथगुद्दिश्य त्रयोदशेत्युक्तं **ग्रन्थकारेण ॥**

**गीतादिनिहित** इति। तत्र तेषु त्रयोदशसु मध्ये, गीतादिनिहितः, गीतस्य रञ्जकस्वरसंदर्भस्यादावुपक्रमे निहितः। गृहीत इति येन गीतं गृह्यत इति वा ग्रहः। **तत्र अंशग्रहयोरित्यत्र तत्रे**ति गीतगानलक्षण इत्यर्थः। अंशग्रहयो**रन्यतरोक्तौ,** यत्र क्वचिदंश एवोच्यते न ग्रहः, यत्र च ग्रह एवोच्यते न, त्वंशः तत्र **उभयग्रह** उभयोः ग्रहांशयोर्ग्रहो ग्रहणं भवति।

अयमर्थः—यत्र गीतलक्षणे यस्य स्वरस्यांशत्वमुक्तं नान्यस्य ग्रहत्वं तत्र तस्यैव ग्रहत्वमप्युक्तम्, यस्य च ग्रहत्वमुक्तं नान्यस्यांशत्वं तत्रापि तस्यैवांशत्वमप्युक्तमिति। एतेनैतदुक्तं भवति—यस्यां जातौ ये यावन्तो ऽंशाः तत्र ते तावन्त एव ग्रहा इति। सर्वासु जातिषु ग्रहा अपि त्रिषष्टिरित्यर्थः। तथा चोक्तं **भरतेन**—

'त्रिषष्टिरंशा विज्ञेयास्तासां [2]चैवांशवद् ग्राहाः'।

(ना. शा. २८ अ. श्लो. ७८) इति। **मतङ्गेनापि—**

'सः [3]अंशवत् त्रिषष्टिभेदभिन्नो बोद्धव्यः' (बृहद्देश्यां २ प्र 'जातयः' १९७ श्लोकात्परं दृश्यते) इति ॥ **यो रक्ती**त्याद्यंशलक्षणम्। रक्तिव्यञ्जकत्वादिधर्मयुक्तो यः स्वरः स संगीतभागत्वादंश इति व्यपदिश्यते गेये। **रक्तिव्यञ्जक** इत्येतावत्युच्यमाने स्वरगतरक्तिमात्रव्यञ्जकत्वं स्वरान्तराणामप्यविशिष्टमितीह स्वरसंदर्भभेदप्रतिनियतरक्तिविशेषव्यञ्जकत्वस्य विवक्षितत्वाद्गेय

[1] वश्यक 1 ed. [2] चैद तथा ग्रहाः (ना. शा. काव्यमाला). [3] ऽंशवांस्त्रि 1 ed.



इति विशेषणं यथा वाक्यार्थभूतरसादिव्यञ्जकत्वं विवक्षितान्यपरवाच्ये ऽसंलक्ष्यक्रमध्वनौ स्वार्थमभिदधतः पदस्य।

**यत्संवाद्यनुवादिनौ** यस्यांशत्वेन लिलक्षयिषितस्य[1] स्वरस्य। अस्मिन् लक्षणे प्रतिवाक्यं यच्छब्दो विधेयांशस्वरपरः। संवाद्यनुवादिनौ पूर्वोक्तलक्षणौ स्वरौ विदार्यां गीतखण्डे बहुलौ प्रचुरप्रयोगौ; यस्मात् तारमन्द्रव्यवस्थितिः, यमवधिं कृत्वा, उत्तरस्वरारोहेण तारव्यवस्था, अधस्तनस्वरावरोहेण[2] मन्द्रव्यवस्था च भवति; यः स्वयं यस्य संवादी, यस्य वादिव्यपदेशवतः स्वस्य[3] स्वयमेव कदाचित् संवादी च भवति; अत्र चकार एवार्थः संवाद्येवेति; **अनुवादी स्वरोऽपरः,** यस्यानुवादी त्वपर एव स्वरो भवति, न कदाचिदपि स्वस्य स्वयमनुवादीत्यर्थः; यथा लोके राजा प्रयोजनवशात् क्वचिदमात्यकृत्यकारी भवति न कदाचिदपि भृत्यकृत्यकारी, तद्वत्; यश्च **न्यासापन्यासविन्याससंन्यासग्रहतां गतः सन्प्रयोगे बहुलो** भवति; तस्य न्यासादिरूपापत्तिः प्रयोगबाहुल्ये हेतुः, **स वादी योग्यतावशादंशः स्यात्।** योग्यता नामात्र यथायोगं रक्तिव्यञ्जकत्वाद्युक्तलक्षणार्हत्वम्।

तथाह **भरतः—**

'रागश्च यस्मिन्वसति यस्माच्चैव प्रवर्तते।
[4]नेता च तारमन्द्राणां यो ऽत्यर्थमुपलभ्यते ॥

ग्रहापन्यासविन्याससंन्यासन्यास[5]योगतः।

[1] विवक्षितस्य (D). [2] स्वरानवरोहेण 1 ed. [3] स्वरस्य 1 ed.
[4] तेन वै तार (ना. शा.) मन्द्रश्चतार (ना. शा Gaekwad ed). [5] गोचरः, Gaekwad ed).

[1]अनुवृत्तश्च [2]यश्चेह सो ऽंशः स्याद् दशलक्षणः ।।'
(नाटचशास्त्रे २८ अ. श्लो. ६८, ६९)

इति । ननु—अंशो ग्रह इति **भरतादेशेन** सर्वेष्वपि अंशधर्मेषु ग्रहस्य प्राप्तेषु ग्रहांशयोः को विशेष इति चेत्, उच्यते—ग्रहस्यांशातिदेशतस्तु प्राप्तं न केवलं वादित्वमेव धर्मः, अपि तु वादित्वादिचतुष्टयमपीति तयोर्भेद इति । यथोक्तं **मतङ्गेन**—"अंशो वाद्येव परं ग्रहस्तु वाद्यादिभेदभिन्नश्चतुर्विधः' (बृहद्देश्यां २ प्र. 'जातयः १९७—श्लोकात्परं दृश्यते) इति ।। दशानामपि लक्षणानां सप्तषष्टिरूपत्वाद् बहुलत्वमेव अंशस्य नियतं लक्षणमित्याह—**बहुलत्वमिति** । प्रयोगे बहुलत्वं व्यापकमंशलक्षणमिति संबन्धः ।। **व्यापकमिति** । यो ऽंशः स बहुल इत्यविनाभावात् ।। २९-३४ ।।

(सु०) त्रयोदशविधं जातिलक्षणं विभजते—**ग्रहांशेति** । **षाडवौडुविते**[3] **क्वापीति** । याः कार्मारव्यादयश्चतस्रो नित्यपूर्णास्ता विहायेत्यर्थः । ग्रहलक्षणं कथयति—**गीतादीति** । गीतस्य जात्यादेरादौ यः स्वरः प्रयुज्यते स ग्रह इत्युच्यते । **तत्रेति** । तत्र 'यः स्वरो ऽशः स एव ग्रहः' इति नियमादंशग्रहयोरेकोक्तौ उभयं लभ्यते । नन्वेवं तर्हि ग्रहांशयोः को भेदः? उच्यते—अंशो वाद्येव परम्; ग्रहस्तु वाद्यादिभेदभिन्नश्चतुर्विधः; अंशश्च रागजनकत्वात्प्रधानम्; ग्रहस्त्वप्रधानमिति तयोर्भेदः ।। २९-३१ ।।

अंशलक्षणं कथयति—**यो रक्तिव्यञ्जक** इति । यो गीते रञ्जकत्वं व्यनक्ति, यस्य **संवाद्यनुवादी** च **विदार्यां बहुलः** । ननु विदारीशब्देन किमुच्यते? विदार्यते [4]खण्डचते गीतं पदं वा यया सा विदारी । सा द्विविधा गीतविदारी पदविदारी चेति । सा विशेषेण **तालाध्याये** निरूपयिष्यते ।

[1] परिवर्य स्थितौ यस्तु सो (ना. शा. काव्यमाला). [2] यास्येह (ना. शा. (ना. शा.) [3] वौडविते (B). [4] समाप्यते (B).



यमवधिं **कृत्वा** मन्द्रतारव्यवस्था, यो वा यस्य संवाद्यनुवादी वा न्यासत्वमपन्यासत्वं विन्यासत्वं संन्यासत्वं ग्रहत्वं च प्राप्नोति, यस्य जात्यादिप्रयोगे बाहुल्यं संवाद्यंशश्चेत्युच्यते । **योग्यतावशादिति** । प्राधान्याद्वादिशब्दवाच्यत्वमन्यैर्लक्षणैरंशशब्दवाच्यत्वमिति । प्रयोगे बाहुल्यमेव मुख्यं लक्षणमंशस्येति कथयति—**बहुलत्वमिति** । ननु कथमस्यांशशब्दवाच्यत्वम्? अंशशब्देन [1]भाग उच्यते; [2]अयमपि जातिरागादिविभागकारित्वादंशशब्देनोच्यते, कारणे कार्यवदुपचारात् ।। २९-३४ ।।

**मध्यमे सप्तके अंशः स्यात् तस्मात् तारस्थितात्परान्**[3] **।**
**स्वरांश्चतुर आरोहेदेष तारावधिः परः ।। ३५ ।।**
**अर्वाक् तु कामचारः स्यात् तारे लुप्तो ऽपि गण्यते ।**
**आतारषड्जमारोहो नन्दयन्त्यां प्रकीर्तितः ।। ३६ ।।**

(क०) अथ तारव्यवस्थामाह—**मध्यमे सप्तके अंशः स्यादिति** । **मध्यमे सप्तके**, [4]मध्यस्थानस्थितेषु षड्जादिषु सप्तसु स्वरेष्वित्यर्थः । **अंशः स्यात्**, षड्जमध्यमग्रामयोः प्राधान्यात्प्राबल्याच्च यस्मिन्ग्रामे यश्चतुःश्रुतिको ऽंशः षड्जो वा मध्यमो वा भवेत् । **तारस्थिताद्** द्विगुणात् **तस्मा**त्षड्जाद्वा मध्यमाद्वा **चतुरः स्वरान्** । मध्यमग्रामे तावत् तस्मादिति तारमध्यमपरामर्शे तस्मादिति ल्यब्लोपे पञ्चमी । तमारभ्येत्यर्थः । तेन सह परना चतुरो मपधनीनारोहेदित्यर्थः । षड्जग्रामे तु तस्मादिति तारषड्जपरामर्शे तस्मादित्यवधौ पञ्चमी । ततः **परान् चतुरः स्वरान्** रिगमपानारोहेदिति । **एष तारावधिः**, एष उक्तप्रकार-

[1] विभाग (B). [2] सत्यम्; अय (B). [3] तान्परान् 1 ed. [4] मध्यमस्थान (D).

स्तारावधिः । **परः** निरतिशयः । कुतः? मध्यमग्रामे तारनिषदात्परस्य स्वरस्यासंभवादेव; षड्जग्रामे तु तारपञ्चमात्परयोः धैवतनिषदयोः संभवे, शक्तौ च सत्यामपि तत्र प्रयोगे रक्तेरभावादिति ॥

**अर्वाक्त्विति** । [1]अर्वाङ् न्यूनतारावधित्वेनोक्तयोः निषादपञ्चमयोः अधस्तात् तारे स्थितेषु **यस्य कस्यचिदवधित्वे**[2] तु **कामचारः**, गातुरशक्तयेच्छया वा प्रवर्तनम्(?)। **तारे लुप्तोऽपि गण्यत** इति । **तारे** तारव्यवस्थाविषये । **चतुर आरोहेत्** इत्यत्र [3]चतुर्षु मध्ये प्रयोगलक्षणवशादेकस्य स्वरस्य लोपे [4]सत्यप्यारोहगणनायां सो ऽपि गृह्यते । नन्दयन्त्या जातेरपि मध्यमग्रामीणत्वात्तारव्यवस्थायां चतुःस्वरारोहे तारमध्यमस्य प्रारम्भावधित्वे प्राप्ते, तदपवादत्वेन तारषड्जस्य **भरतादिमतात्** परावधित्वं [5]**रुद्रटादिमतात्** पूर्वावधित्वं च विहितमित्यभिसंधाय तन्त्रेणाह—**आतारषड्जमिति** । परावधित्व **आ तारषड्जात्** तारषड्ज पर्यन्तमारोहः **प्रकीर्तितः, भरतादि**भिरित्यर्थः । यथाऽऽह **भरतः**—

'तारगत्या तु [6]षड्जं च कदाचिन्नातिवर्तते ।'

(नाट्यशास्त्रे २८ अ. श्लो. १२७)

इति । तत्पूर्वावधित्वे तु **आतारषड्जं** तारषड्जमारभ्य आरोहः सामान्यतः प्राप्तचतुर्थस्वरारोहः । सामान्यतः प्रकीर्तितो [7]**रुद्रटादिभिरि**त्यर्थः । यथा यावत्षड्जमेव तारगतिर्मध्यमस्याप्यत्र संवा-

[1] अर्वाक् न्यूनता । तारावधि (D). [2] दवधित्वं 1 ed. [3] चतसृषु 1 ed. [4] सत्यपरोक्षगण 1 ed, तस्याप्यारोहगण (D). [5] ग. रुद्भटादि fn. 1 ed, रुद्रादि (D). [6] षड्जोऽपि (ना. शा.) [7] रुद्रादि (D).



दित्वादनाशित्वाच्च तारगती **रुद्रटेन** कृता मध्यमस्येति न दोष इति **मतङ्गोक्तम्** ।

अयमाशयः—नन्दयन्त्या हृष्यकामूर्च्छनाऽन्वितत्वेन पञ्चमांशत्वान्मन्द्रव्यापकत्वेन [1]तारगतेः संकोचस्तु आचार्यैः कृत इति । सामान्या तारव्यवस्था तु **भरतो**क्ता । यथा—

[2]'अंशात् तारगतिं विद्यादा चतुर्थस्वरादिह ।
आ पञ्चमात् सप्तमाद्वा[3] नातः परमिहेष्यते ॥'

(नाट्यशास्त्रे २८ अ. श्लो. ७०)

इति । तरतेर्णिजन्तात्तार्यत इति कर्मणि घञि दूरश्राव्यस्य मूर्धन्यस्य ध्वनेस्तार इति संज्ञा ॥ ३५-३६ ॥

(सु०) तारलक्षणं कथयति—**मध्यम** इति ।[4] मध्यसप्तकस्थितो यो ऽंशस्वरः, तस्मादेव तारस्थि[5]ताच्चतुःस्वरपर्यन्तमारोहणं कर्तव्यम् । अयमारोहे परोऽवधिरुक्तः । ततः परमारोहणं न कर्तव्यम् । **अर्वाक्तु** स्वेच्छया तारगतिः । **तारे लुप्तोऽपि** स्वरो ग्राह्यः । **भरतेन** चतुर्थपञ्चमसप्तमस्वरपर्यन्तं तारगतिरुक्ता । यदाह—

'अंशात्तारगतिं विद्यादा चतुर्थस्वरादिह ।
आ पञ्चमात् सप्तमाद्वा[6] नातः परमिहेष्यते ॥'

(नाट्यशास्त्रे २८ अ. श्लो. ७०)

इति । **आतारेति** । नन्दयन्त्यां तारषड्जपर्यन्तमेवारोहणं कर्तव्यम् । पूर्वोक्तस्यायमपवादः । ३५, ३६ ॥

[1] तारगतिः 1 ed. [2] अंशाक्षरैर्गतिं 1 ed. [3] पञ्चमाद्वा (ना. शा.) [4] मध्यमसप्त (B). [5] तान् । चतुः (B). [6] पञ्चमाद्वा (ना. शा.).

**मध्यस्थानस्थितादंशादामन्द्रस्थांशमाव्रजेत् ।**
**आमन्द्रन्यासमथवा तदधःस्थरिधावपि ।। ३७ ।।**
**एषा मन्द्रगतेः सीमा ततो ऽर्वाक् कामचारिता ।**
**गीते समाप्तिकृन् न्यास [1]एकविंशतिधा च सः ।। ३८ ।।**

(क०) **मध्यस्थानस्थितादि**ति । **अंशाद्** ग्रामापेक्षया षड्जाद्वा मध्यमाद्वा । अत्रापि ल्यब्लोपे पञ्चमी––अंशमारभ्येति । आमन्द्रस्थांशं यथाग्रामं मन्द्रस्थानस्थितषड्जपर्यन्तं तादृशमध्यमपर्यन्तं वा । आङत्राभिविधौ । **आव्रजेद्** आगच्छेत् । अनेन मध्यस्थानस्थितस्यांशस्य प्रायेण प्रारम्भो गम्यते । जातिप्रयोगे षड्जमन्द्रव्यवस्थायामयमेकः पक्षः । **अथ वा, आमन्द्रन्यासं** मन्द्र स्थानस्थितन्यासस्वरपर्यन्तम् । आङभिविधौ ।

अत्र न्यासशब्देन ग्रामयोरन्तिमौ गांधारनिषादौ विवक्षितौ, न तु जात्यादिगीतसमापकः । तौ च व्यत्यासेन षाड्जग्रामिके प्रयोगे मन्द्रगांधारो न्यासः, माध्यमग्रामिके प्रयोगे मन्द्रनिषादो न्यास इति ग्रामयोर्मन्द्रावधी भवतः ।

अत्र लिङ्गं षड्जग्रामीणयापि षड्जकैशिक्या मन्द्रगांधारस्य न्यासत्वदर्शनमिति द्वितीयः पक्षः । **तदधःस्थरिधावपी**ति तृतीयः पक्षः । अत्र **अपि**शब्दो विकल्पार्थो रिधौ वेति । **तच्**छब्देन ग्राम[2]न्यासतया विवक्षितौ गांधारनिषादौ परामृश्येते । तयोरधःस्थौ रिधावित्यनेन क्रमेण ग्रामविवक्षया न्यासयोर्व्यत्यास एव दर्शितः ।

[1] स्वेक (D). [2] न्याससंघातविव 1 ed.



यथोक्तं **भरतेन**––"त्रिधा मन्द्रगतिः अंशपरा न्यासपरा अपन्यासपरा चेति ।

मन्द्रस्त्वंशात्परो[1] नास्ति न्यासे तु[2] द्वौ व्यवस्थितौ ।
गांधारन्यासलिङ्गेन[3] दृष्ट[4]मृषभसेवनम् ।।"
(ना. शा. २८. अ ७० श्लोकात्परं वाक्यं ७१ श्लोकश्च)

इति । **एषा** पक्षत्रये ऽन्यतमाश्रया **मन्द्रगतेः** मन्द्रस्थस्वरावरोहस्य **सीमा** अवधिः । तत उक्तावधेरर्वाङ न्यूनतायां कामचारिता गातुरिच्छया [5]अशक्त्या वा अप्रवर्तमानत्वम् । "मदी हर्षे" इत्यस्माण्णिजन्तान्मदयतीति कर्तरि रप्रत्यये रूपम् । हृद्यस्य ध्वनेर्मन्द्र इति संज्ञा ।। अथ न्यासः––**गीते समाप्तिकृ**दिति । [6]गीते जात्यादिप्रयोगे **समाप्तिकृत्** निरपेक्षावसानकारी स्वरो न्यासः, न्यस्यते त्यज्यते येन गीतमिति करणे घञि न्याससंज्ञकः । स चाष्टादशसु जातिषु एकविंशतिधा वक्ष्यमाणप्रकारेण ।। ३७-३८ ।।

(सु०) मन्द्रं निरूपयति––**मध्यस्थाने**ति । मध्यस्थानस्थिताद् [7]अंशस्वरात् मन्द्रांशस्वरपर्यन्तमवरोहणं कर्तव्यम्, मन्द्रन्यासस्वरपर्यन्तं वा, मन्द्रस्थानस्थर्षभधैवतपर्यन्तं वेति पक्षत्रयम् । एषा मन्द्रगतेः परा काष्ठोक्ता । **अर्वाक्तु** स्वेच्छया मन्द्रगतिः । न्यासलक्षणं कथयति––**गीत** इति । यस्तु गीतसमापको गीतस्य जात्यादेरन्ते तिष्ठति, स न्यास इत्युच्यते । न्यस्यते त्यज्यते यस्मिन् येनवा गीतमिति स न्यासः । स च **एकविंशति**प्रकारो भवति ।। ३७-३८ ।।

[1] शपरो (ना. शा.) [2] न्यासेति 1 ed. [3] लिङ्गे तु (ना. शा). [4] मार्षभसेव 1 ed, (ना. शा. Gaekwad ed), मृषभधैवतम् (ना. शा. काव्यमाला). [5] ऽशक्तेरप्रवर्तमानत्वम्(?) 1 ed. [6] गीतजात्यादि 1 ed. [7] अंशान्मन्द्रः मन्द्रांश (B).

**षाड्ज्यादीनां तु सप्तानां न्यासः स्यान्नामकृत्स्वरः ।**
**द्वौ नामकारिणौ षड्जमध्यमायां तु तौ मतौ ।। ३९ ।।**
**उदीच्यवात्रयं मान्तं निपगान्ता तु कैशिकी ।**
**कार्मारवी पञ्चमान्ता गान्ताः पञ्चापरा स्मृताः ।। ४० ।।**

(क०) तदेव विवृणोति—**षाड्ज्यादीनामित्यादिना । सप्तानां** शुद्धानां विकृतभेदैश्च सहितानां[1] **नामकृदिति,** षाड्ज्यां षड्ज आर्षभ्यामृषभ इत्येवम् । नान्य इति **तु**शब्दार्थः । **उदीच्यवात्रयमिति** । षड्जोदीच्यवा गांधारोदीच्यवा मध्यमोदीच्यवा च त्रिकं मान्तं मध्यमन्यासकम् । अपराः पञ्च षड्जकैशिकी रक्तगांधारी गांधारपञ्चम्यान्ध्री [2]नन्दयन्ती चेति । **स्मृताः, भरतादिभिरिति** शेषः ।। ३९-४० ।।

(सु०) एकविंशतिप्रकारतामेव विशदयति—**षाड्ज्यादीनामिति । षाड्ज्यादीनां सप्तानां** [3]**नामस्वराः** सप्तन्यासाः । **षड्जमध्यमायाः**[4] षड्जमध्यमौ न्यासौ । षड्जोदीच्यवागांधारोदीच्यवामध्यमोदीच्यवानां मध्यमो न्यासः । कैशिक्या[5] निषादपञ्चमगांधाराः । कार्मारव्याः[6] पञ्चमः । अवशिष्टानां पञ्चानां गांधारो न्यासः । एवमेकविंशतिर्न्यासाः ।। ३९-४० ।।

**अपन्यासस्वरः स स्याद्यो विदारीसमापकः ।**
**कार्मारव्यां च नैषाद्यामान्ध्रीमध्यमयोस्तथा ।। ४१ ।।**
**आर्षभ्यां च स्वरा ये अंशास्ते ऽपन्यासाः प्रकीर्तिताः ।**
**उदीच्यवानां त्रितये ऽपन्यासौ षड्जधैवतौ ।। ४२ ।।**

[1] नाम् । **तु** 1 ed. नां **तु** (D). [2] नन्दयती 1 ed. [3] शुद्धानां **नाम** (B). [4] **मध्यमायां** (B). [5] क्यां (B). [6] व्यां (B).



**मध्यमो रक्तगांधार्यां गांधार्यां षड्जपञ्चमौ ।**
**[1]सनिपाः षड्जकैशिक्यां पञ्चम्यां निरिपाः स्मृताः ।।४३।।**
**रिपौ गांधारपञ्चम्यां षाड्ज्यां गांधारपञ्चमौ ।**
**धैवत्यां [2]रिमधाः प्रोक्ता नन्दयन्त्यां मपौ मतौ ।। ४४ ।।**
**रिवर्ज्याः [3]षट् च कैशिक्यां सप्तापीत्यूचिरे परे ।**
**सप्तस्वरापन्यासां तु भाषन्ते षड्जमध्यमाम् ।। ४५ ।।**
**अत्र ये [4]ऽन्त्या अपन्यासास्ते स्युरेकोनविंशतिः ।**
**सप्तत्रिंशत्परे ते च षट्पञ्चाशत्तु [5]संयुताः ।। ४६ ।।**
**कैशिक्यां सप्तपक्षे तान्सप्तपञ्चाशतं विदुः ।**

(क०) अथापन्यासः—**अपन्यासस्वरः स स्यादित्यादिना सप्तपञ्चशतं विदुरित्यन्तेन** निरूपितः स्पष्टः । अपन्यस्यते प्रयोगो येनेत्यपन्यासः । अपन्यसनं च न्यासत्वापगमे तु अवान्तरविच्छेदकारित्वात् न्यासवत्प्रतिभासनम् ।। ४१-४७ ।।

(सु०) अपन्यासं लक्षयति—**अपन्यास** इति । यः स्वरो विदार्या गीतावयवस्य समापकः सो ऽपन्यासः । **मतङ्गेनाप्युक्तम्**—"यत्र समाप्तमिव गीतं प्रतिभासते सो ऽपन्यासः ।। स च त्रिदारीमध्ये भवति । गीतशरीरमध्य इत्यर्थः ।" (बृ. दे. २ प्र "जातय" १०० श्लोकात्परं दृश्यते) इति । अपन्यासान् परिगणयति—**कार्मारव्यामिति** । कार्मारवीनैषाद्यान्ध्रीमध्यमार्षभीणाम् अंशा एवापन्यासाः । षड्जोदीच्यवागांधारोदीच्यवामध्यमोदीच्यवानां षड्जधैवतावपन्यासौ । रक्तगांधार्यां मध्यमः । गांधार्यां षड्ज[6]मध्यमौ । षड्जकैशिक्यां षड्जपञ्चमनिषादाः । पञ्चम्यां

[1] सरिपाः 1 ed. [2] रिधमा 1 ed. [3] षड्जकै 1 ed. [4] अंशा 1 ed. [5] ते युताः (D). [6] पञ्चमो (B).

निषादर्षभपञ्चमाः । गांधारपञ्चम्यामृषाभपञ्चमौ । षाड्ज्यां गांधारपञ्चमौ । धैवत्यामृषभमध्यमधैवताः । नन्दयन्त्यां [1]मध्यमपञ्चमौ । कैशिक्यामृषभवर्जिताः षट् स्वरा अपन्यासाः । सप्तापि स्वरा इति केषांचिन्मतम् । षड्जमध्यमायां सप्त स्वराः । अत्रांशा एवापन्यासाः । त एकोनविंशतिः । अन्ये सप्तत्रिंशत् । मिलिताः षट्पञ्चाशत् । यदि कैशिक्यां[2] सप्तापन्यासास्तदा सप्तपञ्चाशदपन्यासस्वरा भवन्ति ।। ४१-४७- ।।

**अंशाविवादी गीतस्याद्यविदारीसमाप्तिकृत् ।। ४७ ।।**
**संन्यासो [3]अंशाविवाद्येव विन्यासः स तु कथ्यते ।**
**यो विदारीभागरूपपदप्रान्ते ऽवतिष्ठते ।। ४८ ।।**

**अलङ्घनात् तथाभ्यासाद् बहुत्वं [4]द्विविधं मतम् ।**
**पर्यायांशे स्थितं तच्च वादिसंवादिनोरपि ।। ४९ ।।**

**अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लङ्घनात् ।**
**अनभ्यासस्त्वनंशेषु [5]प्रायो लोप्येष्वपीष्यते ।। ५० ।।**
**इषत्स्पर्शो लङ्घनं[6] स्यात् प्रायस्तल्लोप्यगोचरम् ।**
**उशन्ति तदनंशे ऽपि क्वचिद् गीतविशारदाः ।। ५१ ।।**

(क०) अथ संन्यासविन्यासौ[7]—**अंशाविवादी** यस्मिन् प्रयोगे यो ऽंशः तस्याविरोधी संवादीत्यर्थः । **गीतस्याद्यविदारी समाप्तिकृत्** प्रथमखण्डसमापकः । अनेन अपन्यासस्य अतिरिक्तविदारीविषयत्वं विज्ञेयम् । **विन्यासः स तु कथ्यते । स** इति वक्ष्यमाणपरामर्शः । अंशाविवादित्वमुक्तमेव । **विदारी भागरूप-**

[1] ऋषभपञ्चमौ (B). [2] कैशिक्याः (B). [3] ऽंशौ (D). [4] विविधं 1 ed. [5] क. प्रायोऽप्येवं समीक्ष्यते । ख. प्रायोऽप्येष्वपि वक्ष्यते fn. 1 ed. [6] शाल्लङ्घनं (D). [7] संन्यासस्तु (विन्यासौ तु) 1 ed.



**पदप्रान्ते** विदार्या भागरूपाणि वर्णालंकारा[1]दियुक्तस्य रागस्य वाक्यस्थानीयस्य अवयवभूतानि पदवत्पदानि, तेषां स्वर, समुदायात्मनां प्रान्ते **यो ऽवतिष्ठत** इति संबन्धः । विवादिव्यतिरिक्तानां सर्वेषामपि स्वराणां संन्यासविन्या[2]सत्वसंभवेन बहुत्वादेतयोः संख्या नोक्ता ।।

अथ बहुत्वम्—**अलङ्घनादिति** । लङ्घनम् ईषत्स्पर्शःस्वरस्य स्थानप्रयत्नकृतस्वरूपन्यूनता; तदभावो ऽलङ्घनम्; साकल्येन स्पर्श इति यावत् । इदमेकं बहुत्वम् । **अभ्यासाद्** आवृत्तेः । नैरन्तर्येण वा सान्तरत्वेन वा स्वरस्य पुनः पुनरुच्चारणमावृत्तिः । इदमन्यद्बहुत्वम् । **तच्च द्विविधं बहुत्वं पर्यायांशे** वादिभूतांशाद् व्यतिरिक्तांशे, **वादिसंवादिनोरपि स्थितम्** प्रयोक्तव्यमिति शेषः ।।

अथाल्पत्वम्—**अल्पत्वं** चेति । **अनभ्यासाच्च लङ्घनादिति** बहुत्वोक्तलक्षणविपर्ययः । **अनभ्यासस्तु,** आवृत्त्यभावेन सकृदुच्चारणरूपमल्पत्वं तु, **अनंशेषु** वादिपर्यायांशोभयव्यरिक्तेषु स्वरेष्विष्यते; **लोप्येष्वपि** षाडवौडुवकारिषु च **प्राय इष्यते** प्राचुर्येण भवतीत्यर्थः । **ईषत्स्पर्श** इति ग्रन्थस्तु विवृतार्थः ।। ४७-५१ ।।

(सु०) संन्यासं लक्षयति—**अंशाविवादीति** । यः स्वरो [3]ऽंशेन सहाविवादी सन्गीतस्याद्यां विदारीं समापयति स संन्यासः । **मतङ्गेनाप्युक्तम्**—"अंशस्य विवादी [4]यो न भवति, स प्रथमविदार्यामन्ते यदि प्रयुक्तो भवति, तदा संन्यास इत्युच्यते" इति । विन्यासं लक्षयति—**अंशाविवाद्येवेति**

[1] दीत्युक्तस्य 1 ed. [2] सत्वासंभवेन 1 ed. सत्वसंभवे बहु (D). [3] अंशेष्वविवादी सन् विदारीं गीतं समा (B). [4] यथा न भवति प्रथमविदार्यन्ते यदि प्रवृत्तो यदा भवति । तदाऽसौ संन्यास (बृ. दे.).

––अंशेन सहाविवाद्येव यः स्वरो विदार्यंशरूपाणां पदानामन्ते तिष्ठति, स विन्यासस्वरः । **मतङ्गेनाप्युक्तम्––**"एष एव तु संन्यास[1]स्वरो यदा पदान्ते विन्यस्यते, तदा विन्यासः; अत [2]एवांशस्य संवाद्यनुवादी वा पदविदार्यन्ते भवतीत्युक्तम् ।" (बृ. दे. २ प्र 'जातयः' १९७- श्लोकात्परं दृश्यते) इति ।

बहुत्वं कथयति––**अलङ्घनादि**ति । [3]अन्यस्पर्शाद**भ्यासच्च बहुत्वं द्विविधम् । तच्च** बहुत्वं **वादिसंवादिनोः पर्यायः ।** अलङ्घनाद्यस्य[4] बहुत्वं [5]स वादी; तद्यस्याभ्यासात्स संवादीत्यर्थः । **अल्पत्वं** चेति । अल्पत्वमपि **अनभ्यासाल्लङ्घनाच्च** द्विप्रकारम् । अनभ्यासस्तु अंशस्वरादन्येषु स्वरेषु क्वचित् लोप्येष्वपि इष्यते **भरतादिभिः ।** लङ्घनाद् अल्पत्वमित्युक्तम्; तत्र किमिदं लङ्घनमित्यपेक्षायामाह––**ईषत्स्पर्श** इति । सकृदुच्चारणं लङ्घनम् । तत्प्रायो लोप्येषु स्वरेषु भवेत् । अंशस्वरादन्येष्वपि स्वरेषु लङ्घनं भवतीति केषांचिन्मतम् ।। -४७-५१ ।।

**न्यासादिस्थानमुज्झित्वा मध्ये मध्ये ऽल्पतायुजाम् ।**
**स्वराणां या विचित्रत्वकारिण्यंशादिसंगतिः ।। ५२ ।।**
**अनभ्यासैः [6]क्वचित् क्वापि लङ्घनैरेव केवलैः ।**
**कृता सान्तरमार्गः स्यात् प्रायो [7]विकृतजातिषु ।। ५३ ।।**

(क०) [8]अथान्तरमार्गः––**न्यासादिस्थानमि**ति । **न्यासादिस्थानम्** न्यासादीनां न्यासापन्यासविन्याससंन्यासग्रहांशानां

[1] स्वरं अन्ते विन्यसते तदा (B). [2] एव तदुक्तं भवति । अंशस्य संवादी वा भवति (बृ. दे.), अंशस्य संवाद्यनुवादी भबति यदा विदार्यन्ते भवति तदा विन्यास इति (B). [3] अलङ्घनात् अनिस्पर्शा (B). [4] अलङ्घनास्य (B) [5] संवादी यद्यस्या (B). [6] क्वचित् वा यै (D). [7] ख. ङ. विकृतिजा fn. 1 ed.
[8] अथान्तर्मागः 1 ed.



स्थानं गीतस्य अन्त्यप्रदेशा**द्युज्झित्वा** विहाय । **मध्ये मध्य** इति मध्यानां बहुत्वाद्वीप्सायां द्विर्वचनम् । तेनोक्तन्यासादीनां द्वयोर्द्वयोर्मध्य इत्युक्तं भवति । तत्र**ाल्पतायुजा**मुक्तद्विविधाल्पत्वभाजां **स्वराणां या अंशादिसंगतिः** अंशग्रहापन्यासादिभिः सह संगतिरारोहा[1]दिना संघटना **विचित्र[2]त्वकारिणी** स्वरसमुदायात्मकतानवै[3]चित्र्यकारिणी भवति, [4]**क्वचित्केवलैरनभ्यासैः क्वापि लङ्घनैरेव** तत्तद्गीतरक्तिवशात्**कृता**ेत्पादिता **सा ऽन्तरमार्गः स्यात् ।** सो ऽपि **विकृतजातिषु प्रायः** स्यात्; शुद्धजातिषु तु कादाचित्क इत्यर्थः ।। ५२, ५३ ।।

(सु०) अन्तरमार्गं लक्षयति––**न्यासादी**ति । न्यासापन्यासविन्याससंन्यासग्रहांशस्थानं परित्यज्य मध्ये मध्ये ऽल्पानां स्वराणां भङ्गिविशेषकारिणी **क्वचिद् अनभ्यासैः** क्वचित् **केवलैर्लङ्घनैरेव** या विहिता **अंशादिभिः** सह **संगतिः सा अन्तरमार्ग** इत्युच्यते । सा प्रायशो [5]या, विकृता जातयः तन्निष्ठैव भवति ।। ५२, ५३ ।।

**षडवन्ति प्रयोगं ये स्वरास्ते षाडवा मताः[6] ।**
**षट्स्वरं तेषु जातत्वाद् गीतं षाडवमुच्यते ।। ५४ ।।**
**वान्ति यान्त्युडवो ऽत्रेति व्योमोक्तमुडुवं बुधैः ।**
**पञ्चमं तच्च भूतेषु पञ्चसंख्या तदुद्भवा ।। ५५ ।।**
**औडुवो सास्ति येषां च स्वरास्ते त्वौडुवा मताः ।**
**[7]ते संजाता यत्र गीते तदौडुवितमुच्यते ।। ५६ ।।**

[1] वरोहादिना 1 ed. [2] त्वाकारिणी (D). [3] चित्थाकारिणी (D).
[4] सा क्व 1 ed. [5] विकृता जातिः तन्निष्ठेव (B). [6] ङ. स्मृताः fn. 1 ed.
[7] तेषु जातं तु यद्गीतं 1 ed.

**तत्संबन्धादौडुवं च पञ्चस्वरमिदं विदुः ।**

(क०) अथ षाडवम्——**षडवन्तीति । ये षट् स्वरा** शुद्धा विकृता वा **प्रयोगं** जात्यादिक**मवन्ति** रक्षन्ति, प्रवर्तयन्तीत्यर्थः; **ते स्वराः** [1]**षाडवाः ।** 'अव रक्षणे' इत्यस्मा[2]त्पचाद्यच्यवा इति रूपम् । षट् च ते अवाश्चेति कर्मधारयः । **तेषु** षडवेषु **जातत्वात्** [3]**षट्स्वरं गीतं षाडवमुच्यत** इति योजना । तेषु जातत्वादित्यनेन षडवशब्दात् 'तत्र जातः' इत्यणि षाडवमिति रूपम् । अयमर्थः——सप्तसु स्वरेषु लक्षणवशादेकस्मिंस्त्यक्ते, तदितरषट्स्वरप्रयोगप्रपञ्चवशाज्जातं गीतं षाडवव्यपदेशवदिति ॥

अथौडुवितम्——**वान्तीति । यान्तीति** 'वा गतिगन्धनयोः' इत्यस्मान्निष्पन्नस्य वान्तीत्यस्यैव गत्यर्थतोक्तिः । **अत्रोडवो** नक्षत्राणि; [4]**वान्ति** गच्छन्तीति वाधातोः 'सुपि स्थः' इत्यत्र' सुपीति योगविभागात् कप्रत्यय उडुवमिति **व्योमा**काश**मुक्तम् । तच्च उडुवं भूतेषु** पृथिव्यादिमहाभूतेषु गुणबाहुल्येन [5]अभ्यर्हितत्वात् । सृष्टिक्रमप्रातिलोम्येन पृथिव्यादिपरिगणनायां **पञ्चमम् ।** पृथिव्यप्तेजोवाय्वाकाशानीति । **पञ्चसंख्या** पञ्चेति संख्या तदुद्भवा तदुद्भवद्रव्याश्रिता सत्यौडुवीत्युच्यते । उडुवशब्दात् 'तत्र जातः' इत्यणि स्त्रियाम् 'टिड्ढाणञ्' इत्यादिना ङीपि रूपमित्यर्थः ।

**सा चौडुवी** संख्या **येषां** तत्र तत्र नियतस्वरद्वयलोपे सत्यवशिष्टानां प्रयोगप्रवर्तकानां स्वराणा**मस्ति ते** [6]**तु** पञ्च **स्वरा**

[1] षडवाः 1 ed. [2] पचाद्यचि 'अव' इति (D), द् घञि 'अव' इति 1 ed. [3] स्वरगीतं 1 ed. [4] वा 'गति गन्धनयोरितिधातोः' 1 ed. [5] अभ्यर्थितत्वा 1 ed. [6] च (D).



**औडुवा मताः ।** तदस्यास्तीत्यस्मिन्नर्थे शैषिके ऽणि सतीत्यर्थः । **जातं त्विति, तु** शब्देन येषामिति यच्छब्दतात्पर्येणोक्ता एव, न तु संपूर्ण षाडवे वा, शते पञ्चाशन्नयायेन [1]यथाकथंचित्संभवन्तः पञ्चपीति गम्यते । **त औडुवा यत्र गीते संजातास्तद् गीतमौडुवितमुच्यते ।** औडुवशब्दात् 'तदस्य संजातम्' इत्यादिनेतच्प्रत्यये सतीत्यर्थः ॥ **तत्संबन्धादिति । पञ्चस्वरमिदं** गीतम् **तत्संबन्धात्,** तच्छब्देनौडुवाः परामृश्यन्ते, तेषामौडुवानां संबन्धीति संबन्धमात्रविवक्षायाम् 'तस्येदम्' इत्यण्प्रत्यय **औडुवमिति च विदुः** ॥ ५४-५७- ॥

(सु०) षाडवं लक्षयति——**षडवन्तीति ।** षण्मिलित्वा **ये प्रयोगं** जात्यादिक**मवन्ति** रक्षन्ति, **ते षडवाः स्वराः ।** षडवेषु जातं षाडवम् । जातार्थे ऽण्प्रत्ययः । औडुवं लक्षयति——**वान्तीति । उडवः** नक्षत्राणि **वान्ति** यान्त्यस्मिन्नित्युडुवं **व्योम । तच्च भूतेषु पञ्चमम् ।** तेन **पञ्चसंख्या** लक्ष्यते । **औडुवी** पञ्चसंख्या विद्यते येषां स्वराणां त औडुवाः **पञ्च** स्वराः **ते जाता यत्र गीते तदौडुवितमुच्यते ।** जातार्थे इतच्प्रत्ययः । **तत्संबन्धात् । पञ्चस्वरमौडुवं विदुर्बुधा भरतादयः** ॥ ५४-५७- ॥

**क्रमादल्पाल्पतरते षाडवौडुवकारिणोः[2] ॥ ५७ ॥**

**संपूर्णत्वदशायां स्तः पञ्चम्यां तु विपर्ययः ।**
**वचनं विधिरप्राप्ताविहाल्पत्वबहुत्वयोः ॥ ५८ ॥**

**परिसंख्या द्वयोः प्राप्तावेकस्यातिशयाय यत् ।**

[1] संभवतः 1 ed. [2] कारिणौ 1 ed.

(क०) पूर्वं द्विविधस्यापि अल्पत्वस्य सामान्येन प्रायो लोप्यविषयत्वमुक्त्वा इदानीं तस्यैव कदाचिल्लोप्यविशेषव्यवस्थां[1] दर्शयति—**क्रमादिति । अल्पाल्पतरते,** अल्पश्च अल्पतरश्च अल्पाल्पतरौ स्वरौ, तयोः भावौ अल्पाल्पतरते; अत्र द्वंद्वान्ते श्रुतस्य तलः प्रत्येकमभिसंबन्धाः अल्पता अल्पतरता चेति; अल्पता अनभ्यासः, अल्पतरता [2]लङ्घनम्; **संपूर्णत्वदशायां** यासां जातीनां संपूर्णत्वाद्यवस्थात्रयं संभवति, तासां संपूर्णत्वावस्थायामेव ते **षाडवौडुवकारिणोः, क्रमात्**[3] **स्तः;** षाडवकारिणः स्वरस्याल्पता, औडुवकारिणः स्वरस्याल्पतरतेति प्रयोज्ये भवतः। यासां जातीनां तु संपूर्णत्वषाडवत्वाख्यावस्थाद्वयमेव, तासु षाडवकारिणो ऽल्पतैव, औडुवकारिणोऽभावाद् अल्पतरता न स्यात्; [4]यास्तु नित्यपूर्णास्तासु लोप्यस्वराभावा[5]दल्पत्वमनंशविषयमेवेत्यवगन्तव्यम् ।

अल्पत्वप्रयोगे कृतस्य नियमस्य क्वचिद्विधिना बाधं दर्शयति—**पञ्चम्यां त्विति । तु**शब्दः अत्रेतरजातिवैलक्षण्यद्योतनार्थः । **विपर्ययः** अन्यथाभावः । एतदुक्तं भवति—अवस्थात्रयवत्याः पञ्चम्याः पूर्णत्वलक्षणे 'सगमाः स्वल्पका मताः' (अत्रैव श्लो. ७३-) इत्यनेन वक्ष्यमाणेन षड्जमध्यमयोः अषाडवौडुवकारित्वादप्राप्तौ 'क्रमाद्गेन निगाभ्यां च षाडवौडुविता मता' (अत्रैव श्लो. ७४-) इति षाडवकारित्वाद् गांधारे प्राप्तौ च संभूय त्रयाणामल्पत्ववचनेन निषादे ऽपि औडुव[6]कारित्वेन बहुत्वस्य

[1] षेष्ववस्थां 1 ed. [2] अलङ्घनम् (D). [3] णौ क्रमौ 1 ed. [4] परास्तु 1 ed. [5] ग. दन्यतरत्व fn. 1 ed. [6] कारित्वम् । न तत्र बहुत्व 1 ed.



प्राप्तौ 'ऋषभपञ्चमनिषादा अपन्यासाः' इति बहुत्ववचनेन च नियमस्य [1]बाधः, यथा 'प्राङ्मुखो ऽन्नानि भुञ्जीत' इत्यस्य **लक्ष्मीव्रते** 'संपत्कामः पश्चिमाशा[2]मुखाशी' इत्येन ।

ननु—विषयव्यवस्थया सर्वजातिषु नियतस्याल्पत्वस्य पञ्चम्यां कथं विपर्यय इत्यत आह—**वचनं विधिरिति** । इह पञ्चम्यामल्पत्वबहुत्वयोः स्वरधर्मयोरप्राप्तौ; अत्र षाडवौडुवकारिणोः षड्जमध्यमयोरल्पत्वस्य, औडुवकारिणि निषादे बहुत्वस्य [3]चाप्राप्तौ सत्याम्; वचनम्, 'दौर्बल्यं चात्र [4]विज्ञेयं षड्जगांधारमध्यमैः' (ना. शा. २९ अ. श्लो. -१२५) इति षड्जमध्यमयोः साक्षादल्पत्वस्य, 'सनिषादावपन्यासौ' (ना. शा. २८ अ. श्लो. -१२४) इत्यपन्यासलिङ्गेन निषादे बहुत्वस्य च भरतोक्तमेतद्वचनं विधिः 'प्रातः संध्यामुपासीत' इति वचनवत् । विधीयते ऽनेनेति करणे "उपसर्गे घोः किः" इति किप्रत्यये सति विधिरिति रूपम् ।

ननु षड्जमध्यमयोरप्राप्तावल्पत्ववचनं निषादे ऽप्यप्राप्तौ बहुत्ववचनं विधिरस्तु; इह षाडवकारित्वेनाल्पत्वविषये गांधारप्राप्तौ सत्यामपि पुनरल्पत्वविधानं किमितीत्याशयवानाह—**परिसंख्येति । द्वयोः,** इह षाडवौडुवकारिणोर्गांधारनिषादयोर्द्वयोः प्राप्तावल्पत्वधर्मितया **प्राप्तौ** सत्याम्, **एकस्य** तयोरेकस्य गांधारस्य, **अतिशयाय** रक्तिविशेषाय **यद**ल्पत्ववचनम्, **परिसंख्या** सा परिसंख्या भवतीत्यर्थः । यत्तदोः संबन्धस्य नित्यत्वादत्र सेति तच्छब्दाध्याहारः कर्तव्यः ।

[1] बाध इति यथा 1 ed. [2] मुषीतेत्यनेन 1 ed. [3] च प्राप्तौ 1 ed. [4] कर्तव्यं (ना. शा. Gaekwa ed) 1 ed.

परिसंख्योदाहरणं यथा—"इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति । **चयनप्रकरणे** "इमामगृभ्णन्" इति मन्त्रे रशनालिङ्गेन प्राप्तयोः अश्वगर्दभाभिधान्योः "तस्मादश्वाद् गर्दभोऽश्वतरः" इति निकृष्टाया गर्दभाभिधान्या अश्वाभिधानी श्रेयसीत्येवैकस्या अतिशयाय "इमामगृभ्णन्रशनामृतस्य" इति मन्त्रानुवादेन "अश्वाभिधानीमादत्ते" इति यत्त[1]दर्थं शास्त्रवचनं परिसंख्या, तद्वत् । परिसंख्याया इतरपरिवर्जनफलत्वाद् इहापि निषादस्यापि अल्पत्वनिषेधः फलम् ॥ -५७-५८- ॥

(सु०) **क्रमादिति** । **षाडवौडुवकारिणौ** यौ स्वरौ तयोः संपूर्णत्वदशायां **क्रमादल्पाल्पतरते** ज्ञातव्ये । यस्य लोपेन षाडवत्वं तस्य स्वरस्य **संपूर्णत्वदशायाम्** अल्पत्वम्; यस्य च लोपेन [2]औडुवत्वं तस्य संपूर्णत्वदशायाम् अल्पतरत्वम् । **पञ्चम्यां तु** जातौ **विपर्ययः**—यस्य लोपेन षाडवत्वं तस्याल्पतरत्वम्, यस्य लोपेनौडुवत्वं तस्याल्पत्वमिति । [3]**चनमिति** । 'क्रमादल्पाल्पतरते' इत्यनेन**न्यायेन** अल्पत्वबहुत्वयोरप्राप्तौ [4]सत्यां यद्वचनं स विधिः, अप्राप्तप्रापकत्वात् । द्वयोः प्राप्तावेकस्य वचनं परिसंख्या । तद्वचनमेकस्यातिशयाय । विधिपरिसंख्ययोः, लक्षणमुक्तं **भट्टाचार्यैः**—

'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥'

इति ॥ -५७-५८- ॥

**अथ प्रत्येकमेतासां जातीनां लक्ष्म कथ्यते ॥ ५९ ॥**
**षाड्ज्यामंशाः[5] स्वराः पञ्च निषादर्षभवर्जिताः ।**

[1] दर्थशास्त्रं वचनं 1 ed. [2] औडवं (B). [3] बचनमिति (B).
[4] तस्या (B). [5] मंशः (D).



**निलोपात् षाडवं [1]सोऽत्र पूर्णत्वे काकली क्वचित् ॥ ६० ॥**

**सगयोः सधयोश्चात्र संगतिर्बहुलस्तु गः ।**
**गांधारे अंशे न नेर्लोपो मूर्च्छना धैवतादिका ॥ ६१ ॥**

**त्रिधा तालः पञ्चपाणिरत्र चैककलादिकः ।**
**क्रमान्मार्गाश्चित्रवृत्तिदक्षिणा गीतयः पुनः ॥ ६२ ॥**

**मागधी संभाविता च पृथुलेति क्रमादिमाः ।**
**नैष्क्रामिकध्रुवायां च प्रथमे प्रेक्षणे स्मृतः ॥ ६३ ॥**

**विनियोगो द्वादशात्र कला अष्टलघुः[2] कला ।**

(क०) ग्रहादीनां त्रयोदशानां जातिलक्षणानां प्रत्येकमन्वर्थतया स्वरूपं निरूप्य, तानि षाड्ज्यादिषु सप्तसु शुद्ध[3]विकृतान्योन्यसंसर्गजातासु षड्जकैशिक्यादिष्वेकादशसु चेत्यष्टादशसु जातिषु क्रमेण प्रत्येकं यथासंभवं योजयित्वा सप्रस्तारं दर्शयितुमाह —**अथ[4] प्रत्येकमि**त्यादिना । **प्रत्येकम्** एकस्यामेकस्याम् । यथार्थे वीप्सायामव्ययीभावः । तासु [5]**षाड्ज्यां निषादर्षभवर्जिता पञ्च स्वराः** सगमपधा **अंशाः** । ते पर्यायेण वादिनो ग्रहाश्च भवन्तीत्यर्थः । **निलोपात्** निषादपरित्यागात् **षाडवं** षट्स्वरप्रयोगः, कार्यमिति शेषः । **स** निषादः, **अत्र** षाड्ज्यां **पूर्णत्वे** संपूर्णावस्थायां **क्वचित्** षड्जस्य वादित्वे विकृतदशायां **काकली** भवति ।

**सगयोः सधयोश्चात्र संगतिरि**ति । अत्र षड्जस्य गांधारेणैकान्तरितेन तादृशेनैव धैवतेन च यथारक्ति संबन्धः सगसगसधेति

[1] प्रोक्तं C. E. [2] क. ख. ग. घ. अष्टगुरुः fn. 1 ed, (सु). [3] विकृत्यान्योन्य (D). [4] यथा (D). [5] स्याऽऽप्तं(?) 1 ed.

**गसगसधसेति** वा कार्यः; **गस्तु** गांधारस्तु **बहुल** इति । यद्यपि 'निगावन्यविवादिनौ' (अत्रैव ३ प्रकरणे श्लो. ४६-) इति विवादित्वाद् गांधारस्याप्राप्तं बहुत्वम्, तथापि 'गांधारस्य च बाहुल्यम' (ना. शा. २८ अ. श्लो. -६७) इति **मुनिवचनाद्** विधीयत इति तुशब्दार्थः । **गांधारे अंशे न नेर्लोपः** । निषादस्य गांधारसंवादित्वाद् अंशसंवादिनो लोपाभावादिति भावः । एतेनावस्थाद्वयवत्या अप्यस्याः [1]षाड्ज्या गांधारस्यांशत्वे निलोपप्रतिषेधेन षाडवापवादात् पूर्णतावस्थैवेत्युक्तं भवति । अतो ऽस्याः **समपधेषु** चतुष्वशेषु संपूर्णत्वषाडवत्वाख्यावस्थाद्वयं व्यवस्थितम् । षड्जे अंशे ऽपि तस्यैव ग्रहापन्यासत्वात् केवलाशुद्धतायां पूर्णतैवेत्यस्याः[2] पूर्णतायां षडंशाः षाडवत्वे चत्वार इति **मतङ्गोक्ता** दशांशा वेदितव्याः । एवमवस्थापन्नांशसंख्या जात्यन्तरेष्वप्यूह्या । **मूर्च्छना धैवतादिका** अस्यां [3]षाड्जग्रामिकतया धेवतादि**कोत्तरायता** मूर्च्छना, न तु मध्यमग्रामीणा **पौरवी**त्यर्थः ।

[4]अस्यां तालमार्गगीतिविनियोगानां नियमं दर्शयति—— **त्रिधा ताल** इत्यादिना । अत्र षाड्ज्याम्, एककलादिकः, एककलः द्विकलश्चतुष्कल इति त्रिधा च पञ्चपाणिः षट्पितापुत्रकः, प्रयोक्तव्य इति शेषः । क्रमान्मार्गा इत्यनेनैककले पञ्चपाणौ चित्रो मार्गो मागधी गीतिः, द्विकले [5]वार्त्तिको मार्गः संभाविता गीतिः, चतुष्कले दक्षिणो मार्गः पृथुला गीतिरिति क्रमो दर्शितः । अत्र षाड्ज्यामित्युपलक्षणम् । जात्यन्तरेष्वपि तालान्तरेष्वपि

[1] षड्जगान्धार 1 ed. [2] त्यस्यां 1 ed. [3] षड्ज 1 ed.
[4] अस्याः (D). [5] वृत्तिमार्गः 1 ed.



एककलत्वादीनां योजना कर्तव्या, उत्तरत्र 'योक्तास्माभिः कलासंख्या' (अत्रैव श्लो १११) इत्यादिना सामान्येन वक्ष्यमाणत्वात् । तालादीनां लक्षणं तु [1]स्वप्रकरणे वक्ष्यते ।

तथा **प्रथमे प्रेक्षणे नैष्क्रामिकध्रुवायां च विनियोगः स्मृत** इति योजना । प्रथमप्रेक्षणे नाटकादीनां प्रथमाङ्के । **नैष्क्रामिकध्रुवायामिति** । ध्रुवासामान्यलक्षणं तावद् **भरतोक्तम्**——

'यानि चैव निबद्धानि च्छन्दो[2]वृत्तिविधानतः ।
(ना. शा. ३२ श्लो. ३४-)
मुखप्रतिमुखादीनि गीताङ्गान्येव सर्वशः ।।
[3]यदात्मकानि तानि स्युर्ध्रुवासंज्ञानि नाटके ।

इति । तद्विशेषाश्च——

'प्रावेशिकी तु प्रथमा द्वितीयाक्षेपिकी स्मृता ।
प्रासाधिकी तृतीया च चतुर्थी चान्तरा ध्रुवा ।।
[4]नैष्क्रामिकी तु विज्ञेया पञ्चमी तु ध्रुवा बुधैः ।
(ना. शा. ३२ अ. श्लो. २७, २६-)

इति प्रवेशाद्यर्थसूचनादेतासामन्वर्थता ज्ञेया[5] । [6]अपकृष्टे ताडितादयो गुरुलघ्वक्षरोभयप्रायाः त्रिविधा अपि ध्रुवाजातयः प्रावेशिक्यादीनामेवावान्तरभिदाः । एतासां सतालत्वमेव पदमधिकृत्योक्तम् 'सतालं च ध्रुवार्थेषु निबद्धम् सर्वसाधकम्' । (ना॰

[1] स्वरप्रकरणे (D). [2] वृत्तविधा (ना. शा). [3] पदात्मकानि (D).
[4] निष्क्रामिकी च विज्ञेया पञ्चमी वृत्तकर्मणि । (ना. शा. Gaekwad ed.). 1 ed.
[5] ता च ज्ञेया (D). [6] अपकृष्टाद् द्रुतात् सा गीता त्रयो गुरू (D).

शा. ३२ अ. श्लो. -२६) इति। तत्रैव स्मृतम् "अनिबद्धाक्षराणि [1]स्युस्तेनेनप्रभृतीनि च (ना. शा. ३२ अ. श्लो. ३२-) इति। 'तत्राङ्कान्ते निष्क्रमणे भवेत् त्र्यश्रावसानिकी' अस्याः प्रस्तुतार्थ-नियोगः--

"अङ्कान्ते निष्क्रमणे पात्राणां गीयते प्रयोगेषु।
"निष्क्रामोपगतगुणां विद्यान्नैष्क्रामिकीं तां तु"।
(ना. शा. ३१ अ. श्लो. ३१२)

[2]मध्यमोत्तमयोः कार्या चतुरश्रावसानिकी।
अधमानां तु[3] कर्तव्या ध्रुवा त्र्यश्रावसानिकी॥"
(ना. शा. ३२ अ. श्लो. २३)

नैष्क्रामिकी--

'त्र्यश्रे विरामस्त्रिकलश्चतुरश्रे चतुष्कलः।
प्रावेशिक्यां ध्रुवायां तु नैष्क्रामिक्यां तथैव[4] च॥'
(ना. शा. ३२ अ. श्लो. २५०)

इति।

एवं [5]तत्तत्तालविशेषनियतायां **नैष्क्रामिक्यां ध्रुवायां** विनियोगः। ध्रुवापदानामेतज्जात्युक्तस्वरसंदर्भेण योजनं नाटयाङ्गत्वेन। **चकारात्** स्वातन्त्र्येणापि [6]ब्रह्मप्रोक्तपदैरन्यैर्वा शंकरस्तुतावेव विनियोगः समुच्चीयते। **स्मृतः**, भरतादिभिरिति शेषः।

[1] ङ. स्युर्यान्य(नि) जाति कृतानि तु। (ना. शा. Gaekwad ed.) ङ. स्युस्ते तन्नप्रभृतीनि च। र. स्युस्तेनराजगवा इति fn. ना. शा. Gaekwad ed.
[2] अथोत्तमावां 1 ed. [3] मध्याधमानां (ना. शा. का. मा. Gaekwad ed.).
[4] प्रावेशिक्या ध्रुवायास्तु नैष्क्रामिक्यास्तथैव (ना. शा.). [5] यत्तत्ताल 1 ed.
[6] नाटचप्रोक्त 1 ed.



**द्वादशात्र कला** इति। अत्र षाड्ज्यां कलाः कालविशेषा द्वादश अत्रोक्तस्य पञ्चपाणेः यथाक्षरत्वे द्वादशमात्रिकत्वात्। कलाशब्देन प्रतीतस्य कालविशेषस्य ध्रुवादिमार्गभेदाश्रितत्वेन अनेक[1]रूपत्वादिह किंप्रमाणो विवक्षित इत्याकाङ्क्षायामाह--**अष्टलघुः कलेति**। अत्र लघुशब्देन पञ्चलघ्वक्षरोच्चारमितः कालो विवक्ष्यते। तादृशा अष्टौ लघवो यस्याः कलायाः सा ऽष्टलघुः। एतेनात्र कला दक्षिणमार्गाश्रितेति गम्यते। तथा च वक्ष्यति-- 'योक्तास्माभिः कलासंख्या सा दक्षिणपथे स्थिता' (अत्रैव श्लो. १११) इति। अतो ऽत्र चतुष्कलस्य पञ्चपाणेर्द्विरावृत्तिरवगन्तव्या। यदा तु वृत्तिमार्गाश्रयणेन चतुर्विंशतिः कलास्तदा द्विकलपञ्चपाणेश्चतुरावृत्तयः। यदा पुनश्चित्रमार्गाश्रयणेनाष्टाचत्वारिंशत्कलास्तदा यथाक्षरपञ्चपाणेरष्टावृत्तयः। एवं तालान्तरमप्यूह्यम्॥ -५६-६४-॥

(मु०) **अथैतासां जातीनां प्रत्येकं लक्षणं** कथयितुं प्रतिजानीते --**अथेति**। षाड्जीलक्षणं कथयति--**षाड्ज्यामिति**। **षाड्ज्यां** षड्ज गांधारमध्यमपञ्चमधैवता **अंशाः**। तेषां च विकल्पेनांशत्वम्, 'गांधारे अंशे न नेर्लोपः' (अत्रैव श्लो. -६१) इति वक्ष्यमाणत्वात्। **मतङ्गेनाप्युक्तम्** --'इति त्रिषष्टिरंशाः [2]स्युस्तेषामेकैकशो अंशता' (बृ. दे. २ प्र जातय श्लो. -२२६) इति। निषादलोपेन षाडवम्। स निषादः पूर्णत्वे काकली। षड्जगांधारयोः षड्जधैवतयोश्च संगतिः। गांधारस्य बाहुल्यम्। गांधारो यदा अंशस्तदा निलोपात्षाडवं नास्ति। धैवतादिः (उत्तरायता) मूर्च्छना। पञ्चपाणिः षट्पितापुत्रक एककलो द्विकलश्चतुष्कलश्चात्र[3]

[1] रूपत्वे नामैकरूपत्वादिह 1 ed. [3] ये तेषामेकैकशो ऽंशताम् (बृ. दे).
[4] कलाश्चात्र (B).

तालः । यदैककलस्तदा चित्रो मार्गः; यदा द्विकलस्तदा वार्त्तिकः; यदा चतुष्कलस्तदा दक्षिणो मार्ग इति । गीतयः पुनः––यदा चित्रो मार्गस्तदा मागधी; यदा वार्त्तिकस्तदा संभाविता; यदा दक्षिणस्तदा पृथुला । प्रथमे प्रेक्षणे **नैष्क्रामिकध्रुवायां विनियोगः । अत्र द्वादश कलाः । कलायामष्टौ गुरवः** ।। -५९-६४- ।।

**अस्यां षाड्ज्यां षड्जो न्यासः । गांधारपञ्चमौ अपन्यासौ; वराटी दृश्यते । अस्याः प्रस्तारः––**

१. षाड्जी––

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १. | **सा** | **सा** | **सा** | **सा** | **पा** | **निध** | **पा** | **धनि** |
| | तं | | भ | व | ल | ला | | ट |
| २. | **री** | **गम** | **गा** | **गा** | **सा** | **रिग** | **धस** | **धा** |
| | न | य | नां | | बु | जा | | धि |
| ३. | **रिग** | **सा** | **री** | **गा** | **सा** | **सा** | **सा** | **सा** |
| | कं | | | | | | | |
| ४. | **धा** | **धा** | **नी**[1] | **निस** | **निध** | **पा** | **सा** | **सा** |
| | न | ग | सू | | [2]नु | प्र | ण | य |
| ५. | **नी** | **धा** | **पा** | **धनि** | **री** | **गा** | **सा** | **गा** |
| | के | | लि | | स | मु | | द्रू |
| ६. | **सा** | [3]**धां** | **धंनि** | **पां** | **सा** | **सा** | **सा** | **सा** |
| | वं | | | | | | | |
| ७. | **सा** | **सा** | **गा** | **सा** | **मा** | [4]**पा** | **मा** | **मा** |
| | स | र | स | कृ | त | ति | ल | क |
| ८. | **सा** | **गा**[5] | **मा** | **धनि** | **निध** | **पा** | [6]**गा** | **रिग** |
| | पं | | | का | नु | ले | प | |

[1] निध 1 ed. [2] न (D). [3] धा धनि पा 1 ed. [4] मा 1 ed.
[5] सा पस 1 ed, सप मस (D). [6] गरि गा (D).



| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ९. | **गा** | **गा** | **गा** | **गा** | **सा** | **सा** | **सा** | **सा** |
| | नं | | | | | | | |
| १०. | **धां** | **सा** | **री** | **गरि** | **सा** | **मा** | **मा** | **मा** |
| | प्र | ण | मा | | मि | का | | म |
| ११. | **धा** | **नी** | **पा** | **धनि** | **री** | **गा** | **री** | **सा** |
| | दे | | हें | | ध | [1]ना | न | |
| १२. | **रिग** | **सा** | **री** | **गा** | **सा** | **सा** | **सा** | **सा** |
| | लं | | | | | | | |

(क०) अस्यां षाड्ज्यां षड्जो न्यास इति वदतो ऽयं भावः––अस्यां षाड्ज्यां विकृतावस्थासु ग्रहादीनामनियमत्वे ऽपि नामस्वरस्यैव न्यासत्वं [2]शुद्धायां विकृतासु च नियतमिति । गांधारपञ्चमौ अपन्यासाविति विकृतावस्थामाश्रित्योक्तिः । शुद्धतायां तु नामस्वरस्य षड्जस्य [3]च अपन्यासत्वं कर्तव्यम् । यदाह, **मतङ्गः––**'शुद्धत्वे[4] षड्जश्चापन्यासः' (बृ. दे. २ प्र. 'जातय' २५१ श्लोकात्परं दृश्यते) इति । **वराटी दृश्यत** इति । यदा विकृतावस्थायामपि काकलीप्रयोगः तदा वराटी प्रतीयते । [5]अन्यदा वराट्येकदेशप्रतीतिरेवेत्यर्थः । **प्रस्तार** इह कलासु स्वरसंनिवेशः; क्रियत इति शेषः ।

तत्र षड्जग्रामे शुद्धस्वरमेलने प्रथमकलायां तावन्मध्यस्थानस्थितः षड्जः पञ्चलघ्वक्षरोच्चारमितलघुकालश्चतुर्वारमावर्त्यते; ततस्तत्स्थान एव पञ्चमो लघुकाल एकः; ततस्तत्रत्यावेव निषादधैवतौ मिलित्वैकलघुकालौ; पुनः पञ्चम

[1] ना न 1 ed. [2] ग. शुद्धानां fn. 1 ed. [3] वा ऽ पन्या 1 ed, क. न्या. fn. 1 ed. [4] शुद्धत्वं (बृ. दे). [5] अन्यथा (D), अन्यदाचाराद्येकदेश 1 ed.

एकलघुकालः; ततो धैवतनिषादौ मिलित्वैकलघुकालौ; इत्येका कला। अस्यां तं भवललाटेति ब्रह्मप्रोक्तपदाक्षरैः स्वरयोजनाप्रकारस्तु––तं, इति सानुनासिकेन प्रथमः षड्जः तच्छेषतयैव; द्वितीयः; भवाभ्यां तृतीयचतुर्थौ; लेन पञ्चमः; लेन दीर्घेण निषादः; तच्छेषत्वेन धैवतपञ्चमौ; टेन धैवतः; तच्छेषो निषाद इति (१)।

द्विती[1]यस्यां मध्यस्थाने रिर्लघुः; गमौ लघुः; द्वौ गौ लघू; सो लघुः; रिगौ लघुः; धसौ लघुः; धो लघुः। अत्र नयनाम्बुजाधीत्यक्षरयोजना––नेन रिः; येन गः; तच्छेषो मः; सानुनासिकदीर्घेण नेन गः; तच्छेषो गः; बुना सः; दीर्घेण जेन रिः; तच्छेषा गधसाः धिना धः (२)।

तृतीयस्यां रिगौ लघुः; सरिगास्त्रयो लघवः; ततश्चत्वारः षड्जा लघवः। अत्र [2]कमित्यक्षरयोजना––केन सानुनासिकेन रिः; तच्छेषा इतरे स्वराः (३)।

चतुर्थ्यां मध्यस्थानौ धौ लघू; [3]निर्लघुः [4]नितारसौ लघुः; [5]मध्ये निधौ लघुः; पो लघुः; तारे सौलघूः;। नगसूनुप्रणयेत्यक्षरयोजना––नगसूभिर्धनयः; [6]तच्छेषौ निसौ; नुना निः; तच्छेषो धः; प्रणयैः पससाः (४)।

पञ्चम्यां मध्यस्थाने निधपा लघवः; धनी लघुः; रिगसगा लघवः। केलिसमुद्धेत्यक्षरयोजना––केऽक्षरेण निः;

[1] यस्या एक मध्य 1 ed. [2] कमित्येकाक्षर 1 ed. [3] निधौ लघुः 1 ed.
[4] निसौ लघुः 1 ed, [5] पुनर्निधौ 1 ed. [6] तच्छेषा धनिसाः 1 ed.



तच्छेषो धः; लीत्यनेन पः; तच्छेषौ धनी; सेन रिः; मु, इत्यनेन गः; तच्छेषः सः; द्धेन [1]गः। (५)।

षष्ठ्यां मध्ये सो लघुः; मन्द्रे धो लघुः; [2]धनी लघुः; पो लघुः; मध्ये साश्चत्वारो लघवः। वमित्यक्षरयोजना––वेन सानुनासिकेन सः; तच्छेषा इतरे (६)।

सप्तम्यां मध्ये ससगसमपममा[3]लघवः सरसकृततिलकाक्षरैः क्रमेण युक्ताः (७)।

अष्टम्यां मध्ये सो लघुः; [4]गो लघुः; मो लघुः; धनी लघुः; निधौ लघुः; पो लघुः; गो लघुः; रिगौ लघुः। पङ्कानुलेपेत्यक्षरयोजना––सानुनासिकेन पेन सः;[5] तच्छेषौ गमौ; दीर्घेण केन धः; तच्छेषो निः; नुना निः; तच्छेषो धः; लेऽक्षरेण पः; पेन गः; तच्छेषौ रिगौ (८)।

नवम्यां मध्ये गाश्चत्वारो लघवः; साश्चत्वारो लघवः; नमि[6]त्यक्षरयोजना––नेन सानुनासिकेन गः; तच्छेषा इतरे (९)।

दशम्यां मन्द्रे धो लघुः; मध्ये सो लघुः; रिर्लघुः; गरी लघुः; सममममा लघवः। प्रणमामि कामेत्यक्षरयोजना––प्रणमाऽक्षरैर्धसरयः; तच्छेषौ गरी; मिना सः; दीर्घेण केन मः; तच्छेषो मः; ततो मेन नः (१०)।

एकादश्यां मध्ये धनिपा लघवः; धनी लघुः; रिगरिसा लघवः। देहेन्धनानेत्यक्षरयोजना––देकारेण धः; तच्छेषो निः;

[1] सः 1 ed. [2] तच्छेषेषु धनी लघुः 1 ed. [3] मममा 1 ed. [4] पसौ लघुः 1 ed. [5] तच्छेषाः पसमाः 1 ed, [6] त्यक्षरं सानुनासिकम्। तेन गः 1 ed.

हें, इत्यनेन पः; तच्छेषौ धनी; धनानेत्येतैः क्रमेण रिगरयः। तच्छेषः सः (११)।

द्वादश्यां मध्ये रिगौ लघुः; सरिगास्त्रयो लघवः; चत्वारः षड्जा लघवः। लमित्यक्षरयोजना––लेन सानुनासिकेन रिः; शेषाः सर्वेऽपि स्वराः (१२)।

तं भवललाटनयनाम्बुजाधिकं
नगसूनुप्रणयकेलिसमुद्भवम्।
सरसकृततिलकपङ्कानुलेपनं
प्रणमामि कामदेहेन्धनानलम्॥

अत्र––स्वरसंख्याल्पत्वबहुत्वपरिज्ञानाय लिख्यते। षड्जाः षट्त्रिंशत्; ऋषभा द्वादश; गांधारा विंशतिः; मध्यमा अष्टौ; पञ्चमा [1]अष्टौ; धैवताः षोडश; निषादा द्वादशेति मिलिता द्वादशोत्तरं शतम्। अयं प्रस्तारः [2]षड्जांशत्वे। गांधाराद्यंशत्वेपि एवमेवांशबहुत्वादिना सम्यग्विचार्योद्धारो नेयः। गांधाराद्यंशत्वमपि स्वस्थानस्थितानामेव। तेषां स्थायित्वकरणमपि वीणायामुपतन्त्रीणां स्वनादसाम्यापादनमिति रहस्यम्। [3]षाड्ज्यादिसर्वजातिष्वंशस्वरगतो रसो वेदितव्यः॥

इति षाड्जी॥ १॥

**अथार्षभी––**

**आर्षभ्यां तु त्रयो अंशाः स्युर्निषादर्षभधैवताः॥ ६४॥**

[1] धैवताः सप्तदश; निषा 1 ed. [2] षड्जांशत्वे गांधा 1 ed. [3] षड्जादि 1 ed.



**[1]द्विश्रुत्योः संगतिः शेषैर्लङ्घनं पञ्चमस्य च।**
**षाडवं षड्जलोपेन सपलोपादिहौडुवम्॥ ६५॥**

**मूर्च्छना पञ्चमादिश्च ताल[2]श्चच्चत्पुटो मतः।**
**अष्टौ कला भवन्तीह विनियोगस्तु पूर्ववत्॥ ६६॥**

(क०) **आर्षभ्यां त्विति**। **तु**शब्दो ऽस्यां षाड्जीवैलक्षण्यद्योतनार्थः। निषादर्षभधैवतास्त्रयो अंशा ग्रहाश्च स्युः। द्विश्रुत्योर्गांधारनिषादयोः प्रत्येकं [3]शेषैः सरिमपधैः पञ्चभिर्यथायोगं संगतिः संबन्धः। एतेन गांधारनिषादयोः बहुत्वम् इतरेषामल्पत्वमिति च सूचितम्। पञ्चमस्य लङ्घनं च। लङ्घनम् अल्पतरत्वम्। चकाराद् अल्पत्वं च [4]संपूर्णतावस्थायां भवति। षाडवं षड्जलोपेनेत्यादि स्फुटार्थम्॥ ६४-६६॥

(सु०) आर्षभीं लक्षयति––**आर्षभ्यामिति**। **आर्षभ्यां निषादर्षभ**[5]**धैवतास्त्रयो अंशाः**। गांधारनिषादयोः **द्विश्रुत्योः** अन्यैः स्वरैः सह **संगतिः**। **पञ्चमस्य**ेषत्स्पर्शः। षड्जाभावेन षाडवत्वम्। षड्जपञ्चमाभावेन चौडुवितत्वम्। पञ्चमादिः (शुद्धषड्जा) **मूर्च्छना**। चच्चत्पुटस्तालः। अष्टौ कलाः। विनियोगः पूर्ववन्नैष्क्रामिकध्रुवायाम्॥ -६४-६६॥

**अस्यामार्षभ्यामृषभो न्यासः। अंशा एवापन्यासाः। देशीमधुकर्यौ दृश्येते। अस्याः [6]प्रस्तारः––**

[1] ग. द्विश्रुतिः सं 1 ed. [2] श्चञ्चत्पुटो 1 ed. [3] ग. शेषैर्ये सरिमपाधैः fn. 1 ed. [4] संपूर्णावस्था 1 ed. [5] **धैवता** विकल्पेन **त्रयो** (B). [6] अथ षड्जग्रामे शुद्धस्वरमेलने (D).

२. आर्षभी

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १. | **री** | **गा** | **सा** | **रिग** | **मा** | **रिम** | **गा** | **रिरि** |
| | गु | ण | लो | | च | ना | | [1]धि |
| २. | **री** | **री** | **निध** | **निध**[2] | **गा** | **रिम** | **मा** | **पनि**[3] |
| | क | म | न | | न्त | म | म | र |
| ३. | **मा** | **धा** | **नी** | **धा** | **पा** | **पा** | **सा** | **गा** |
| | म | ज | र | म | | | क्ष | य |
| ४. | **नी** | **धनि** | **री** | **गरि** | **सधं** | **गरि** | **री** | **री** |
| | म | जे | | | | | यं | |
| ५. | **री** | **मा** | **गरि**[4] | **सधं** | **सस** | **रिस** | **रिग** | **मम** |
| | प्र | ण | | मा | | | मि | दिव्य |
| ६. | **निध** | **पा** | **री** | **री** | **रिप** | **गरि** | **सधं**[5] | **सा** |
| | म | णि | द | | पं | णा | | म |
| ७. | **रिस** | **रिस** | **रिग** | **रिग** | **मा** | **मा** | **मा** | **गरि** |
| | ल | नि | के | | | | तं | |
| ८. | **पा** | [6]**नी** | **री** | **मा** | **गरि** | **सधं** | **गरि** | **गरि** |
| | भ | व | म | मे | | | | यं |

(क०) **देशीमधुकर्यौ दृश्येते** इति। देशीमधुकर्यौ सदृशरागत्वाद् ऋषभाङ्गत्वेन [7]प्रस्तुताया आर्षभ्या गाने तयोः प्रतीतिर्भवतीति भावः। षड्जग्रामे शुद्धस्वरमेलने प्रथमकलायां मध्ये रिगसास्त्रयो लघवः; रिगावेकः; मश्चैकः; रिमावेकः; [8]ग एकः; ऋषभावेकः; एवमष्टौ लघवः। अत्र गुणलोचनाधीत्य-

[1] धि 1 ed. [2] मा (D). [3] परि (D). [4] रिम गा री (D). [5] सध 1 ed. [6] नी नी मग री सध 1 ed, री री मग री सध (D). [7] प्रसूताया 1 ed. [8] गा 1 ed.



क्षराणि––गुणलोभिः क्रमेण रिगसाः तच्छेषौ रिगौ; चनाभ्यां मरी; तच्छेषा मगरयः; धिना रिः (१)।

द्वितीयस्यां मध्य ऋषभौ द्वौ; निधावेकः; पुनर्निधावेकः; वेकः; ग एकः; रिमावेकः म एकः; पनी एकः; एवमष्टौ लघवः। कमनन्तममरेत्यक्षराणि––कमनै रिरिनयः; तच्छेषा धनिधाः; न्तमाभ्यां गरी; तच्छेषो मः; मराभ्यां मपौ; तच्छेषो निः (२)।

तृतीयस्यां मध्ये मधनिधपपसगा अष्टौ लघवः; मजरमक्षयेत्यक्षराणि––मजरमैर्मधनिधाः; तच्छेषौ पौ; क्षयाभ्यां सगौ (३)।

चतुर्थ्यां मध्ये निरेकः; धनी एकः; रिरेकः; गरी एकः; समन्द्रधावेकः; [1]मध्ये गरी एकः; ऋषभौ द्वौ; एवमष्टौ लघवः। मजेयमित्यक्षराणि––मजे इत्याभ्यां निधौ; तच्छेषा अष्टौ पराः; यमित्यनेनोपान्त्यो रिः; तच्छेषो रिः (४)।

पञ्चम्यां––मध्ये रिरेकः; म एकः; गरी एकः; [2]समन्द्रधावेकः; [3]मध्ये सावेकः; [4]रिसावेकः; रिगावेकः; [5]मावेकः; एवमष्टौ लघवः;। प्रणमामि दिव्येत्यक्षराणि––प्रणाभ्यां रिमौ; तच्छेषौगरी; दीर्घेण मेन सः; तच्छेषा धससरिसाः; मिनारिः; तच्छेषो गः; दिव्याभ्यां मौ (५)।

षष्ठाचां मध्ये निधावेकः; प एकः; ऋषभौ द्वौ; रि पावेकः; गरी एकः; [6]समन्द्रधावेकः; मध्ये स एकः; एवमष्टौ

[1] गरी 1 ed. [2] सधावेकः 1 ed. [3] सावेकः 1 ed. [4] रिगावेकः 1 ed. [5] मौ द्वौ 1 ed, [6] सधावेकः; स एकः 1 ed.

लघवः । मणिदर्पणामेत्यक्षराणि––मेन निः; तच्छेषो धः; णिदाभ्यां परी; तच्छेषो रिः; र्पेण रिः; तच्छेषः पः; दीर्घेण णेन गः; तच्छेषा रिसधाः; मेन सः (६) ।

सप्तम्यां मध्ये रिसौ द्विर्द्वौ; रिगौ द्विर्द्वौ; मध्यमास्त्रयः; गरी एकः; एवमष्टौ लघवः । लनिकेतमित्यक्षराणि––लेन रिः; तच्छेषः सः; निना रिः; तच्छेषः सः; के इत्यनेन रिः; तच्छेषा गरिगममाः; तमित्यनेन मः; तच्छेषौ गरी (७) ।

अष्टम्यां मध्ये पनिरयस्त्रयः; म एकः; गरी एक; [1]समन्द्रधावेकः; मध्ये गरी द्विर्द्वौ; एवमष्टौ लघवः । भवममेयमित्यक्षराणि––भवममे, इत्येतैः पनिरिमाः; तच्छेषा गरिसधगरयः; यमित्यनेन गः; तच्छेषो रिः (८) ।

गुणलोचनादिकमनन्तममरमजरमक्षयमजेयम् ।
प्रणमामि दिव्यमणिदर्पणामलनिकेतं भवममेयम् ॥

अत्रापि स्वरसंख्या प्रस्तारत एव द्रष्टव्या, अंशान्तरप्रस्तारेष्वभ्यूहनीया ॥

इत्यार्षभी ॥ २ ॥

**अथ गांधारी––**

**पञ्चांशा रिधवर्ज्याः[2] स्युर्गांधार्यां संगतिः पुनः ।**
**न्यासांशाभ्यां तदन्येषां धैवतादृषभं व्रजेत्[3] ॥ ६७ ॥**
**[4]रिलोपरिधलोपाभ्यां षाडवौडुविते क्रमात् ।**

[1] सधावेकः; गरी 1 ed. [2] वर्जाः 1 ed. [3] भवेत् (D). [4] रिलोपनिध 1 ed.



**पञ्चमः षाडवद्वेषी निसमध्यमपञ्चमाः ॥ ६८ ॥**

**अंशा द्विषन्त्यौडुवितं कलाः षोडश कीर्तिताः ।**
**मूर्च्छना धैवतादिः स्यात् ताल[1]श्चच्चत्पुटो मतः ॥ ६९ ॥**

**विनियोगो ध्रुवागाने तृतीयप्रेक्षणे भवेत् ।**

(क०) **पञ्चांशा** इति । अस्यां **गांधार्यां रिधवर्ज्याः पञ्च** सगमपनयो **अंशा** ग्रहाश्च **स्युः; संगतिः पुनः** संगतिस्तु, **न्यासांशाभ्यां** न्यासेन गांधारेणांशेन गमपनिसेष्वन्यतमेन, **तदन्येषां** न्यासादुपात्तांशाच्च अन्येषां पर्यायांशानंशरूपाणां च, भवतीति शेषः । **धैवतादृषभं व्रजेदिति** । पूर्णतावस्थायां कदाचिद्धैवतर्षभयोः संगतिः स्यादित्यर्थः । **पञ्चमः षाडवद्वेषी**त्यादिना एतदुक्तं भवति––यदा पञ्चमो ऽशो भवति तदा संपूर्णावस्थैवेति, निसमा यदांशास्तदा संपूर्णषाडवावस्थे द्वे एवेति च । एतेन [2]गांधारांशत्व एवास्यास्तिस्रो ऽवस्था इति ज्ञायते । '**पञ्चमः षाडवद्वेषी निसमध्यमपञ्चमाः; अंशा द्विषन्त्यौडुवितम्**' इत्यस्योपपत्तिः आचार्यवचनं च रक्तगांधार्यां सम्यगभिधास्यते; तत एवावगन्तव्यम् । **कलाः षोडश कीर्तिता** इति । चतुष्कलस्य चच्चत्पुटस्य दक्षिणमार्गे चतुरावृत्तिरुक्ता । **मूर्च्छना धैवतादिः स्यादिति** । अस्यां गांधार्यां माध्यमग्रामिकत्वात्**पौरवी** मूर्च्छनेत्यर्थः । **तृतीयप्रेक्षणे ध्रुवागान** इति ध्रुवासामान्यनिर्देशात् प्रावेशिक्यादिषु यथोचितं विनियोग इत्यर्थः ॥ ६७-७०- ॥

[1] श्चञ्चत्पुटो 1 ed. [2] राङ्गत्व एतस्या 1 ed.

